# वृहदारण्यकोपनिषत्।

परमहंसपरिव्राजकाचार्य्य-श्रीमत् पूज्यपाद शङ्क-
राचार्य्यकृतभाष्यसहिता आनन्दगिरि-
कृतटीकयालङ्कृता च।

---

वि, ए, उपाधिधारिणा
श्रीजीवानन्द-विद्यासागर भट्टाचार्य्येण
संस्कृत्य
प्रकाशिता

---

कलिकाता नगरे
वीडनयन्त्रे मुद्रिता।

इं १८७५ 1875



ॐ परमात्मने नमः ॥

बृहदारण्यकभाष्यारम्भः ॥

भा॰ ॐ नमो ब्रह्मणे नमः । ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशऋषिभ्यो नमो गुरुभ्यः ।

---

ॐ ब्रह्मणे नमः ॥

आनन्दगिरिकृतबृहदारण्यकभाष्यटीका ।

यदविद्यावशाद्विश्वं दृश्यते रसनाहिवत् ।
यद्विद्यया च तद्धानिस्तं वन्दे पुरुषोत्तमम् ॥ १ ॥
नमस्त्रय्यन्तसन्दोहसरसीरुहभानवे ।
गुरवे परपक्षौघध्वान्तध्वंसपटीयसे ॥ २ ॥
भगवत्पादपादाब्जद्वन्द्वं द्वन्द्वनिबर्हणम् ।
सुरेश्वरादिसद्भृङ्गैरवलम्बितमाभजे ॥ २ ॥
बृहदारण्यके भाष्ये शिष्योपकृतिसिद्धये ।
सुरेश्वरोक्तिमाश्रित्य क्रियते न्यायनिर्णयः ॥ ४ ॥

काण्वोपनिषद्विवरणव्याजेनाशेषामेवोपनिषदं शोधयितुकामो भगवान् भाष्यकारो विघ्नोपशमादिसमर्थं शिष्टाचारप्रमाणकं परापरगुरुनमस्काररूपं मङ्गलमाचरति । नमो ब्रह्मादिभ्य इति । वेदो हिरण्यगर्भो वा ब्रह्म । तन्नमस्कारेण सर्वा देवता नमस्कृता भवन्ति तदर्थत्वात्तदात्मकत्वाच्च । एष उ ह्येव सर्वे देवा इति श्रुतेः । आदिपदेन परमेष्ठिप्रभृतयो गृह्यन्ते। यद्यपि तेषामुक्तौ

उषा वा अश्वस्येत्येवमाद्या वाजसनेयिब्राह्मणोपनिषत् । तस्या इयमल्पग्रन्था वृत्तिरारभ्यते संसारनिविवृत्सुभ्यः संसारहेतुनिवृत्तिसाधनब्रह्मात्मैकत्वविद्याप्रतिपत्तये । सेयं ब्रह्मविद्योपनिषच्छब्दवाच्या तत्पराणां सहेतोः संसारस्यात्यन्तावसादनात् ।

---

ब्रह्मान्तर्भावस्तथापि तेष्वत्यादरनिरासार्थं पृथग्ग्रहणम् । चतुर्थी नमोयोगे । नमःशब्दस्त्रिविधः प्रह्वीभावविषयः । ननु ब्रह्मविद्यां वक्तुकामेन किमित्येते नमस्क्रियन्ते सैव हि वक्तव्येत्यत आह ब्रह्मविद्येति । एतेषां तत्सम्प्रदायकर्तृत्वे वंशब्राह्मणं प्रमाणयति । वंशं ऋषिभ्य इति । यद्यपि तत्र पौतिमाष्यादयो ब्रह्मान्ताः सम्प्रदायकर्त्तारः श्रूयन्ते तथापि गुरुशिष्यक्रमेण ब्रह्मणः प्राथम्यमिति तदादित्वमिति भावः । संप्रत्यपरगुरून्नमस्करोति । नमो गुरुभ्य इति । यद्यपि ब्रह्मविद्यासम्प्रदायकर्त्रन्तर्भावादेते प्रागेव नमस्कृतास्तथापि शिष्याणां गुरुविषयादरातिरेककार्यार्थं पृथग्गुरुनमस्करणम् । यस्य देवे परा भक्तिरित्यादि श्रुतेरिति । यदुद्दिश्य मङ्गलमाचरितं तत्प्रतिज्ञातुं प्रतीकमादत्ते । उषा वा इति । एतेन चिकीर्षिताया वृत्तेर्भर्तृप्रपञ्चभाष्येणागतार्थत्वमुक्तम् । तद्धि द्वया हेत्यादिमाध्यन्दिनश्रुतिमधिकृत्य प्रवृत्तम् । इयं पुनरुषा वा अश्वस्येत्यादि काण्वश्रुतिमाश्रित्येति । अथोद्देश्यं निर्दिशति तस्या इति । भर्तृप्रपञ्चभाष्याद्विशेषान्तरमाह । अल्पग्रन्थेति । अस्या ग्रन्थतोऽल्पत्वेऽपि नार्थतस्तथात्वमिति ग्रन्थस्य ग्रहणम् । वृत्तिशब्दो भाष्यविषयः । सूत्रानुकारिभिर्वाक्यैः सूत्रार्थस्य स्वपदानाञ्चोपवर्णनस्य भाष्यलक्षणस्यात्र भावादिति । ननु कर्मकाण्डाधिकारिणो विलक्षणोऽधिकारी न ज्ञानकाण्डे सम्भवति अर्थत्वादेः साधारणत्वाद्वैराग्यादेश्च दुर्वचनत्वात् । न च निरधिकारं शास्त्रमारम्भमर्हतीत्यत आह संसारेति । कर्मकाण्डे हि स्वर्गादिकामः संसारपरवशो नरपशुरधिकारी । इह तु संसाराद्व्यावृत्तिमिच्छवो विरक्ताः । न च वैराग्यन्दुर्वचं शुद्धबुद्धेर्विवेकिनो ब्रह्मलोकान्ते संसारे तत्सम्भवात् ।

उपनिपूर्व्वस्य सदेस्तदर्थत्वात्तादर्थ्याद्ग्रन्थोऽप्युपनिषदुच्यते। सेयं षडध्यायी अरण्येऽनूच्यमानत्वादारण्यकम्। बृहत्त्वात्परिमाणतो बृहदारण्यकम्।

---

उक्तं हि। शोध्यमानन्तु तच्चित्तमीश्वरार्पितकर्म्मभिः। वैराग्यं ब्रह्मलोकादौ व्यनक्त्याशु सुनिर्म्मलमिति।

अतो यथोक्तविशिष्टाधिकारिभ्यो वृत्तेरारम्भः सम्भवतीत्यर्थः। तथापि विषयप्रयोजनसम्बन्धानामभावे कथं वृत्तिरारभ्यते तत्राह। संसारहेत्विति। प्रमातृताप्रमुखः कर्त्तृत्वादिरनर्थः संसारस्तस्य हेतुरात्माऽविद्या तन्निवृत्तेः साधनं ब्रह्मात्मैकत्वविद्या, तस्याः प्रतिपत्तिरप्रतिबद्धायाः प्राप्तिस्तदर्थं वृत्तिरारभ्यत इति योजना। एतदुक्तं भवति। सनिदानानर्थनिवृत्तिः शास्त्रस्य प्रयोजनम्। ब्रह्मात्मैक्यविद्या तदुपायस्तदैक्यं विषयः। सम्बन्धो ज्ञानफलयोरुपायोपेयत्वम्। शास्त्रतद्विषयोर्विषयित्वं, तदारभ्यं शास्त्रमिति। प्रयोजनादिषु प्रवृत्त्यङ्गतयोक्तेष्वपि सर्व्वव्यापाराणां प्रयोजनार्थात्तस्य प्राधान्यम्।

उक्तं हि। सर्व्वस्यैव हि शास्त्रस्य कर्म्मणो वापि कस्यचित्। यावत् प्रयोजनन्नोक्तं तावत्तत् केन गृह्यत इति।

तथाच शास्त्रारम्भौपायिकं प्रयोजनमेव नामव्युत्पादनद्वारा व्युत्पादयति। सेयमिति। अध्यात्मशास्त्रेषु प्रसिद्धा सन्निहिता चात्र ब्रह्मात्मैकत्वविद्या। तन्निष्ठानां सर्व्वकर्म्मसन्न्यासिनां सनिदानस्य संसारस्यात्यन्तनाशकत्वाद्भवत्युपनिषच्छब्दवाच्या। उपनिषदं भो ब्रूहीत्याद्या च श्रुतिः। तस्मादुपनिषच्छब्दवाच्यत्वप्रसिद्धेर्विद्यायास्ततो यथोक्तफलसिद्धिरित्यर्थः। कथन्तस्यास्तच्छब्दवाच्यत्वेऽप्येतावानर्थो लभ्यते तत्राह। उपनिपूर्व्वस्येति। अस्यार्थः। षद्लृ विशरणगत्यवसादनेष्विति स्मर्य्यते। सदेर्धातोरुपनिपूर्व्वस्य किन्नन्तस्य सहेतुसंसारनिवर्त्तकब्रह्मविद्यार्थत्वादुपनिषच्छब्दवाच्या सा भवत्युक्तफलवती। उपशब्दो हि सामीप्यमाह। तच्चासति सङ्कोचके प्रतीचि पर्य्यवस्यति। निशब्दश्च निश्चयार्थस्तस्मादैकात्म्यं निश्चितम्। तद्विद्या सहेतं सं-

तस्यास्य कर्म्मकाण्डेन सम्बन्धोऽभिधीयते। सर्व्वोऽप्ययं वेदः प्रत्यक्षानुमानाभ्यामनवगतेष्टानिष्टप्राप्तिपरिहारोपायप्रकाशनपरः सर्व्वपुरुषाणां निसर्गत एव तत्प्राप्तिपरिहारयोरिष्टत्वात्। दृष्टविषये चेष्टानिष्टप्राप्तिपरिहारोपायज्ञानस्य प्रत्यक्षानुमानाभ्यामेव सिद्धत्वान्नागमान्वेषणा। न चासति

---

सारं सादयतीत्युपनिषदुच्यते। उक्तं हि। अवसादनार्थस्य षदेः सादनादिति। ब्रह्मविद्यैव चेदुपनिषदिष्यते कथन्तर्हि ग्रन्थे तच्छब्दः प्रयुज्यते। न खल्वेकस्य शब्दस्यानेकार्थत्वमन्याय्यमित्याशङ्क्याह। तादर्थ्यादिति। ग्रन्थस्य ब्रह्मविद्याजनकत्वादुपचारात्तत्रोपनिषत्पदमित्यर्थः। यथोक्तविद्याजनकत्वे ग्रन्थस्य किमिति तदध्येतृणां सर्व्वेषां विद्या न भवतीत्याशङ्क्य श्रवणादिपराणामेवारण्यानुवचनादि नियमाधीताक्षरेभ्यस्तज्जन्मेति बृहदारण्यकनामनिर्व्वचनपूर्व्वकमाह। सेयमिति। अथारण्यानुवचनादिनियमाधीतवेदान्तानामपि केषाञ्चिद्विद्यानुपलम्भात् कुतो यथोक्ताक्षरेभ्यस्तदुत्पत्तिरित्यत आह। बृहत्त्वादिति। उपनिषदन्तरेभ्यो ग्रन्थपरिमाणातिरेकादस्य बृहत्त्वं प्रसिद्धमर्थतोऽपि तस्य तदस्ति। ब्रह्मणोऽखण्डैकरसस्यात्र प्रतिपाद्यत्वात्तज्ज्ञानहेतूनां चान्तरङ्गबहिरङ्गाणां भूयसामिह प्रतिपादनात्। अतो बृहत्त्वादारण्यकत्वाच्च बृहदारण्यकम्। न चैतदशुद्धबुद्धेरधीतमपि विद्यामादधाति। कषाये कर्म्मभिः पक्वे ततो ज्ञानमिति स्मृतेरित्यर्थः।

ज्ञानकाण्डस्य विशिष्टाधिकार्य्यादिवैशिष्ट्येऽपि कर्म्मकाण्डेन नियतपूर्व्वापरभावानुपपत्तिलभ्यः सम्बन्धो वक्तव्यः। स च परीक्षकविप्रतिपत्तेरशक्यो विशेषतो ज्ञातुमित्याशङ्क्याह तस्यास्येति। प्रतिज्ञातं सम्बन्धं प्रकटयितुमसिद्धप्रामाण्यभावानां वेदान्तानां सम्बन्धाभिधानावसराभावात् तत्प्रामाण्यं प्रतिपाद्य पश्चात्तेषां कर्म्मकाण्डेन सम्बन्धविशेषवचनमुचितमिति मन्वानस्तत्प्रामाण्यं साधयति। सर्व्वोऽपीति। प्रत्यक्षानुमानाभ्यामित्यागमातिरिक्तप्रमाणोपलक्षणार्थम्। एषोऽर्थोऽध्ययनविध्युपात्तः। सर्व्वोऽपि काण्डद्वयात्मको वेदो मानान्तरानधिगतं यदिष्टोपायादि तज्ज्ञापनपरस्तथा चा-

जन्मान्तरसम्बन्ध्यात्मास्तित्वविज्ञाने जन्मान्तरेष्टानिष्टप्राप्तिपरिहारेच्छा स्यात्। स्वभाववादिदर्शनात्। तस्माज्जन्मान्तरसम्बन्ध्यात्मास्तित्वे जन्मान्तरेष्टानिष्टप्राप्तिपरिहारोपायविशेषे च शास्त्रं प्रवर्त्तते।

---

ज्ञातज्ञापकत्वाविशेषात्तुल्यं प्रामाण्यं काण्डयोरिति। अथवा वेदनं वेदोऽनुभवः स च यज्ञेतरनानायोग्यो स्वर्गादिहीनत्वात्। एतदप्रमेयमिति हि श्रुतिः। स वेष्टानिष्टप्राप्तिपरिहारोपायस्तस्यैव तत्तदात्मनावस्थानात्। यत्र त्वस्याभवदित्यादिश्रुतेः। स च प्रकाशनः सर्व्वप्रकाशनः सर्व्वप्रकाशकत्वात्। तमेव भान्तमनुभाति सर्व्वमिति श्रुतेः। स च परोऽविद्यातत्कार्य्यातीतत्वात्। विरजः पर आकाशादित्यादि श्रुतेः। एवं रूपो वेदपदवेदनीयविशेषणः प्रत्यगात्मैव सर्व्वोऽपि कार्य्यकारणात्मकः प्रपञ्चः। आत्मैवेदं सर्व्वमिति श्रुतेः। तथाच यथोक्तं वस्तुस्वरूपं प्रकाशयन्तो वेदान्ता विधिवाक्यवत् प्रमाणमिति। अथवा प्रत्यक्षादिनानवगतो योऽसाविष्टप्राप्त्याद्युपायो ब्रह्मात्मा तस्य प्रकाशनपरः सर्व्वोऽप्ययं वेदः। तत्रैवाज्ञातत्वात्तत्र कर्म्मकाण्डं कर्म्मानुष्ठानप्रयुक्तबुद्धिशुद्धिद्वारा ब्रह्माधिगताधारादुपकारकम्। विविदिषन्ति यज्ञेनेति श्रुतेः। ज्ञानकाण्डन्तु साक्षादेव तत्रोपयुक्तम्। परमपुरुषस्यौपनिषदत्वश्रवणात्। सर्व्वे वेदा यत्पदमामनन्तीति च श्रुतेः। तद्युक्तं कर्म्मकाण्डवज्ज्ञानकाण्डस्यापि प्रामाण्यमिति। अधिकारिसम्बन्धप्रतिपादनद्वारा ज्ञानकाण्डप्रामाण्यमेव स्फुटयति सर्व्वपुरुषाणामिति। अयमर्थः। सुखं मे स्यात् दुःखं माभूदिति स्वभावतः शास्त्रं विना सर्व्वेषां पुरुषाणामनवच्छिन्नसुखादिमात्रेऽभिलाषोपलम्भात्। तन्मात्रस्य च मोक्षत्वात्. तत्कामिनो ज्ञानकाण्डाधिकारित्वसम्भवात्। तर्हि नु प्रमा स्यादर्थविषयाभावादथ कथमप्रमाणमिति। ननु वेदस्य कार्य्यपरतया प्रामाण्यात् कर्म्मकाण्डवत् काण्डान्तरस्यापि कार्य्यपरतया प्रामाण्यमेष्टव्यमिति नेत्याह। इष्टविषयेति। क्रियाकारकफलेतिकर्त्तव्यतानामन्यतम-

येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैक इत्युपक्रम्यास्तीत्येवोपलब्धव्य इत्येवमादिनिर्णयदर्शनात्। यथा च मरणं प्राप्येत्युपक्रम्य योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथा कर्म्म यथाश्रुतमिति च। स्वयं ज्योतिरित्युपक्रम्य तं विद्याकर्म्मणी समन्वारभेते

---

स्मिन् कार्य्ये समीहितप्राप्त्याद्युपायभूते व्युत्पत्तिकाले प्रत्यक्षादिसिद्धये तथाविधकार्यधियोऽन्यथासिद्धत्वात् तत्र नागमोऽनुसन्धेयः। न हि लोकवेदयोस्तल्लङ्घ्यते। अलौकिके तस्मिन्नव्युत्पत्तिप्रसङ्गात्। न चाव्युत्पन्नानि पदानि बोधकानि अतिप्रसङ्गात्! न च ब्रह्मण्यपि तुल्या व्युत्पत्त्यनुपपत्तिः। तस्मिन् ब्रह्मत्वेनात्मत्वेन च प्रसिद्धेः। तत्सामान्योपाधौ विज्ञानादिपदानां व्युत्पत्तेः सुकरत्वात्। तानि चालौकिकमखण्डं प्रत्यग्ब्रह्म निर्लुठितसामान्यविशेषं लक्षणया बोधयन्ति। तस्मात् ब्रह्मैव वेदप्रमाणकं न कार्यमिति भावः। किञ्च तिष्ठतु वेदान्तप्रामाण्यं कर्म्मकाण्डेऽपि व्यतिरिक्तात्मास्तित्वादौ सिद्धेऽर्थे प्रामाण्यमावश्यकम्। तदभावे तत्प्रामाण्यायोगात्। न हि भविष्यद्देहसम्बन्ध्यात्मसद्भावानधिगमे पारलौकिकप्रवृत्तिविस्रम्भः। तस्मात् कर्म्मकाण्डप्रामाण्यमिच्छता सिद्धेऽर्थे भविष्यद्देहसम्बन्धिन्यात्मनि स्वर्गादौ च तत्प्रामाण्यस्याभ्युपेयत्वात्। कार्य्ये वेदप्रामाण्यानियमात् वेदान्तानामपि स्वार्थे मानत्वं सिद्धमितीत्याह। न चेति। ननु देहान्तरसम्बन्ध्यात्मज्ञानं विनापि विधिवशाददृष्टार्थक्रियासु प्रवृत्तिः स्यादिति नेत्याह। स्वभावेति। यदात्मा देहान्तरसम्बन्धी शास्त्रान्मानान्तराच्च न प्रमितस्तदा भोक्तुरनवगमात् न प्रेक्षापूर्व्वकारी यागाद्यनुतिष्ठेत्। लोकायतस्य व्यतिरिक्तात्मास्तित्वमजानतो जन्मान्तरेष्टानिष्टप्राप्तिहानीच्छया वैदिकक्रियास्वप्रवृत्तेर्दर्शनात्। अतो नातिरिक्तात्मज्ञानं विना साम्परायिके प्रवृत्तिरित्यर्थः। ननु विधयः साधनविशेषं बोधयन्तो नातिरिक्तात्मास्तित्वादौ मानं वाक्यभेदप्रसङ्गादित्यत आह। तस्मादिति। अतिरिक्तात्मधियं विना पारलौकिकप्रवृत्त्यनुपपत्त्या कर्म्म-

पुण्यो वै पुण्येन कर्म्मणा भवति। ज्ञपयिष्यामीत्युपक्रम्य विज्ञानमय इति च व्यतिरिक्तात्मास्तित्वम्। तत्प्रत्यक्षविषयमेवेति चेन्न। वादिविप्रतिपत्तिदर्शनात्।

न हि देहान्तरसम्बन्धिन आत्मनः प्रत्यक्षेणास्तित्वविज्ञाने लोकायतिका बौद्धाश्च नः प्रतिकूलाः स्युर्नास्त्यात्मेति वदन्तः।

न हि घटादौ प्रत्यक्षविषये कश्चिद्विप्रतिपद्यते नास्ति घट इति। स्थाण्वादौ पुरुषादिदर्शनान्नेति चेत्। न। निरूपि-

---

काण्डप्रामाण्यायोगादिति यावत्। विधीनां श्रुत्यर्थाभ्यनुभवार्थत्वमविरुद्धमित्यर्थः। न केवलं विधिभिरेवार्थादाक्षिप्तमतिरिक्तात्मास्तित्वं किन्तु श्रुत्यापि स्वमुखेनोक्तमित्याह। वेदमिति। निर्णयदर्शनादतिरिक्तात्मास्तित्वमिति सम्बन्धः। तत्रैव प्रकृतोपयोगित्वेनोपक्रमोपसंहारान्तरे दर्शयति। यथा चेति। पूर्व्ववदेव सम्बन्धद्योतनार्थं चकारः। उपक्रमोपसंहारैकरूप्यात् कठवल्लीनामतिरिक्तात्मास्तित्वे तात्पर्यमुक्त्वा बृहदारण्यकवाक्यस्यापि तत्र तात्पर्यमाह स्वयमिति। न हि प्रसिद्धजडत्वस्य देहादेः स्वयंज्योतिष्ट्वमिति ज्योतिर्ब्राह्मणगतोपक्रमः। तद्विषयो देहादिव्यतिरिक्तात्मानमधिकरोति। तं प्रेतं विद्याकर्म्मणी पूर्व्वोपार्ज्जिते फलदानायानुगच्छतः। स च गत्वा ज्ञानकर्मानुगुणफलमनुभवतीति शारीरिकब्राह्मणगतोपसंहारोऽपि जन्मान्तरसम्बन्धविषयः। न चात्रैव भस्मीभवतो देहादेर्जन्मान्तरसम्बन्धो युक्तः। तेनात्मा देहादिव्यतिरिक्तो जन्मान्तरसम्बन्धी सिद्धो ब्राह्मणाभ्यामित्यर्थः। अजातशत्रुब्राह्मणे च व्येव त्वा ज्ञपयिष्यामीत्युपक्रम्य व्यतिरिक्तास्तित्वविषयः। न हि प्रसुप्ते देहादौ जिज्ञासास्ति। तत्रैवोपसंहारे य एष विज्ञानमयः पुरुष इति विज्ञानमयविशेषणादतिरिक्तात्मास्तित्वं दर्शितम्। न हि देहादेर्विज्ञानमयत्वमस्ति। तस्मात्तदप्युपक्रमोपसंहाराभ्यां व्यतिरिक्तात्मास्तित्वं गमयतीत्याह। ज्ञपयिष्यामीत्युपक्रम्येति। न चोदाहृतानां वाक्यानामप्रामाण्यम्। तस्मा-

तेरभावात्। न हि प्रत्यक्षेण निरूपिते स्थाण्वादौ विप्रतिपत्तिर्भवति। वैनाशिकास्त्वहमितिप्रत्यये जायमानेऽपि देहान्तरव्यतिरिक्तस्य नास्तित्वमेव प्रतिजानते। तस्मात् प्रत्यक्षविषयवैलक्षण्यात् प्रत्यक्षान्नात्मास्तित्वसिद्धिः। तथानुमानादपि। श्रुत्यात्मास्तित्वे लिङ्गस्य दर्शनत्वात् लिङ्गस्य च प्रत्यक्षविषयत्वान्नेति चेत् न जन्मान्तरसम्बन्धस्याग्रहणात् आगमेन त्वात्मास्तित्वेऽवगते वेदप्रदर्शितलौकिकलिङ्गविशेषैश्च तदनुसारिणो मीमांसकास्तार्किकाश्चाहम्प्रत्ययलिङ्गानि च वैदिकान्येव स्वमतिप्रभवानीति कल्पयन्तो वदन्ति प्रत्यक्षश्चानुमेयश्चात्मेति।

---

माण्यस्योत्पत्तिकसूत्रे हेत्वविशेषादभ्युपेयत्वादिति भावः। यथोक्तात्मन्यहम्प्रत्ययो मानं तत्र देहाकारास्फुरणात् व्यतिरिक्तात्मास्तित्वस्य तेनैव स्फूर्त्त्युपपत्तेः। अतो न तत्र श्रुतिप्रामाण्यमिति शङ्क्यते। तत्रस्यश्चेति। प्रत्यक्षस्य विषयोऽहङ्कारो यस्मिन्निति व्यतिरिक्तात्मास्तित्वमुच्यते। यद्यपि व्यतिरिक्तात्मास्तित्वं तदभिप्रायेणाहं धीगोचरः। तथापि न सा व्यतिरेकमात्मनो गोचरयति। युक्त्यागमविवेकशून्यानामहम्प्रत्ययभाजां व्यतिरेकप्रत्ययप्राप्तौ विपश्चितां विप्रतिपत्त्यभावप्रसङ्गादिति परिहरति। न वादीति। वेदप्रतिकूला वादिनो नास्तिका नैव विवादं कुर्वन्तीत्याह। नहीति। तेषु प्रातिकूल्यसम्भावनार्थं विशेषणं नेत्यादीति वदन्तः सन्तो नोऽस्माकं प्रतिकूला न हि स्युरेवं वदनस्यैवासम्भावादध्यक्षविरोधादिति योजना। प्रत्यक्षविषये विप्रतिपत्त्यभावे दृष्टान्तमाह। न हीति। तत्र व्यभिचारं शङ्कते स्थाण्वादाविति। प्रत्यक्षे धर्मिणि स्थाणुर्वा पुरुषो वेति विप्रतिपत्तेरुपलम्भान्न प्रत्यक्षे विप्रतिपत्त्यभावो व्यभिचारादिति शङ्कार्थः। आदिपदेन पाषाणादौ गजादौ गजादिविप्रतिपत्तिः सङ्गृह्यते। किमयत्नान्ते विप्रतिपत्तिः किंवा तेन विविक्ते प्रतिपन्ने। नाद्योऽङ्गीकारात्। नचैवमात्मनि प्रत्यक्षे विप्रतिपत्तावपि नाग-

सर्व्वथाप्यस्त्यात्मा देहान्तरसम्बन्धीत्येवम्प्रतिपत्तुर्देहान्तरगतेष्टानिष्टप्राप्तिपरिहारोपायविशेषार्थिनस्तद्विशेषज्ञापनाय कर्म्मकाण्डं समारब्धम् ।

---

मात्मेषणा । तेनैव तन्निरासेन तद्विमर्शपादिति मन्वानो द्वितीयं दूषयति । नेत्यादिना । प्रत्यक्षतो विविक्तेऽर्थे विप्रतिपत्त्यभावं प्रपञ्चयति । न हीति । आत्मनः स्थूलदेहव्यतिरिक्तत्वं न प्रत्यक्षमिति प्रतिपाद्य सूक्ष्मदेहव्यतिरिक्तत्वमपि नाहम्प्रत्ययग्राह्यमित्याह । वैनाशिकास्त्विति । ते खल्वहमिति धियमनुभवन्ति । तथापि देहान्तरं स्थूलदेहातिरिक्तं सूक्ष्मम् । तत्र प्रधानभूताया बुद्धेरतिरिक्तस्यात्मनो नास्तित्वमेव पश्यन्ति । तत्राहन्धिया सूक्ष्मदेहातिरिक्तात्मसिद्धिरित्यर्थः । किन्तु प्रत्यक्षस्य विषयो रूपादिस्तद्ग्राहित्वन्तर्हि तत्त्वमप्यात्मनोऽस्ति । अशब्दमस्पर्शमरूपमित्यादिश्रुतेः । न हि रूपादि तदाधारं विना प्रत्यक्षं क्रमते । अतो न देहाद्व्यतिरिक्तात्मास्तित्वस्य प्रत्यक्षात्प्रसिद्धिरित्याह । तस्मादिति । प्रत्यक्षतो विविक्ते विप्रतिपत्त्ययोगात् प्रकृते च तददर्शनादिति यावत् । अथेच्छादयः क्वचिदाश्रिता गुणत्वाद्रूपवदित्यनुमानादतिरिक्तात्मसिद्धिरिति नेत्याह । तथेति । नात्मास्तित्वप्रसिद्धिरिति सम्बन्धार्थस्तथाशब्दः । अयम्भावः । इच्छादीनां स्वातन्त्र्ये स्वरूपासिद्धिः पारतन्त्र्ये परस्पराश्रयत्वमाधारस्येदानीमेव साध्यमानत्वात् ।

कश्चिच्छब्देन चाश्रयमात्रवचने सिद्धसाधनत्वं मनसस्तदाश्रयस्य सिद्धत्वादात्मोक्तौ च दृष्टान्तस्य साध्यविकलतेति । यः प्राणेन प्राणितीत्यादिश्रुत्या प्राणनादिव्यापाराख्यस्य लिङ्गस्यात्मास्तित्वे प्रदर्शितत्वात् । तस्य च व्याप्तिसापेक्षस्य प्रत्यक्षादिसिद्धात्मविषयत्वान्न तस्य सर्वैकगम्यतेति शङ्कते । श्रुत्येति आत्मनः स्वातन्त्र्येण लिङ्गगम्यत्वाभिप्रायेण श्रुत्या लिङ्गं नोपन्यस्तमिति परिहरति । नेति योऽचेतनव्यापारः स चेतनाधिष्ठानपूर्वको यथा रथादिव्यापारः । प्राणनादिव्यापारस्याप्यचेतनव्यापारत्वाच्चेतनाधिष्ठानपूर्व्वकत्वमिति सम्भावनामात्रेण लिङ्गोपन्यासः । न हि निश्चायकत्वेन तदुपन्य-

न त्वात्मन इष्टानिष्टप्राप्तिपरिहारेच्छाकारणमात्मविषयमज्ञानं कर्त्तृत्वभोक्तृत्वस्वरूपाभिमानलक्षणं तद्विपरीतब्रह्मात्मस्वरूपविज्ञानेनापनीतम्। यावद्धि तन्नापनीयते तावदयं कर्म्मफलरागद्वेषादिस्वाभाविकदोषप्रयुक्तः शास्त्रविहितप्रतिषिद्धातिक्रमेणापि प्रवर्त्तमानो मनोवाक्कायैर्दृष्टादृष्टानिष्टसाधनान्यधर्म्मसंज्ञकानि कर्म्माण्युपचिनोति बाहुल्येन। स्वाभाविकदोषबलीयस्त्वात्। ततः स्थावरान्ताधोगतिः।

---

एते आत्मनो जन्मान्तरसम्बन्धस्य प्रमाणान्तरेणाग्रहणात् तद्व्याप्तलिङ्गायोगादित्याह। जन्मान्तरेति। ननु व्यतिरिक्तात्मास्तित्वमागमैकगम्यं चेत् कथन्तत् प्रत्यक्षमनुमेयञ्चेति वादिनो वदन्तीति तत्राह। आगमेन त्विति। येयं प्रेते विचिकित्सेत्याद्यागमेन। को ह्येवान्यादित्यादिवेदोक्तैश्च प्राणनादिभिर्लौकिकैर्लिङ्गविशेषैरात्मास्तित्वे सिद्धे यथोक्तात्मसिद्धिमनुसरन्तो वादिनो वैदिकमेवाहम्प्रत्ययं प्रतिलभमाना वैदिकान्येव च लिङ्गानि पश्यन्तः स्वोत्प्रेक्षानिर्म्मितानि तानीति कल्पयन्तो द्विधात्मानं वदन्ति। वस्तुतस्त्वात्मा यथोक्तश्रुत्यैकसमधिगम्य इत्यर्थः। तस्यास्येत्यादिना काण्डयोः सम्बन्धं प्रतिज्ञाय तादर्थ्येन सिद्धेऽर्थे वेदान्तप्रामाण्यं सर्वोऽपीत्यादिना प्रसाध्याधुना कर्म्मभिः शुद्धबुद्धेर्वैराग्यादिद्वारा ज्ञानोत्पत्तिरिति तयोः सम्बन्धं कथयति। सर्वथापीति। आगमात्मानान्तराद्वा व्यतिरिक्तात्मास्तित्वप्रतिपत्तावपीत्यर्थः। पुरुषार्थोपायविशेषार्थिनो ज्ञापनार्थं कर्म्मकाण्डं समारब्धं चेत्तर्हि तत्रोक्तकर्म्मभिरेव विवक्षितपुमर्थसिद्धेर्वेदान्तारम्भवैयर्थ्यान्न सम्बन्धोक्तिः सावकाशेत्याशङ्क्याह। न त्विति आत्माज्ञानं खल्वनर्थकारणमन्वयव्यतिरेकशास्त्रगम्यं मिथ्याज्ञानकार्यलिङ्गकञ्च। तच्चाकर्त्तृभोक्तृब्रह्मात्मज्ञानादपनेयम्। न हि तत्कर्म्मकाण्डोक्तैरेव कर्म्मभिः शक्यमपनेतुं विरोधाभावात्। तस्मात्तद्बाधनार्थं ज्ञानसिद्धये वेदान्तारम्भसम्भवादुक्तसम्बन्धसिद्धिरर्थः। यदि कर्म्मभिरज्ञानं न निवर्त्तते। मा

कदाचिच्छास्त्रकृतसंस्कारबलीयस्त्वम्। ततो मत्यादिभिरिष्टसाधनं बाहुल्येनोपचिनोति धर्माख्यम्। तद्द्विविधम्। ज्ञानपूर्वकं केवलञ्च। तत्र केवलं पितृलोकादिप्राप्तिफलम्। ज्ञानपूर्वकं देवलोकादिब्रह्मलोकान्तप्राप्तिफलम्। तथाच शास्त्रं आत्मयाजी श्रेयान्न देवयाजी इत्यादि। स्मृतिश्च द्विविधं कर्म्म वैदिकमित्याद्या। साम्ये च धर्म्माधर्म्मयोर्मनुष्यत्वप्राप्तिः। एवं ब्रह्माद्याः स्थावरान्ताः स्वाभाविकाविद्यादिदोषवतो धर्माधर्मसाधनकृता संसारगतिर्नामरूपकर्माश्रया।

---

निवर्त्तिष्ट। सत्येव तस्मिन् कर्म्मवशान्मोक्षः स्यादित्याशङ्क्याह। यावद्वेति। सम्यक्ज्ञानमेव साक्षान्मोक्षहेतुर्न कर्म्म। तत्तु प्रणाल्या तदुपयोगि। न हि सत्येवाज्ञाने मुक्तिः। तस्मिन् सति संसारस्य दुर्वारत्वात्। तस्मात् कर्म्मकाण्डस्य वैराग्यद्वारा प्रवेशो मुक्ताविति भावः। अयमित्यस्मो निर्दिश्यते। रागद्वेषादित्यादिशब्देनाविद्यास्मिताभिनिवेशादयो गृह्यन्ते। दोषाणां स्वाभाविकत्वं शास्त्रानपेक्षत्वम्। अपिकारः सम्भावनार्थः। दृष्टत्वमन्वयव्यतिरेकसिद्धत्वम्। अदृष्टत्वं शास्त्रमात्रगम्यत्वम्। अधर्मोपचयप्राचुर्ये हेतुमाह। स्वाभाविकेति। अथ वैराग्यार्थं कर्म्मफलमुपन्यस्यन्नधर्म्मफलमाह। तत इति।

उक्तं हि। शारीरजैः कर्मदोषैर्याति स्थावरतां नर इति। तत् किम्पुण्योपचयाभावादनवकाशं स्वर्गादिफलमिति नेत्याह। कदाचिदिति।

शास्त्रीयसंस्कारस्य बलीयस्त्वे फलितमाह। तत इति। आदिशब्दो वाग्देहविषयः। फलविभागं वक्तुं कर्म भिनत्ति। तद्द्विविधमिति। तस्य मुक्तिफलत्वं निरसितुं फलं विभजते। तत्रेति। केवलमिष्टादिकर्मेति शेषः। कर्मणा पितृलोक इति हि वक्ष्यति तस्मिन्फले नानात्वमभिप्रेत्यादिशब्दः। विद्यया देवलोक इति श्रुतिमाश्रित्याह। ज्ञानेति। देवलोको यस्यादिर्ब्रह्मलोको यस्यान्तस्तस्यार्थस्य प्राप्तिरेव फलमस्येति विग्रहः। उक्ते-

तदेवेदं व्याकृतं साध्यसाधनरूपं जगत्प्रागुत्पत्तेरव्याकृतमासीत्। स एष बीजाङ्कुरादिवदविद्याकृतः संसार आत्मनि क्रियाकारकफलाध्यारोपलक्षणोऽनादिरनन्तोऽनर्थ इत्येतस्मा-

---

ऽर्थे तात्पर्यं श्रुतिं प्रमाणयति। तथा चेति। सर्वत्र परमात्मभावनापुरःसरं नित्यं कर्मानुतिष्ठन्नात्मयाजी। कामनापुरःसरं देवान्यजमानो देवयाजी। तयोर्मध्ये कतरः श्रेयानिति निर्णयः कृतः। अतो ज्ञानपूर्वकं कर्म देवलोकस्य कामनापूर्वं पितृलोकस्य प्रापकमित्यर्थः।

प्रवृत्तञ्च निवृत्तञ्च द्विविधं कर्म वैदिकम्।
इह चामुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते॥
निष्कामं ज्ञानपूर्वन्तु निवृत्तमभिधीयते।

इत्यादिमनुस्मृतिञ्चात्रैवोदाहरति। स्मृतिश्चेति। धर्माधर्मयोरेकैकस्य फलमुक्त्वा मिश्रयोः फलमाह। साम्येति। उक्तं हि। उभाभ्यामु पुण्यपापाभ्यां मानुष्यं लभतेऽवश इति। त्रिविधमपि कर्मफलं वैराग्यार्थं सङ्क्षिप्योपसंहरति। एवमिति। सा चाविद्याकृतत्वादनर्थरूपेत्याह। स्वाभाविकेति। विचित्रकर्मजन्यतया तस्या वैचित्र्यमाह। धर्माधर्मेति। तर्हि धर्माधर्माभ्यामेव तन्निर्माणसम्भवात् कृतमविद्ययेत्यत आह। नामेति। तेषां सूक्ष्मावस्थाऽविद्या तदावस्थनेति यावत्। धर्मादेरविद्यायाश्च निमित्तत्वोपादानत्वाभ्यामुपयोग इति भावः। ननु संसारगतेराविद्यकत्वमयुक्तम्। प्रत्यक्षादिप्रतिपन्नत्वात्तन्नामरूपाभ्यामेव व्याक्रियतेति। श्रुतौ च नामरूपात्मनो जगतोऽभिव्यक्तिश्रवणात्। न च प्रामाणिकस्याविद्याकृतत्वमत आह। तदेवेदमिति।

जगतः स्वरूपमात्मा तत्राध्यस्तत्वादात्मतत्त्वेऽनभिव्यक्तौ प्रत्यक्षादिना श्रुत्या चाभिव्यक्तमिव दृश्यमानमपि अनभिव्यक्तमेवेति न तस्याविद्याकृत-

द्विरक्तस्याविद्यानिवृत्तये तद्विपरीतब्रह्मविद्याप्रतिपत्त्यर्थोपनिषदारभ्यते। अस्य त्वश्वमेधकर्मसम्बन्धिनो विज्ञानस्य प्रयोजनं येषामश्वमेधेनाधिकारस्तेषामस्मादेव विज्ञानात्तत्फलप्राप्तिः।

विद्यया वा कर्मणा वा तद्धैतल्लोकजिदेवेत्येवमादिश्रुतिभ्यः कर्मविषयत्वमेव विज्ञानस्येति चेत् न। योऽश्वमेधेन यजते य उ चैनमेवं वेदेति विकल्पश्रुतेर्विद्याप्रकरणे चाम्ना-

---

त्वश्रुतिरिति भावः। अविद्याकृतां संसारगतिमनुभाषते। स एष इति। अविद्याकृतत्वे कथमनादित्वमित्याशङ्का तस्य प्रवाहरूपेणेत्याह। बीजाङ्कुरादिवदेवेति। तर्हि कादाचित्कतया साधनादिकमन्तरेण नाशो भविष्यतीत्याशङ्क्याह। क्लिष्टेति। चैतन्यरूपादात्मनि तस्याविद्याकृतत्वानुपपत्तिमाशङ्क्य नानारूपत्वेन ततो विलक्षणत्वादेकरूपे युक्तं तस्य कल्पितत्वमित्याह। अनादिरिति। अनादेरपि संसारस्य प्रागभाववन्निवृत्तिः स्यादिति चेत्तथापि ब्रह्मविद्यामन्तरेण नाशो नास्तीत्याह। अनन्त इति। प्रयत्नतो हेयत्वं द्योतयितुमनर्थ इति विशेषणम्। नैसर्गिक इति पाठे कारणरूपेण तत्त्वमुन्नेयम्। यस्मात् कर्म संसारफलं न मोक्षं फलयति तस्मात् सनिदानसंसारनिवर्त्तकात्मज्ञानार्थत्वेन साधनचतुष्टयसम्पन्नमधिकारिणमधिकृत्य वेदान्तारम्भः सम्भवतीत्युपसंहरति। इत्येतस्मादिति। यद्युक्तज्ञानार्थत्वेनोपनिषदारम्भो ब्रह्म वा इदमग्र आसीदित्यारब्धव्यम्। तस्मादारभ्य ज्ञानोपदेशात् उषा वा अश्वस्येत्यारम्भस्तु न युक्तः साक्षादत्र तदनुक्तेरित्याशङ्क्याश्वदारभ्योपनिषदारम्भेऽभीष्टफलमभिधित्समानः प्रयोजनमश्वमेधफलमाह। अस्य त्विति। राजयज्ञत्वादश्वमेधस्य तदनधिकारिणामपि ब्राह्मणादीनान्तत्फलार्थिनामस्मादेवोपासनात्तदाप्तिरिति मत्वा तदुपासनोक्तिरित्यर्थः।

किमत्र नियामकमित्याशङ्क्य विकल्पश्रवणम्। केवलस्यापि ज्ञानस्य साधनत्वं सूचयति इत्यर्थतो विकल्पश्रुतिमुदाहरति। विद्ययेति। तत्फलाप्राप्ति-

नात् कर्मान्तरे च सम्पादनदर्शनाद्विज्ञानात्तत्फलप्राप्तिरस्तीत्यवगम्यते। सर्वेषाञ्च कर्म्मणां परं कर्म्माश्वमेधः। समष्टिव्यष्टिप्राप्तिफलत्वात्।

तस्य चेह ब्रह्मविद्याप्रारम्भे आम्नानं सर्वकर्म्मणां संसारविषयत्वदर्शनार्थम्। तथा च दर्शयिष्यति फलमशनायो

---

रिति पूर्वेण सम्बन्धः। तत्रैव श्रुत्यन्तरमाह। तत्रेत्यादिति। तदेतत् प्राणदर्शनं लोकप्राप्तिसाधनमिति यावत्। आदिशब्देन केवलोपास्त्या ब्रह्मलोकाप्तिवादिन्यः श्रुतयो गृह्यन्ते। अश्वमेधे यदुपासनं तस्याप्यश्वादिवत् तच्छेषत्वेन फलवत्त्वात्। न स्वातन्त्र्येण तद्वत्त्वं अङ्गेषु स्वतन्त्रफलाभावादिति शङ्कते। कर्म्मविषयत्वमिति। ज्ञानस्य क्रत्वर्थत्वन्दूषयति। नेति। सूर्वत्रार्थतो दर्शितां विकल्पश्रुतिमत्र हेतुतया स्वरूपतोऽनुक्रामति। न योऽश्वमेधेनेति। स सर्वं पाप्मानन्तरति तरति ब्रह्महत्यामिति सम्बन्धः। ज्ञानकर्मणोस्तुल्यफलत्वस्य न्याय्यत्वादिति शेषः। उपास्तिफलश्रुतेरर्थवादत्वमाशङ्क्याश्वमेधवदुपास्तेरपि कर्मत्वात् विहितत्वात् कर्मप्रकरणादुव्युत्थितत्वाच्च नैवमित्याह। विद्येति। फलश्रुतेरर्थवादत्वाभावे हेत्वन्तरमाह। कर्मान्तरे चेति। अश्वमेधातिरिक्ते कर्मण्ययं वा लोकोऽग्निरित्यादौ चित्याग्न्यादावेतल्लोकादिसम्पादनस्य दर्शनात् न फलश्रुतेरर्थवादतेत्यर्थः। अश्वमेधोपासनं न क्रत्वर्थं किन्तु पुरुषार्थम्। तत्र चाधिकारोऽश्वमेधक्रत्वनधिकारिणामपीत्येतावदेवेष्टं चेदुपासने कर्मप्रकरणस्थेऽपि तल्लाभात्; विद्याप्रकरणे नास्याध्ययनमर्थवदित्याशङ्क्याह। सर्वेषाञ्चेति। परत्वे हेतुः समष्टीति अनुवृत्तव्यावृत्तरूपहिरण्यगर्भप्राप्तिहेतुत्वात्तस्य श्रेष्ठतेत्यर्थः। तस्य पुरुषार्थत्वेऽपि प्रकृते किमायातन्तदाह। तस्य चेति।

यदा क्रतुप्रधानस्याश्वमेधस्योपास्तिसहितस्यापि संसारफलत्वं तदान्येषामग्निहोत्रादीनां संसारफलं किं वाच्यमित्यस्मिन् कर्म्मराशौ बन्धहेतौ विरक्ताः साधनचतुष्टयविशिष्टा ज्ञानमपेक्षमाणास्तदुपाये श्रवणे

मृत्युभावम्। न नित्यानां संसारविषयफलत्वमिति चेत्। न। सर्वकर्मफलोपसंहारश्रुतेः। सर्वं हि पत्नीसम्बद्धं कर्म। जाया मे स्यादेतावान् वै काम इति निसर्गत एव सर्वकर्मणां काम्यत्वन्दर्शयित्वा पुत्रकर्मापरविद्यानाञ्चायं लोकः पितृलोको देवलोक इति फलन्दर्शयित्वा त्र्यात्मकताञ्चान्त उपसंहरति त्रयं वा इदं नाम रूप कर्मेति। सर्वकर्मणां फलं व्याकृतं संसार एवेति। इदमेव त्रयं प्रागुत्पत्तेस्तर्ह्यव्याकृतमासीत्।

---

द्वावेव सर्वकर्मसन्न्यासपूर्वके कथमन्तरेऽविद्याविषयतौ श्रुतिरुपासनां विद्यारम्भेऽभिदधातीति। तेनोषा वा अश्वस्येत्याद्युपनिषदारम्भो युक्तोऽस्य विशिष्टाधिकारिसमर्पकत्वादित्यर्थः। उपासनफलस्य संसारगोचरत्वमेव कुतः सिद्धमत आह। तथाचेति। अशनया हि मृत्युः स वै नैव रेमे सोऽबिभेदिति भयादिति भयारत्यादिश्रवणात् उपास्तियुक्तक्रतुफलस्य स्वस्य बन्धमध्यपातित्वाद्विशिष्टोऽपि क्रतुर्न मुक्तये पर्य्याप्नोतीत्यर्थः। उक्ते सर्वकर्मणां बन्धफलत्वे नित्यनैमित्तिकानां न तत्फलत्वम्। तेषां विध्युद्देशे फलाश्रुतेर्नष्टाश्वदग्धरथन्यायेन मुक्तिफलत्वलाभादिति शङ्कते। न नित्यतामिति। एतावान् वै काम इति सर्वकर्मणामविशेषेण फलसम्बन्धश्रवणात्। पश्वादेश्च काम्यफलत्वस्य तद्विध्युद्देशश्रवणात् सिद्धत्वात्। कर्मणा पितृलोक इतिवाक्यस्य नित्यादिकर्मफलविषयत्वान्मोक्षफलत्वाशङ्केति परिहरति। नेति। उक्तमेव स्फुटयति। सर्वं हीति। पत्नीसम्बन्धे मानमाह। जायेति। तथापि कथं कर्मणः सर्वस्य कामोपायत्वं तत्राह। एतावान् वै काम इति। कथन्तर्हि तेषां फलभेदो लभ्यते तत्राह। पुत्रेति। अथैवं। फलविभागे कथं समष्टिव्यष्टिप्राप्तिफलत्वमश्वमेधस्योक्तमत आह। त्र्यात्मकताञ्चेति। अस्याध्यायस्यावसाने कर्मफलस्य हिरण्यगर्भरूपतां त्रयमित्याद्या श्रुतिरुपसंहरिष्यतीत्यर्थः। उपसंहारश्रुतेस्तात्पर्य्यमाह।

तदेव पुनः सर्वप्राणिकर्मवशाद्व्याक्रियते बीजादिव वृक्षः। सोऽयं व्याकृताव्याकृतरूपः संसारोऽविद्याविषयः। क्रियाकारकफलात्मकतयात्मरूपत्वेनाध्यारोपितोऽविद्ययैव मूर्त्तामूर्त्ततद्वासनात्मकः। अतो विलक्षणोऽनामरूपकर्मात्मकोऽद्वयो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि क्रियाकारकफलभेदादिविपर्ययेणावभासते। अतोऽस्मात् क्रियाकारकफलभेदस्वरूपा[illegible]मिति साध्यसाधनरूपाद्विरक्तस्य कामादिदोषकर्मबीजभूताविद्यानिवृत्तये रज्ज्वामिव सर्पविज्ञानापनयाय ब्रह्मविद्यारभ्यते

---

सर्व्वकर्मणामिति। कर्मफलं संसारश्चेत् प्राक्तदनुष्ठानात्तदभावान्मुक्तानां पुनर्बन्धः स्यादित्याशङ्क्याह। इदमेवेति। तर्हि तस्यामवस्थायामिति यावत्। तस्य पुनर्व्याकरणे कारणमाह। तदेवेति।

व्याकृताव्याकृतात्मनः संसारस्य च प्रामाणिकत्वेन सत्यत्वमाशङ्क्याविद्याकृतत्वेन तन्मिथ्यात्वमुक्तं स्मारयति। सोऽयमिति। स एव हि भ्रान्तिविषयो न प्रामाणिकस्तत् कुतोऽस्य सत्यतेत्यर्थः। कथमस्यात्मन्यद्वये कूटस्थे प्राप्तिरित्याह। क्रियेति। समारोपे मूलकारणमाह। अविद्ययेति। आत्मन्यविद्यारोपितं द्वैतमित्यत्र द्वे वा वै ब्रह्मणो रूपे मूर्त्तञ्चैवामूर्त्तञ्चेत्यादिवाक्यं प्रमाणयति। मूर्त्तेति। नन्वात्मन्यारोपो नोपपद्यते। तस्य नित्यशुद्धबुद्धमुक्तस्वभावस्य द्वैतविलक्षणत्वात्। असति सादृश्येऽध्यासासिद्धेरत आह। अत इति। संसाराद्वैलक्षण्यमेव प्रकटयति। अनात्मेति। आदिपदेनान्येऽपि विपर्य्ययभेदाः सङ्गृह्यन्ते। आरोपे प्रमिणोमि करोमि भुञ्जे चेत्यनुभवं प्रमाणयति। अवभासत इति। आत्मन्यध्यासः सादृश्याद्यभावेऽपि नभसि मलिनत्वादिवद्यतोऽनुभूयतेऽतः सविलासाविद्यानिवर्त्तकब्रह्मविद्यार्थत्वेनोपनिषदारम्भः सम्भवतीत्युपसंहरति। अत इति। एतावदित्यनर्थोक्तिः। तत्त्वज्ञानादज्ञाननिवृत्तौ दृष्टा-

तत्र तावदश्वमेधविज्ञानाय उषा वा अश्वस्येत्यादि । तत्राश्वविषयमेव दर्शनमुच्यते प्राधान्यादश्वस्य । प्राधान्यञ्च तन्नामाङ्कितत्वात् क्रतोः प्राजापत्यत्वाच्च ॥

---

न्तमाह । रच्छामिवेति । एवमुपनिषदारम्भे स्थिते प्राथमिकब्राह्मणयोरवान्तरतात्पर्यमाह । तत्र तावदिति । आद्यस्य पुनरवान्तरतात्पर्यं दर्शयति । तत्रेति । नन्वश्वमेधस्याङ्गबाहुल्ये कस्मादश्वस्याङ्गविषयमेवोपासनमुच्यते । तत्राह । प्राधान्यादिति । तदेव कथमिति तदाह । प्राधान्यञ्चेति । प्रजापतिदेवताकत्वाच्चाश्वस्य प्राधान्यमित्याह । प्राजापत्यत्वाच्चेति । प्रतीकमादाय व्याचष्टे । उषा इत्यादिना ।

# वाजसनेयिब्राह्मणोपनिषदारम्भः।

## ॐ उषा वा अश्वस्य मेध्यस्य शिरः।

---

[१] उषा वा इति ब्राह्मो मुहूर्त्त उषाः। वैशब्दः स्मारणार्थः प्रसिद्धं कालं स्मारयति। शिरः प्राधान्यात्। शिरश्च प्रधानं शरीरावयवानाम्। अश्वस्य मेध्यस्य मेधार्हस्य यज्ञीयस्य उषाः शिर इति सम्बन्धः। कर्म्माङ्गस्य पशोः संस्कर्त्तव्यत्वात् कालादिदृष्टयः शिर आदिषु क्षिप्यन्ते। प्राजापत्यत्वञ्च प्रजा-

---

१ स्मरणार्थत्वमेव निपातस्य स्फुटयति। प्रसिद्धमिति। शास्त्रीये लौकिके च व्यवहारे प्रसिद्धो ब्राह्मो मुहूर्त्तस्तं कालमिति यावत्। सत्यपि शिरःशब्दप्रयोगादिनावयवेषु तस्य प्राधान्यं हेतुमाह। प्राधान्यादिति तथापि कथमत्र तच्छब्दप्रयोगस्तत्राह। शिरश्चेति। आश्वमेधिकाश्वशिरस्युषसो दृष्टिः कर्तव्येत्याह। अश्वस्येति। कालादिदृष्टिरश्वाङ्गे किमिति क्षिप्यतेऽश्वाङ्गदृष्टिरेव तेषु किन्न स्यादित्याशङ्क्याह। कर्माङ्गस्येति। अङ्गेष्वनङ्गमिति क्षेपे हेत्वन्तरमाह। प्राजापत्यत्वञ्चेति। अश्वस्य सेत्स्यतीति शेषः तत्र हेतुः। प्रजापतीति। ननु कालादिदृष्टयोऽश्वावयवेष्वारोप्यन्ते न तस्य प्रजापतित्वं क्रियते तत्राह। कालेति। कालाद्यात्मको हि प्रजापतिः। तथा च यथा प्रतिमायां विष्णुत्वकरणं तद्दृष्टिः तथा कालादिदृष्टिरश्वावयवेषु तस्य प्रजापतित्वकरणम्। अश्वमेधाधिकारी हि सत्यश्वे कर्मणो वीर्यवत्तरत्वार्थं कालादिदृष्टिरश्वावयवेषु कुर्यात्। तदनधिकारी तु सर्वा-

सूर्य्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः सम्वत्सर आत्मा अश्वस्य मेध्यस्य।

पतिदृष्ट्यध्यारोपणात्। काललोकदेवतात्वाध्यारोपश्च प्रजापतित्वकरणं पशोः। एवं रूपो हि प्रजापतिः। विष्णुत्वादिकरणमिव प्रतिमादौ।

सूर्य्यश्चक्षुः शिरसोऽनन्तरत्वात् सूर्य्याधिदैवतत्वाच्च। वातः प्राणो वायुस्वाभाव्यात्। व्यात्तं विवृतं मुखमग्निर्वैश्वानरः। वैश्वानर इत्यग्नेर्विशेषणम्। वैश्वानरो नामाग्निर्विवृतमुखमित्यर्थो मुखस्याग्निदैवतत्वात्। संवत्सर आत्मा संवत्सरो द्वादशमासस्त्रयोदशमासो वा। आत्मा शरीरम्। कालावयवानाञ्च संवत्सरः शरीरं शरीरस्यात्मा। मध्यं ह्येषा-

---

भावे स्वात्मानमश्वइत्वयित्वा स्वशिरः प्रभृतिषु कालादिदृष्टिकरणेन प्रजापतित्वं सम्पाद्य प्रजापतिरस्मीति विज्ञानात्तद्भावं प्रतिपद्येतेति भावः।

चक्षुषि सूर्य्यदृष्टौ हेतुमाह। स शिरस इति। उषसोऽनन्तरत्वं सूर्य्ये दृष्टम्। चक्षुषि च शिरसोऽनन्तरत्वन्दृश्यते। तस्मात्तत्र तद्दृष्टिर्युक्तेत्यर्थः। तत्रैव हेत्वन्तरमाह। सूर्य्येति। आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशदिति श्रुतेः। चक्षुषि सूर्य्योऽधिष्ठात्री देवता। तेन सामीप्यात्तत्र तद्दृष्टिरित्यर्थः। अन्तःप्राणवायुदृष्टौ चलनस्वाभाव्यं हेतुः। व्यात्ते विदारिते मुखे भवत्वग्निदृष्टिस्तथापि पर्यायोपादानं व्यर्थमित्याशङ्क्य क्रव्यादादिव्यावृत्त्यर्थं विशेषणमित्याह। वैश्वानर इत्यग्नेरिति। अग्निर्वाग्भूत्वा मुखमाविशदिति श्रुतिमाश्रित्य मुखे तद्दृष्टौ हेतुमाह। मुखस्येति। अधिकमासमङ्गीकृत्य त्रयोदशमासो वेत्युक्तम्। शरीरे संवत्सरदृष्टिरित्यत्रात्मत्वं हेतु-

## द्यौः पृष्ठमन्तरीक्षमुदरं पृथिवी पाजस्यम् ।

---

मङ्गानामात्मेति श्रुतेः । अश्वस्य मेध्यस्येति सर्व्वत्रानुषङ्गार्थं पुनर्वचनम् ।

द्यौः पृष्ठं ऊर्द्ध्वत्वसामान्यात् । अन्तरिक्षमुदरं सुषिरत्वसामान्यात् । पृथिवी पाजस्यं पादस्यम् । पाजस्यमिति वर्णव्यत्ययेन पादासनस्थानमित्यर्थः । दिशश्चतस्रोऽपि पार्श्वे पार्श्वेन दिशां सम्बन्धात् । पार्श्वयोर्दिशाश्च सङ्ख्यावैषम्यादयुक्तमिति चेत् । न । सर्व्वमुखत्वोपपत्तेरश्वस्य पार्श्वाभ्यामेव

---

माह । कालेति । आत्मा हस्तादीनामङ्गानामिति शेषः । कालावयवानां संवत्सरस्यात्मत्ववदङ्गानां शरीरस्यात्मत्वे प्रमाणमाह । मध्यं हीति । पुनरुक्तेरर्थवत्त्वमाह । अश्वस्येति ।

पृष्ठे द्युलोकदृष्टौ हेतुमाह । ऊर्द्ध्वत्वेति । उदरेऽन्तरिक्षदृष्टौ निमित्तमाह । सुषिरत्वेति । पादा अस्यन्ते यस्मिन्निति व्युत्पत्तिमाश्रित्य विवक्षितमाह । पादेति । अश्वस्य हि खुरे पादासनत्वसामान्यात्पृथिवीदृष्टिरित्यर्थः । पार्श्वयोर्दिक्चतुष्टयदृष्टौ हेतुमाह । पार्श्वेनेति । द्वे पार्श्वे चतस्रश्च दिशस्तत्र कथं तयोस्तदारोपणं द्वाभ्यामेव द्वयोः सम्बन्धादिति शङ्कते । पार्श्वयोरिति । यद्यपि द्वे दिशौ द्वाभ्यां पार्श्वाभ्यां सम्बध्येते तथाप्यश्वस्य प्राङ्मुखत्वे प्रत्यङ्मुखत्वे च दक्षिणोत्तरयोस्तन्मुखत्वे च प्राक्प्रतीच्योर्दिशोस्ताभ्यां सम्बन्धसम्भवात् तत्र तद्दृष्टिरविरुद्धेति परिहरति । नेत्यादीना । तदुपपत्तौ चाश्वस्य चरिष्णुत्वं हेतुकर्त्तव्यम् । पार्श्वादिष्ववान्तरदिशामारोपे पार्श्वदिक्सम्बन्धो हेतुः । ऋतवः संवत्सरस्याङ्गानि । हस्तादीनि च देहस्यावयवाः । तस्मात्तद्दृष्टिरङ्गेषु कर्त्तव्येत्याह । ऋतव इति । अस्ति मासादीनां संवत्सरसम्बन्धित्वम् । अस्ति च

दिशः पार्श्वे अवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्द्धमासाश्च पर्व्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो मांसानि।

---

सर्वदिशां सम्बन्धाद्दोपः। अवान्तरदिश आग्नेय्याद्याः पर्शवः पार्श्वास्थीनि। ऋतवो... मासाश्चार्द्धमासाश्च पर्व्वाणि सन्धयः सन्धिसामान्यात्। अहोरात्राणि प्रतिष्ठा बहुवचनात् प्राजापत्यदैवपित्र्यमानुषाणि प्रतिष्ठाः पादाः प्रतितिष्ठन्त्येतैरिति। अहोरात्रैर्हि कालात्मा प्रतितिष्ठति अश्वस्य पादैः। नक्षत्राण्यस्थीनि शुक्लत्वसामान्यात्। नभो नभःस्था मेघा अन्तरिक्षस्योदरत्वात्ते मांसानि उदकरुधिरसेचनसामान्यात्।

---

शरीरसन्धित्वम्पर्व्वणाम्। अतस्तेषु मासादिदृष्टिरित्याह। सन्धीति। युगसहस्राभ्यां प्राजापत्यमेकमहोरात्रम्। अयनाभ्यान्दैवम्। पक्षाभ्यां पैत्रम्। षष्टिघटिकाभिर्मानुषमिति भेदः। प्रतिष्ठाशब्दस्य पादविषयकत्वं व्युत्पादयति। प्रतितिष्ठन्तीति। पादेष्वहोरात्रदृष्टिसिद्ध्यर्थमुक्तमुपपादयति। अहोरात्रैरिति। अस्थिषु नक्षत्रदृष्टौ हेतुमाह। शुक्लत्वेति। नभःशब्देनान्तरिक्षं किमिति न गृह्यते मुख्ये सत्युपचारायोगादित्याशङ्का पुनरुक्तिम्परिहर्त्तुमित्याह। अन्तरिक्षस्येति। उदकं सिञ्चन्ति मेघा मांसानि रुधिरम्। अतः सेक्तृत्वसामान्यान्मांसेषु मेघदृष्टिरित्याह। उदकेति।

ऊवध्यं सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्व्वता ओषधयश्च वनस्पतयश्च लोमानि उद्यन्नु पूर्व्वार्द्धो निम्लोचन् जघनार्द्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाक् ॥ १

ऊवध्यमुदरस्थमर्द्धजीर्णमशनं सिकता विश्लिष्टावयवसामान्यात् । सिन्धवः । स्यन्दनसामान्यान्नद्यो गुदा नाड्यो बहुवचनाच्च । यकृच्च क्लोमानश्च हृदयस्याधस्ताद्दक्षिणोत्तरौ मांसखण्डौ । क्लोमान इति नित्यम्बहुवचनमेकस्मिन्नेव पर्व्वताः काठिन्यादुच्छ्रितत्वाच्च । ओषधयश्च क्षुद्राः स्थावरा वनस्पतयो महान्तो लोमानि केशाश्च यथासम्भवम् । उद्यन्नुद्गच्छन् भवति भविताऽऽमध्याह्नादश्वस्य पूर्व्वार्द्धो नाभेरूर्द्धमित्यर्थः । निम्लोचन्नस्तं यन्नामध्याह्नाज्जघनार्द्धोऽपरार्द्धः पूर्व्वापरत्वसाधर्म्यात् । यद्विजृम्भते गात्राणि विनामयति विक्षिपति तद्विद्योतते विद्योतनं मुखघनविदारणसामान्यात् । यद्विधूनुते गात्राणि

---

अश्वजठरविपरिवर्त्तिन्यर्द्धजीर्णे सिकतादृष्टौ हेतुमाह । विश्लिष्टेति । किमिति गुदशब्देन पायुरेव न गृह्यते शिराग्रहणे हि मुख्यार्थातिक्रमः स्यात् तत्राह । बहुवचनाच्चेति । चकारोऽवधारणार्थः । यद्यपि बह्व्यः शिरास्योऽर्थान्तरमपि गुदशब्दमर्हति तथापि स्यन्दनसादृश्यात् तास्वेव सिन्धुदृष्टिरिति तासामिह ग्रहणमिति भावः । कुतो मांसखण्डयोर्द्वित्वमेकत्र बहुवचनाद्बहुत्वप्रतीतेरित्याशङ्क्य दारा इतिवद्बहूक्तेर्गतिमाह । क्लोमान इति । तयोः पर्वतदृष्टौ हेतुद्वयमाह काठिन्यादिना । क्षुद्रत्वसाध-

**अहर्वा अश्वम्पुरस्तान्महिमान्वजायत तस्य पूर्वे समुद्रे योनि रात्रिरेनम्पश्चान्महिमान्वजायत तस्यापरे समुद्रे योनिरेतौ वा अश्वं महिमानावभितः सम्बभूवतुः।**

---

कम्पयति ततस्तनयति गर्जनशब्दसामान्यात्। यन्मेहति मूत्रं करोत्यश्वस्तद्वर्षति वर्षणन्तत् सेचनसामान्यात्। वागेव शब्द एवास्याश्वस्य वागिति नात्र कल्पनेत्यर्थः। १॥

अहर्वा इति सौवर्णराजतौ महिमाख्यौ ग्रहावश्वस्याग्रतः पृष्ठतश्च स्थाप्येते तद्विषयमिदन्दर्शनम्। अहः सौवर्णो ग्रहो दीप्तिसामान्यात्। वै अहरश्वम्पुरस्तान्महिमान्वजायतेति कथं अश्वस्य प्रजापतित्वात्। प्रजापतिर्हि आदित्यादि लक्षणेऽङ्का लक्ष्यते। अश्वं लक्षयित्वाजायत इत्यमनुविद्योतते विद्युदिति

---

स्योदोषधिदृष्टिर्लोमसु, महत्त्वसामान्याद्वनस्पतिदृष्टिश्चाश्वकेशेषु कर्त्तव्येत्याह। यथा सम्भवमिति। पूर्वत्वसामान्यान्मध्याह्नात्प्रागवस्थादित्यदृष्टिरश्वस्य नाभेरूर्द्ध्वभागे कर्त्तव्येत्याह। उद्यन्नित्यादिना। अपरत्वसादृश्यादश्वस्य नाभेरपरार्द्धभागे मध्याह्नादनन्तरभाव्यादित्यदृष्टिः कार्य्येत्याह। निम्लोचन्नित्यादिना। विजृम्भत इत्यादौ प्रप्रत्ययार्थो न विवक्षितः। विजृम्भणं मुखं विदारयति। विद्योतनं पुनर्मेघविदारणम्। अतो विद्योतनदृष्टिर्जृम्भणे कर्त्तव्येत्याह। मुखेति। स्तनयतीति स्तनितमुच्यते तद्दृष्टिर्गात्रकम्पे कर्त्तव्येत्यत्र हेतुमाह। गर्जनेति। मूत्रकरणे वर्षदृष्टौ कारणमाह। सेचनेति। अश्वस्य हेषितशब्दे नाध्यारोपणमित्यतो न सादृश्यं वक्तव्यमित्याह। नात्रेति। १।

अश्वावयवेषु कालादिदृष्टीर्विधायाश्वप्रजापतिरूपं विवक्षित्वा कश्चित्कालरूपं गृहीत्वा तात्पर्य्यमाह। अहर्वेत्यादिना। महाहवनीयद्रव्याधारौ

हयो भूत्वा देवानवहद् वाजी गन्धर्वानर्वासुरा-
नश्वो मनुष्यान् समुद्र एवास्य बन्धुः समुद्रो योनिः ॥२॥
प्रथमं ब्राह्मणम् ॥ १ ॥

---

यहत्। तस्य ग्रहस्य पूर्व्वं पूर्व्वः समुद्रे समुद्रो योनिर्विभक्तिव्यत्ययेन। योनिरित्यासादनस्थानम्। तथा रात्रौ राजतो ग्रहो वर्णसामान्याज्जघन्यत्वसामान्याद्वा। एनमश्वम्पश्चात्पृष्ठतो महिमान्वजायत तस्यापरे समुद्रे योनिः। महिमा महत्त्वम्। अश्वस्य हि विभूतिरेषा। यत्सौवर्णो राजतश्च ग्रहावुभयतः स्थाप्येते तावेतौ वै महिमानौ महिमाख्यौ ग्रहावश्वमभितः सम्बभूवतुः। उक्तलक्षणावेव सम्भूतावित्यमसावश्वो महत्त्वयुक्त इति पुनर्वचनं स्तुत्यर्थम्। तथा च हयो भूत्वेत्यादि स्तुत्यर्थमेव। हयो हिनोतेर्गतिकर्म्मणो विशिष्टगतिरित्यर्थः। जातिविशेषो वा देवानवहत् देवत्वमगमयत् प्रजापतिः-

---

पात्रविशेषौ अग्रतः पृष्ठतश्चेति अश्वस्थापनात् प्रागूर्द्ध्वं चेति यावत्। प्रसिद्धा तावदह्नो दीप्तिः सौवर्णे च पात्रे सास्ति। अतस्तस्मिन्नहर्दृष्टिरिति दर्शनं विभजते। अहरिति। अश्वसंज्ञपनात् पूर्व्वं यो महिमाख्यो ग्रहः स्थाप्यते स चेदहर्दृष्ट्योपास्यते कथं सोऽश्वमन्वजायतेति पश्चादश्वस्य तज्जन्मवाचोयुक्तिरिति शङ्कते। अहरश्वमिति। नायमश्वादर्थोऽनुशब्दः किन्तु लक्षणार्थः। तथाचाश्वस्य प्रजापतिरूपत्वात् तं लक्षयित्वा ग्रहस्य यथोक्तस्य प्रवृत्तेरुपदेशादश्वमन्वजायतेत्यविरुद्धमिति परिहरति। अश्वस्येति। तदेव स्फुटयति। प्रजापतिरिति। काव-

त्वाद्देवानां वा वोढा भवतु ॥ ननु निन्देव वाहनत्वम् । नैष दोषो वाहनत्वं स्वाभाविकमश्वस्य स्वाभाविकत्वात् उत्कृष्टाश्रयप्राप्तिर्देवादिसम्बन्धोऽश्वस्येति स्तुतिरेवैषा । तथा वाज्यादयो जातिविशेषाः । वाजी भूत्वा गन्धर्व्वानवहदित्यनुषङ्गः । तथार्वा भूत्वाऽसुरान् । अश्वो भूत्वा मनुष्यान् । समुद्र एवेति परमात्मा बन्धुर्बन्धनम्बध्यतेऽस्मिन्निति । समुद्रो योनिः कारणमुत्पत्तिम्प्रति । एवमसौ शुद्धयोनिः शुद्धस्थितिरिति स्तूयते ।

---

लोकदेवतात्मा प्रजापतिरश्वात्मना हूयमानोऽत्राहर्दृष्ट्या दृष्टेन महिम्ना लक्ष्यते । तथा चाश्वमन्वजायतेति श्रुतिरविरुद्धेत्यर्थः । तुशब्दो न पश्चाद्भावीत्यत्र दृष्टान्तमाह । स्तनमिति । यदा स्तनं स्तनयित्वा तस्यापि विद्युद्द्योतते तदा स्तनयतु विद्योतते चेति प्रयुज्यते । तथात्राप्यनुशब्दो न पश्चादर्थ इत्यर्थः । यत्र च स्थाने ग्रहः स्थाप्यते तत्पूर्वसमुद्रदृष्ट्या ध्येयमित्याह । तस्येति । पूर्व्वत्वमत्र सादृश्यम् । कथं सप्तमी प्रथमार्थे वोच्यते । छन्दस्यर्थानुसारेण व्यत्ययसम्भवादित्याह । विभक्तीति । यथा सौवर्णे ग्रहेऽहर्दृष्टिरुपदिष्टा तथा राजते ग्रहे रात्रिदृष्टिः कर्त्तव्येत्याह । तथेति । अस्ति हि चन्द्रातपवत्त्वाद्रात्रेः शौक्ल्यं अस्ति च राजतस्य ग्रहस्य तदुक्तम् । तत्र रात्रिदर्शनमित्याह । वर्णेति । रजतं सुवर्णाज्जघन्यम् । जघन्या रात्रिः । अतो वा सादृश्यात्तत्र रात्रिदृष्टिरित्याह । जघन्येति । प्रजापतिरूपं प्रकृतमश्वं कथयित्वा तत्सङ्कल्पनात्पश्चादस्य प्रवृत्तिन्दर्शयति । एनमिति । तदासादनस्थाने पश्चिमसमुद्रदृष्टिर्विधेयेत्याह । ग्रहेति । कथमेतौ ग्रहौ महिमाख्यावुक्तौ महत्त्वोपेतत्वादित्याह । महिमेति । अथाश्वविषयन्दर्शनमादिश्य ग्रहविषयन्तदादिशतो वाक्यभेदः स्यादित्याह । अश्वस्येति । किमत्र नियामकमित्याशङ्क्य पुनरुक्तिरिति मत्वाह । तावित्यादिना । वैशद्यार्थं कथयति । एतेति । वाक्यशेषोऽप्यत्रानुगुणो भवतीत्याह । तथा चेति । हयशब्दनिष्पत्तिपुरःसरन्तदर्थमाह । हय इति

नैवेह किञ्चनाग्र आसीत् मृत्युनैवेदमावृतमासीत्।

अप्सु योनिर्वा अश्व इति श्रुतेः। प्रसिद्ध एव वा इति समुद्रो योनिः ॥ २ ॥ इति तृतीयाध्यायस्य प्रथमं ब्राह्मणम् ॥ १ ॥

अथाग्नेरश्वमेधोपयोगिकस्योत्पत्तिरुच्यते। तद्विषयदर्शनविवक्षयैवोत्पत्तिः स्तुत्यर्था॥ नैवेह किञ्चनाग्र आसीत्। इह संसारमण्डले किञ्चन किञ्चिदपि नामरूपप्रविभक्तविशेषं नैवासीत् न बभूव। प्रागुत्पत्तेर्मनआदेः किं शून्यमेव बभूव शून्यमेव स्यात्। नेवेह किञ्चनेति श्रुतेः। न कार्यं कारणं वासीदुत्पत्तेश्च। उत्पद्यते हि घटः। अतः प्रागुत्पत्तेर्घटस्य नास्तित्वम्। ननु

---

वाज्यादिशब्दानाञ्जातिविशेषवाचित्वादत्रापि तदेव ग्राह्यमिति पक्षान्तरमाह। जातीति। देवानान्देवत्वप्रापकत्वं कथमस्येत्याशङ्क्याह। प्रजापतित्वादिति। अश्वं स्तोतुमारभ्य कल्पान्तरोक्त्या तन्निन्दावचनमनुचितमिति। शङ्कते। नन्विति। उपक्रमविरोधो नास्तीति परिहरति। नेत्यादिना। समुत्पद्य भूतानि द्रवन्त्यस्मिन्निति व्युत्पत्त्या परमगम्भीरस्येश्वरस्य समुद्रशब्दतामाह। परमात्मेति तत्र योनित्वमुत्पादकत्वम्। बन्धुत्वं स्थापकत्वम्। समुद्रत्वं विलापकत्वमिति भेदः। अथ परमात्मयोनित्वादिवचनमुपास्यास्वस्य कोपयुज्यते तत्राह। एवमिति। श्रुत्यन्तरानुरोधेन समुद्रो योनिरित्यत्र समुद्रशब्दस्य रूढिमनुजानाति। अप्सु योनिरिति। २। इति तृतीयस्य प्रथमं ब्राह्मणम्।

अश्वादिदर्शनोक्त्यनन्तरं अग्निदर्शनं वक्तुं ब्राह्मणान्तरमवतारयति। अथेति। नैवेहेत्यादौ तद्दृष्टिर्नास्तीति चेत्सत्यम्। तत्राग्नेर्जन्म वक्तुं भूमिका क्रियत इत्याह। अग्नेरिति। वायोरग्निरित्यादौ प्रसिद्धं तज्जन्मेति चेत्सत्यम्। तद्विशेषस्यात्र जन्मोक्तिरित्याह। अश्वमेधेति। दर्शने विधित्सिते

कारणस्य न नास्तित्वं मृत्पिण्डादिदर्शनात् यत्रोपलभ्यते तस्यैव नास्तिता अस्तु कार्यस्य न तु कारणस्योपलभ्यमानत्वात् । न । प्रागुत्पत्तेः सर्वानुपलम्भात् ।

अनुपलब्धिश्चेदभावो हेतुः सर्वस्य जगतः प्रागुत्पत्तेर्न कारणं कार्यं चोपलभ्यते । तस्मात् सर्वस्यैवाभावोऽस्तु । न । मृत्युनैवेदमावृतमासीदिति श्रुतेः । यदि हि किञ्चिदपि

---

किञ्चाग्नोत्यर्थेति चेत्तत्राह । तद्विषयेति । अग्निदर्शनस्य विधानुमितस्य विध्यर्थमुपास्याग्निस्तुतिफला तदुत्पत्तिरिष्टा शुद्धजन्मत्वात् । उत्कृष्टत्वेनायमुपास्यो राजादिवदित्यर्थः । तात्पर्यमुक्त्वा वाक्यमादायाक्षराणि व्याचष्टे । नैवेत्यादिना । नामरूपाभ्यां विभक्तो विशेषो यस्मिन्निति बहुव्रीहिः । अत्र शून्यवादी लब्धावकाशो विमृश्य परेष्टमुपक्रमेण स्वपक्षमाह । किमित्यादिना । कार्यस्य प्रागसत्त्वे हेत्वन्तरमाह । उत्पत्तेश्चेति । विमतम्प्रागसदुत्पद्यमानत्वात् यन्नैवं न तदेवं यथा परेष्टं ब्रह्मेत्यर्थः । हेत्वसिद्धिं शङ्कित्वोत्तरमाह । उत्पद्यते हीति । घटपटवत् कार्यमात्रस्योपलक्षणार्थम् । उक्तमनुमानं निगमयति । अत इति । तत्र तार्किको ब्रूते । नन्विति । यदुक्तं न कार्यं कारणं वासीदिति तत्र भागे बाधो भागे चानुमतिरित्यर्थः । कार्यस्यापि कथम्प्रागसत्त्वोपपत्तिरित्याशङ्क्याह । यत्रेति । एते नानुमानस्य सिद्धसाध्यतोक्ता । कार्यवत् कारणस्यापि प्रागसत्त्वं किं न स्यादित्याशङ्कोक्तहेत्वभावान्नैवमित्याह । नन्विति । शून्यवाद्याह । न प्रागुत्पत्तेरिति । विमतम्प्रागसद्योग्यत्वे सति तदानुपलब्धत्वात् सम्मतवन्न चासिद्धो हेतुः श्रुतेरनतिशङ्क्यत्वात् । तद्विरोधे त्वनुपलब्धेराभासत्वादित्यर्थः ।

तदेव प्रपञ्चयति अनुपलब्धिश्चेदिति कार्यवत् कारणस्यापि प्रागसत्त्वे प्राप्ते सिद्धान्तयति नेत्यादिना । नैवेत्यादिश्रुतिरव्याकृतनामरूपादिविषया न प्रागसत्त्वं कार्यकारणयोराह । अन्यथा वाक्यशेषविरोधादित्यर्थः । श्रुतिं विवृणोति । यदि हीति । द्वयोरसत्त्वे का वाचो युक्तेरनुपपत्तिस्तत्राह ।

नासीत्। येनाव्रियते यच्चाव्रियते तदा नावक्ष्यन् मृत्युनैवेदमावृतमिति। न हि भवति गगनकुसुमच्छन्नो बन्ध्यापुत्र इति॥ ब्रवीति च मृत्युनैवेदमावृतमासीदिति। तस्माद्येनावृतं कारणेन यच्चावृतं कार्यं प्रागुत्पत्तेस्तदुभयमासीच्छ्रुतेः प्रामाण्यात्। अनुमेयत्वाच्च। अनुमीयते च प्रागुत्पत्तेः कार्यकारणयोरस्तित्वम्। कार्यस्य हि सतो जायमानस्य कारणे सत्युत्पत्तिदर्शनात्। असति चादर्शनात्॥ जगतोऽपि प्रागुत्पत्तेः कारणास्तित्वमनुमीयते घटादिकारणादिकारणास्तित्ववत्। घटादिकारणस्याप्यसत्त्वमेवानुपमृद्य मृत्पिण्डादिकं घटाद्यनुत्पत्तेरिति चेन्न। मृदादेः कारणत्वात्। मृत्सुवर्णादि हि तत्र कारणं घटरुचकादेर्न पिण्डाद्याकारविशेषः। तदभावे तदभावात्॥

---

न हीति। मा तर्हि वाक्यमेवाभूदित्याशङ्क्याह। ब्रवीति चेति। मृत्युनेवेत्यादिवाक्यमुपसंहरति। तस्मादिति। श्रुतेः प्रामाण्यादिति। तत्प्रामाण्यस्य प्रमाणलक्षणे स्थितत्वादिति यावत्। परकीयेऽनुमाने श्रुतिविरोधमभिधायानुमानविरोधमाह। अनुमेयत्वाच्चेति। कार्य्यकारणयोः सत्त्वस्यानुमेयतया तदसत्त्वमनुमातुमशक्यम्। उपजीव्यविषयतया सत्त्वानुमानस्य बलीयस्त्वादित्यर्थः। कार्य्यकारणयोः सत्त्वानुमानं प्रतिज्ञाय प्रथमं कारणसत्त्वमनुमिनोति। अनुमीयते चेत्यादिना। कार्य्यस्य हीति। विमतं सत्पूर्वं कार्य्यत्वात् कुम्भवदित्यर्थः। नानुपमृद्य प्रादुर्भावादिति न्यायेन दृष्टान्तस्य साध्यवैकल्यं चोदयति। घटादीति। न तावदसिद्धो घटः स्वकारणमुपमृद्गाति। असतोऽकारकत्वात् सिद्धस्य तूपमर्दकत्वेनासत्पूर्वकत्वमिति कुतः साध्यविकलतेत्याह। नेति। किन्त्वान्वयिद्रव्यमेव सर्वत्र कारणं न पिण्डादिविशेषोऽन्वयादव्यवस्थानाच्चेति कुतः साध्यवैकल्यमित्याह। मृदादे-

असत्यपि पिण्डाकारविशेषे मृत्सुवर्णादिकारणद्रव्यमात्रादेव घटरुचकादिकार्य्योत्पत्तिर्दृश्यते। तस्मान्न पिण्डाकारविशेषो घटरुचकादिकारणम्। असति तु मृत्सुवर्णादिद्रव्ये घटरुचकादिर्न जायत इति मृत्सुवर्णादिद्रव्यमेव कारणं नतु पिण्डाकारविशेषः॥ सर्व्वं हि कारणं कार्य्यमुत्पादयत् पूर्व्वोत्पन्नस्यात्मकार्य्यस्य तिरोधानं कुर्व्वत् कार्य्यान्तरमुत्पादयति। एकस्मिन् कारणे युगपदनेककार्य्यविरोधात्। न च पूर्व्वकार्य्योपमर्द्दे कारणस्य स्वात्मोपमर्द्दो भवति। तस्मात् पिण्डाद्युपमर्द्दे कार्य्योत्पत्तिदर्शनमहेतुः॥ प्रागुत्पत्तेः कारणसत्त्वे पिण्डादिव्यतिरेकेण मृदादेरसत्त्वादयुक्तमिति चेत्।

---

रिति। तदेव स्फुट्यते। मृत्सुवर्णादीति। तत्रेति दृष्टान्तोक्तिः। किञ्चान्वयव्यतिरेकाभ्यां कारणमवधेयम्। न च पिण्डाभावे घटो न भवतीति व्यतिरेकोऽस्ति पिण्डाभावेऽपि शकलादिभ्योऽपि घटाद्युपलम्भादित्याह। तदभावेति। तदेव स्फुटयति। असत्यपीति।

त्वन्मतेऽपि व्यतिरेकराहित्यं तुल्यमित्याशङ्क्याह। असतीति। मृदाद्येव घटादिकारणं चेत् किमिति पिण्डादौ सत्येव ततो घटाद्युत्पत्तिरित्याशङ्क्याह। सर्व्वमिति। ब्रह्मण्यविद्यावशादुपपत्तिरिति भावः। अन्वयिद्रव्यं पूर्व्वोत्पन्नस्वकार्य्यतिरोधानेन कार्य्यान्तरं जनयति चेत् कार्य्यतादात्म्येन स्वयमपि नश्येत्ततोत्तरकार्य्योत्पत्तिर्हेत्वभावादित्याशङ्क्याह। न चेति। कार्य्यान्तरेऽप्यनुवृत्तिदर्शनात्। कार्य्यान्तरात्मनाभावाच्चेत्यर्थः। अन्वयिद्रव्यस्यैव कारणत्वे फलितमाह। तस्मादिति। अन्वयिनो मृदादेर्भावाभावेनाभावान्न कारणतेति शङ्कते। पिण्डादीति। तदेव चोद्यं विवृणोति। पिण्डादावित्यादिना। मृद्घटः सुवर्णकुण्डलमित्यादितादात्म्यप्रत्ययस्य पिण्डाद्यतिरिक्तमृदाद्यभावेऽनुपपत्तेरनुगतं मृदाद्युपेयमिति परिह-

पिण्डादिपूर्वकार्य्योपमर्द्दे मृदादिकारणं नोपमृद्यते घटादिकार्य्यान्तरेऽप्यनुवर्त्तत इत्येतदयुक्तम् ॥ पिण्डघटादिव्यतिरेकेण मृदादिकारणस्यानुपलम्भादिति चेन्न। मृदादिकारणानां घटाद्युत्पत्तौ पिण्डादिनिवृत्तावनुवृत्तिदर्शनात्। सादृश्यादन्वयदर्शनं न कारणानुवृत्तेरिति चेन्न।

पिण्डादिगतानां मृदाद्यवयवानामेव घटादौ प्रत्यक्षेऽनुमानाभासात्सादृश्यादिकल्पनानुपपत्तेः। न च प्रत्यक्षानुमानयोर्विरुद्धा व्यभिचारिता। प्रत्यक्षपूर्वकत्वादनुमानस्य सर्वत्रैवानाश्वासप्रसङ्गात्। यदि च क्षणिकं सर्वं तदेवेदमिति गम्यमानं तद्बुद्धेरपि अन्यतद्बुद्ध्यपेक्षत्वे तस्या अप्यन्यबुद्ध्यपे-

---

रति। नेति किञ्च या पिण्डात्मना पूर्व्वं मृदासीत्सैवाद्याभूदिति प्रत्यभिज्ञया मृदोऽन्वयित्वात् सिद्धेस्तत्कारणत्वं दुरपह्नवमित्याह। मृदादीति। यत्सत्तत्क्षणिकं यथा दीपः। सन्तश्चेमे भावा इत्यनुमानात् सर्वार्थानां क्षणिकत्वसिद्धेरन्वयदृष्टिः सादृश्यात्भ्रान्तिरिति शङ्कते। सादृश्यादिति। प्रत्यभिज्ञासिद्धस्याप्यर्थं विरुद्धं क्षणिकार्थबोधलिङ्गमनुपघातानुमानवत्त्व मानमिति दूषयति। नेत्यादिना।

साद्दृश्यादीत्यादिशब्देन प्रत्यभिज्ञाभ्रान्तित्वादि गृह्यते। प्रत्यक्षात् कारणैक्यं गम्यते। अनुमानात्तद्भेदः। अतो द्वयोर्विरुद्धत्वस्याव्यभिचारित्वात्प्रत्यक्षेणानुमानबाधो वैपरीत्यसम्भवादित्याशङ्क्याह। न चेति। प्रत्यभिज्ञामुपजीव्य क्षणिकत्वानुमानप्रवृत्तावप्युपजीव्यजातीयत्वात्तत्प्राबल्यादुपजीवकजातीयकमुक्तानुमानन्दुर्बलं तद्बाध्यमित्यर्थः। प्रत्यभिज्ञा स्वार्थे स्वतो न मानं बुद्ध्यन्तरसम्वादादेव बुद्धीनां मानत्वस्य बौद्धैरिष्टत्वात्। न च बुद्ध्यन्तरस्यापि तत्साधकमस्तीति प्रत्यभिज्ञायमानस्यापि क्षणिकत्वमित्याशङ्क्याह। सर्वत्रेति। प्रसङ्गमेव प्रकटयति। यदि चेति। क्षणिकत्वादिबु-

सत्त्वमित्यनास्थायां तत्सदृशमिदमित्यस्या अपि बुद्धेर्मृषात्वात् सर्वत्रानाश्वासतैव। तदिदम्बुद्ध्योरपि कर्तृभावे सम्बन्धानुपपत्तिः। सादृश्यात्तत्सम्बन्ध इति चेन्न। तदिदम्बुद्ध्योरितरेतरविषयत्वानुपपत्तेः। असति चेतरेतरविषयत्वे सादृश्यग्रहणानुपपत्तिः। असत्येव सादृश्ये तद्बुद्धिरिति चेन्न। तदिदम्बुद्ध्योरपि सादृश्यबुद्धिवदसद्विषयप्रसङ्गात्। असद्विषयत्वमेव सर्वबुद्धीनामस्त्विति चेन्न बुद्धबुद्धेरप्यसद्विषयत्वप्रसङ्गात्। तदप्यस्त्विति चेन्न।

सर्वबुद्धीनां मृषात्वेऽसत्यबुद्ध्यनुपपत्तेः। तस्मादसदेतत् सादृश्यात्तद्बुद्धिरित्यतः सिद्धः प्राक्कार्योत्पत्तेः कारणस-

---

द्धेरपि स्वार्थे स्वतो मानत्वाभावात्तद्ग्राह्यन्तरादेवायामन्यस्यापि तथात्वेनावस्थानाद्बुद्धेः स्वतः प्रामाण्यमुपेयम्। तथा च प्रत्यभिज्ञानं सर्वस्थैर्यमबाधादित्यर्थः। किञ्च प्रत्यभिज्ञाया भ्रान्तित्वं वदता स्वरूपानपह्नवात्तदिदम्बुद्ध्योः सामानाधिकरण्येन सम्बन्धो वाच्यः। स च वक्तुं न शक्यते। क्षणद्वयसम्बन्धिनो द्रष्टुरभावादित्याह। तदिदमिति। असति सम्बन्धे बुद्ध्योः सादृश्यात्तद्बुद्धिरिति शङ्कते। सादृश्यादिति। तयोः स्वसंवेद्यत्वाद्ग्राहकान्तरस्य चाभावाच्च सादृश्यासिद्धिरिति दूषयति। न तदिदम्बुद्ध्योरिति। तथापि किमिति सादृश्यासिद्धिरित्याशङ्क्याह। असति चेति। सादृश्यासिद्धिमभ्युपेत्य शङ्कते। असत्येवेति। यत्र सतोऽर्थस्य धीस्तत्रैव साधकापेक्षा नान्यत्रेति भावः। तत्र बाह्यार्थवादिनम्प्रत्याह। न तदिदम्बुद्ध्योरिति। विज्ञानवाद्याह। असदिति। तथा सत्यनात्मकं क्षणिकविज्ञानमित्यस्यापि ज्ञानस्यासद्विषयतया विज्ञानवादासिद्धिरित्याह। नेति। शून्यवाद्याह। तदपीति। सर्वा धीरसद्विषयेत्येषा धीरसद्विषया स्यात्ततश्च सर्वबुद्धेरसद्विषयत्वासिद्धिरिति दूषयति नेत्यादिना।

द्भावः। कार्यस्य चाभिव्यक्तिलिङ्गत्वात्। कार्यस्य च सद्भावः प्रागुत्पत्तेः सिद्धः कथमभिव्यक्तिलिङ्गत्वात्। अभिव्यक्तिर्लिङ्गमस्येत्यभिव्यक्तिः। साक्षाद्विज्ञानालम्बनत्वप्राप्तिः। यदि लोके प्रावृतं तम आदिना घटादि सुव तदालोकादिनाप्रावरणतिरस्कारेण विज्ञानविषयत्वं प्राप्तवत् प्राक्सद्भावं न व्यभिचरति। तथेदमपि जगत् प्रागुत्पत्तेरित्यवगच्छामः। न हि अविद्यमानो घट उदितेऽप्यादित्य उपलभ्यते। न तेऽविद्यमानत्वाभावादुपलभ्यतेवेति चेत्। न हि तव घटादिकार्यं कदा-

---

परपक्षासम्भवात्तत्प्रत्यभिज्ञायाः स्थायिहेतुसिद्धौ दृष्टान्तस्य साध्यवैकल्यं परिहृत्यावान्तरप्रकृतमुपसंहरति। तस्मादिति। सम्प्रति कारणसत्त्वानुमानं निगमयति। अत इति। कार्यकारणयोर्द्वयोरपि प्रागुत्पत्तेः सत्त्वमनुमेयमिति प्रतिज्ञाय कारणास्तित्वम् प्रपञ्चितम्। इदानीं कार्यास्तित्वानुमानं दर्शयति। कार्यस्येति। प्रागुत्पत्तेः सद्भावः प्रसिद्ध इति चकारार्थः। प्रतिज्ञाभागं विभजते। कार्यस्येति। हेतुभागमाक्षिपति। कथमिति। अभिव्यक्तिर्लिङ्गमस्येति व्युत्पत्त्या कथमभिव्यक्तिलिङ्गत्वादिति कार्यसत्त्वे हेतुः। उच्यते सिद्धे हि सत्त्वेऽभिव्यक्तिर्लिङ्गमस्येति सिद्ध्यति। तद्बलाच्च सत्त्वसिद्धिरित्यन्योन्याश्रयादित्यर्थः। सम्प्रतिपन्नयाभिव्यक्त्या विप्रतिपन्नं सत्त्वं साध्यते। तन्नान्योन्याश्रयत्वमिति परिहरति। अभिव्यक्तिरिति। कथं तर्हि इहानुमानं प्रयोक्तव्यमित्याशङ्क्य प्रथमं व्याप्तिमाह। यद्धीति। यद्ध्यभिव्यज्यमानस्तत्प्रागभिव्यक्तेरस्ति। यथा तमोऽन्तःस्थं घटादीत्यर्थः। सम्प्रत्यनुमिनोति। तथेति। विमतं प्रागभिव्यक्तेः सदभिव्यक्तिविषयत्वात्सम्प्रतिपन्नवदित्यर्थः। ननु तमोऽन्तःस्थो घटोऽभिव्यञ्जकसान्निध्यादभिव्यज्यते न तत्र प्राक्कालीनं सत्त्वं प्रयोजकमित्याशङ्क्याह। न हीति। उक्तेऽनुमाने कार्यस्य सदोपलब्धिप्रसङ्गं विपक्षे बाधकमाशङ्कते। नेत्यादिना। उक्तानुमाननिषेधो नञर्थः। अविद्यमानत्वाभावादिति छेदः।

चिदप्यविद्यमानमित्युदितेऽप्यादित्य उपलभ्यतैव। मृत्पिण्डेऽसन्निहिते तम आद्यावरणे चासति विद्यमानत्वादिति चेत्।

न। द्विविधत्वादावरणस्य। घटादिकार्यस्य द्विविधं ह्यावरणं मृदादेरभिव्यक्तस्य तमःकुड्यादि प्राङ्मृदोऽभिव्यक्तस्य मृदाद्यवयवानां पिण्डादिकार्यान्तररूपेण संस्थानम्। तस्मात् प्रागुत्पत्तेर्विद्यमानस्यैव घटादिकार्यस्यावृतत्वादनुपलब्धिः। नष्टोत्पन्नभावाभावशब्दप्रत्ययभेदस्त्वभिव्यक्तितिरोभावयोर्द्विविधत्वापेक्षः। पिण्डकपालादेरावरणवैलक्षण्यादयुक्तमिति चेत्।

---

अनुमाने बाधकोपन्यासं विघटयति। न हीति। वर्त्तमानवदतीतमनागामि घटादि सदेव चेदुपलब्धिसामग्र्यां सत्यां तद्वत्प्रागजनेर्नाशाच्चोर्द्ध्वमुपलभ्येत। न चैवमुपलभ्यते। तस्मादयुक्तं कार्यस्य सदासत्त्वमित्यर्थः। मृत्पिण्डग्रहणं विरोधिकार्यान्तरोपलक्षणार्थम्। असन्निहिते सतीति छेदः न तावद्विद्यमानत्वमात्रं कार्यस्य सदोपलम्भापादकम्। सतोऽपि घटादेरभिव्यक्त्यनभिव्यक्त्योरुपलब्ध्यनुपलब्धित्वादिति समाधत्ते। नेति। अभिव्यक्तिसामग्री सत्त्वन्त्वभिव्यक्तिसाधकम्। न तु सतस्तत्सामग्रीनियमोऽस्तीत्यभिप्रेत्याह। द्विविधत्वादिति।

उत्पन्नस्य कुड्याद्यावरणं अनुत्पन्नस्य विशिष्टं कारणमिति द्वैविध्यमेव प्रतिज्ञापूर्वकं साधयति। घटादीति। यदोपलभ्यमानकारणावयवानां कार्यान्तराकारेण स्थितिस्तदा नेदं कार्यमुपलभ्यते। तत्रान्यथा चोपलभ्यत इत्यन्वयव्यतिरेकसिद्धकारणस्य कार्यान्तररूपेण स्थितस्य कार्यावरकत्वमिति द्रष्टव्यम्। विशिष्टस्य कारणस्यावरकत्वसिद्धौ सिद्धमर्थमाह। तस्मादिति। प्राक् कार्यास्तित्वे सिद्धे सदा तदुपलब्धिप्रसङ्गबाधकं निराकृत्य नष्टो घटो नास्तीत्यादिप्रयोगप्रत्ययभेदानुपपत्तिं बाधकान्तरमाशङ्क्याह। नष्टेति कपालादिना तिरोभावे नष्टव्यवहारः पिण्डाद्यावरणभङ्गेनाभिव्य-

तमःकुड्यादिर्हि घटाद्यावरणं घटादिभिन्नदेशं दृष्टं न तथा घटादिभिन्नदेशे दृष्टे पिण्डकपाले। तस्मात्पिण्डकपालसंस्थानयोर्विद्यमानस्यैव घटस्यावृतत्वादनुपलब्धिरित्ययुक्तमावरणधर्मवैलक्षण्यादिति चेत्।

न। क्षीरोदकादेः क्षीराद्यावरणेनैकदेशत्वदर्शनात्। घटादिकार्ये कपालचूर्णाद्यवयवानामन्तर्भावादनावरणत्वमिति चेत्। न। विभक्तानां कार्य्यान्तरत्वादावरणत्वोपपत्तेरावरणाभाव एव यत्नः कर्त्तव्य इति चेत् पिण्डकपालावस्थयोर्विद्यमानमेव घटादिकार्यमावृतत्वान्नोपलभ्यत इति चेत्। घटादिकार्यार्थिना तदावरणविनाश एव यत्नः कर्त्तव्यो न घटाद्यु-

---

क्तावुत्पन्नव्यवहारो दीपादीना तमोनिरासेनाभिव्यक्तौ भावव्यवहारः। पिण्डादिना तिरोभावेऽभावव्यवहारः। तदेवं कार्यस्य सदा सत्त्वेऽपि प्रयोगप्रत्ययभेदसिद्धिरित्यर्थः। पिण्डादि न घटाद्यावरणं तेन समानदेशत्वात्। यद्यस्यावरणं न तत्तेन समानदेशम्। यथा कुड्यादीति शङ्कते। पिण्डेति। व्यतिरेक्यनुमानं विवृणोति। तम इत्यादिना। अनुमानफलं निगमयति। तस्मादिति। किमिदं समानदेशत्वं किमेकाश्रयत्वं किं वैककारणत्वमिति विकल्पाद्यं विरुद्धत्वेन दूषयति नेत्यादिना।

क्षीरेण सङ्कीर्णस्योदकादेराव्रियमाणस्येति यावत्। द्वितीयमुत्थापयति। घटादीति। यस्येदं कार्य्यं तस्मिन्स्तदात्मनि तेषामवस्थानात्तद्वृत्तेरावरणत्वमित्यर्थः। घटावस्थस्तस्मात्प्रवृत्ति कपालादेर्घटेनावरणत्वमिष्टमेवेति सिद्धसाधनता। अव्यक्तघटावस्थस्तद्वृत्तिककपालादेरनावरणत्वसाधने हेत्वसिद्धिः घटस्य कपालादेश्चाश्रयस्तदाश्रयभेदादिति दूषयति। न विभक्तानामिति। विद्यमानस्यैवावृतत्वादनुपलब्धिश्चेदावरणतिरस्कारे यत्नः स्यात्। न घटादेरुत्पत्तौ। अतोऽनुभवविरोधः सत्कार्य्यवादिनः स्यादित्याशङ्कते।

त्पत्तौ। न चैतदस्ति तस्मादयुक्तं विद्यमानस्यैवावृतत्वादनुपलब्धिरिति चेत्। न। अनियमात्। न हि विनाशमात्रप्रयत्नादेवं घटाद्यभिव्यक्तिर्नियता तम आद्यावृते घटादौ प्रदीपाद्युत्पत्तौ प्रयत्नदर्शनात्। सोऽपि तमोनाशायैवेति चेत् दीपाद्युत्पत्तावपि यः प्रयत्नः सोऽपि तमस्तिरस्करणाय। तस्मिन्नष्टे घटः स्वयमेवोपलभ्यते। न हि घटे किञ्चिदाधीयत इति चेत्। न। प्रकाशवतो घटस्योपलभ्यमानत्वात्। यथा प्रकाशविशिष्टो घट उपलभ्यते प्रदीपकरणे। न तथा प्राक् प्रदीपकरणात्। तस्मात् न तमस्तिरस्कारायैव प्रदीपकरणम्। किं तर्हि प्रकाशवत्त्वाय। प्रकाशवत्त्वेनैवोपलभ्यमानत्वात्।

क्वचिदावरणविनाशेऽपि यत्नः स्यात् यथा कुड्यादिविनाशे तस्मान्न नियमोऽस्ति। अभिव्यक्त्यर्थिनावरणविनाश एव यत्नः कार्य्य इति। नियमार्थवत्त्वाच्च। कारणे वर्त्तमानं कार्यं कार्या-

---

आवरणेति। तदेव प्रपञ्चयति। पिण्डेति। यत्नावृतं वस्तु व्यज्यते तत्नावरणभङ्ग एव यत्न इति व्याप्त्यभावाच्चानुभवविरोधोऽस्तीति दूषयति। नानियमादिति। अनियमं साधयति। न हीति। तमसावृते घटादौ दीपोत्पत्तौ यत्नोऽस्तीत्यत्न चोदयति। सोऽपीति। अनुभवविरोधमाशङ्क्योक्तमेव व्यनक्ति। दीपादीति। दीपश्चेत्तमस्तिरयति चेत् कथं कुम्भोपलब्धिरत आह। तस्मिन्निति। तत्न हेतुमाह। न हीति। अनुभवमनुसृत्य परिहरति। नेत्यादिना किमिदानीमावरणभङ्गे प्रयत्नो नेत्येव नियमोऽस्तु नेत्याह। क्वचिदिति।

अनियमस्त्विगमयन्ननुभवविरोधाभावमुपसंहरति। तस्मादिति। किञ्चाभिव्यञ्जकव्यापारे सति नियमेन घटो व्यज्यते। तदभावे नेत्यन्वयव्यतिरेकावधारितो घटार्थः कुलालादिव्यापारः। तस्यार्थवत्त्वार्थमभिव्यक्त्यर्थ एव

न्तराणामावरणमित्यवोचाम। तत्र यदि पूर्वाभिव्यक्तस्य का-
र्यस्य पिण्डस्य व्यवहितस्य वा कपालस्य विभाग एव यत्नः क्रि-
येत। तदा विदलचूर्णाद्यपि कार्यं जायेत। तेनाप्यावृतो घटो
नोपलभ्यत इति पुनः प्रयत्नान्तरापेक्षैव। तस्माद्घटाद्यभिव्य-
क्त्यर्थिनो नियत एव कारकव्यापारोऽर्थवान्। तस्मात् प्रागुत्प-
त्तेरपि सदेव कार्यं अतीतानागतप्रत्ययभेदाच्च। अतीतो घटो-
ऽनागतो घट इत्येतयोश्च प्रत्यययोर्वर्त्तमानघटप्रत्ययवन्न निर्वि-
षयत्वं युक्तम्। अनागतार्थिप्रवृत्तेश्च। नह्यसत्यर्थितया प्रवृ-
त्तिर्लोके दृष्टा। योगिनां चातीतानागतज्ञानस्य सत्यत्वादसंक्षे-
ह्नविष्यद्घट ऐश्वरभविष्यद्घटविषयं प्रत्यक्षज्ञानं मिथ्या स्यात्।

---

प्रयत्नो वक्तव्यः। आवरणभङ्गस्यार्थिक इत्याह। नियमेति। उक्तं सा-
रयन्नेतदेव विवृणोति। कारण इत्यादिना। आवृत्तिभङ्गार्थे यत्ने यतो घ-
टानुपलब्धिरतस्तदुपलब्ध्यर्थत्वेन नियतः सन् यत्नः सफलः स्यादिति फलित-
माह। तस्मादिति। प्रकृतमभिव्यक्तिलिङ्गकमनुमानं निर्दोषत्वादादेयं मन्वा-
नस्तत्फलमुपसंहरति। तस्मात् प्रागिति। कार्य्यस्य सत्त्वे युक्त्यन्तरमाह।
अतीतेति। विमतं सदर्थं सप्रमाणत्वात् सम्प्रतिपन्नवदित्यर्थः। तदेवानु-
मानं विशदयति। अतीत इति। अत्रैवोपपत्त्यन्तरमाह। अनागतेति।
आगामिनि घटे तदर्थित्वेन लोके प्रवृत्तिर्दृष्टा। न चात्यन्तासति सा
युक्ता। तेन तस्यासद्विलक्षणतेत्यर्थः। किञ्च योगिनामीशस्य चातीता-
दिविषयं प्रत्यक्षज्ञानमिष्टम्। तच्च विद्यमानोपलम्भनम्। अतो घटस्य
सदात्वमित्याह। योगिनाञ्चेति। ईश्वरसमुच्चयार्थश्चकारः। भविष्यद्ग्र-
हणमतीतोपलक्षणार्थमैश्वरं यौगिकञ्चेति द्रष्टव्यम्। प्रसङ्गस्येष्टत्वमाशङ्क्या-
ह। न चेति। अधिकबलं हि बाधकम्। न चानतिशयादैशादिज्ञाना-
दधिकबलं ज्ञानन्दृष्टम्। अतो बाधकाभावान्नतन्मिथ्येत्यर्थः। तस्य सम्यक्-

न च प्रत्यक्षमुपचर्य्यते। घटसद्भावे ह्यनुमानमवोचाम। विप्रतिषेधाच्च।

यदि घटो भविष्यतीति कुलालादिषु व्याप्रियमाणेषु घटार्थं प्रमाणेन निश्चितम्। येन च कालेन घटस्य सम्बन्धो भविष्यतीत्युच्यते तस्मिन्नेव काले घटोऽसन्निति विप्रतिषिद्धमभिधीयते। भविष्यन् घटोऽसन्निति न भविष्यतीत्यर्थः। अथ घटो न वर्त्तत इति यद्वत्। अथ प्रागुत्पत्तेर्घटोऽसन्नित्युच्येत घटार्थं प्रवृत्तेषु कुलालादिषु तत्र यथा व्यापाररूपेण वर्त्तमानस्तावत् कुलालादयस्तथा घटो न वर्त्तत इत्यसच्छब्दस्यार्थेयेव विरुध्यते कस्मात् स्वेन हि भविष्यद्रूपेण घटो वर्त्तते। न हि पिण्डस्य

---

त्वेऽपि पूर्व्वोत्तरकालयोरसद्घटविषयत्वं किन्नस्यादित्याशङ्क्याह घटेति। पूर्व्वोत्तरयोः कालयोरिति शेषः। घटस्य प्रागसत्त्वाभावे हेत्वन्तरमाह। विप्रतिषेधादिति।

स हि कारकव्यापारदशायामसन्निति कोऽर्थः किन्तस्य भविष्यत्त्वादि तदा नास्ति किं वार्थक्रियासामर्थ्यम्। आद्ये व्याहतिं साधयति। यदीति। घटार्थं कुलालादिषु व्याप्रियमाणेषु सत्सु घटोभविष्यतीति प्रमाणेन निश्चितश्चेत् कथन्तद्विरुद्धं प्रागसत्त्वमुच्यते। कारकव्यापारावच्छिन्नेन हि कालेन घटस्य भविष्यत्त्वेनातीतत्वेन वा भविष्यत्वभूदिति सम्बन्धो विवक्ष्यते। तथाच तस्मिन्नेव काले घटस्य तथाविधसत्त्वनिषेधे व्याहतिरतिव्यक्तेरित्यर्थः। तामेवाभिनयति। भविष्यन्निति। यो हि कारकव्यापारदशायां भविष्यत्त्वादिरूपेणास्ति, स तदा नास्तीत्युक्ते तस्य तस्यामवस्थायां तेनाकारेणासत्त्वमर्थो भवति। तथाच घटो यदा येनाकारेणास्ति स तदाकारेण नास्तीति व्याहतिरित्यर्थः। द्वितीयमुत्थापयति। अथेति। प्रागुत्पत्तेर्घटार्थं कुलालादिषु प्रवृत्तेषु असावसन्नित्यसच्छब्दार्थं स्वयमेव विवेचयति। तत्रेत्यादिना। तत्र सिद्धान्ती ब्रूते। स विरुद्धत इति। कथ-

वर्त्तमानता कपालस्य वा घटस्य भवति। न च तयोर्भविष्यत्ता घटस्य। तस्मात् कुलालादिव्यापारवर्त्तमानतायां प्रागुत्पत्तेर्घटोऽसन्निति न विरुध्यते। यदि घटस्य यत्स्वभविष्यत्ताकार्य्यरूपं तत् प्रतिषिध्येत। तत्प्रतिषेधे विरोधः स्यात्। न तु तद्भवान् प्रतिषेधति।

न च सर्व्वेषां क्रियावतामेकैव वर्त्तमानता भविष्यत्वं वा। अपि च चतुर्विधानामभावानां घटस्येतरेतराभावो घटादन्यो दृष्टो यथा घटाभावः पटादिरेव न घटस्वरूपमेव।

---

स्य नः सत्कार्य्यवादिनस्तदसत्त्वमविरुद्धमित्याह। कस्मादिति। प्रागुत्पत्तेस्तु व्यवहाराद्युत्पत्तिरूपं सत्त्वं घटस्य सिषाधयिषितं, तच्चेद्भवानपि तस्य तदातनमर्थक्रियासामर्थ्यं निषेधन्नानुमन्यते। नावयोर्विप्रतिपत्तिरित्यभिप्रेत्याह। स्वेन हीति। ननु त्वन्मते सर्व्वस्य मृण्मात्रत्वाविशेषात् पिण्डादेर्वर्त्तमानता घटस्य स्यात्। तस्य चातीतता भविष्यत्ता च पिण्डकपालयोः स्यादिति साङ्कर्य्यमाशङ्क्याह। न हीति। व्यवहारदशायां यथा प्रतिभासमनिर्वाच्य संस्थानभेदाश्रयणादित्यर्थः। प्रागवस्थायां घटस्यार्थक्रियासामर्थ्यलक्षणसत्त्वनिषेधे विरोधाभावमुपपादितमुपसंहरति। तस्मादिति। उक्तमेव व्यतिरेकद्वारा विवृणोति। यदीत्यादिना। यदा कारकाणि व्याप्रियन्ते तदा घटोऽसन्निति तस्य भविष्यत्त्वादिरूपं तत्काले निषिध्यते चेदुक्तविधया व्याघातः स्यात्। न च तस्य तस्मिन् काले भविष्यत्त्वादिरूपं सत्त्वं निषिध्यते। अर्थक्रियासामर्थ्यस्यैव निषेधात् तन्न विरोधावकाशोऽस्तीत्यर्थः।

न हि पिण्डस्येत्यादिना साङ्कर्य्यसमाधिरुक्तस्तमिदानीं सर्व्वतन्त्रसिद्धान्ततया स्फुटयति। न चेति। भविष्यत्त्वमतीतत्वञ्चेति शेषः। कार्य्यस्य प्रागुत्पत्तेर्नाशाच्चोर्द्ध्वमसत्त्वाभावे हेत्वन्तरमाह। अपि चेति। त-

न च घटाभावः सन् पटोऽभावात्मकः किन्तर्हि भावरूप एव। एवं घटस्य प्राक्प्रध्वंसात्यन्ताभावानामपि घटादन्यत्वं स्यात्। घटेन व्यपदिश्यमानत्वात् घटस्येतरेतराभाववत्। तथैव भावात्मकता अभावानाम्। एवञ्च सति घटस्य प्रागभाव इति न घटस्वरूपमेव प्रागुत्पत्तेर्नास्ति। अथ घटस्य प्रागभाव इति घटस्य यत् स्वरूपं तदेवोच्यते। घटस्येति व्यपदेशानुप-

---

देशानुमानतया स्पष्टयितुन्दृष्टान्तं साधयति। चतुर्विधानामिति। षष्ठी निर्धारणे। घटान्योन्याभावः पटादन्यत्वे तत्राप्यन्योन्याभावान्तराङ्गीकारादनवस्थेत्यत आह। इष्ट इति। न यौक्तिकमन्यत्वं किन्तु घटो न भवति पट इति प्रातीतिकम्। तथाच घटाभावः पटादिरेवेति। पटादेस्ततोऽन्यत्वात् घटान्योन्याभावस्यापि घटादन्यत्वसिद्धिरित्यर्थः। ननु घटाभावः पटादिरित्ययुक्तम्। विशेषणत्वेन घटस्यापि पटाद्यन्तर्भावप्रसङ्गादिति चेन्नैवं इष्टपदेन निराकृतत्वात्। घटाभावस्य पटादित्वाभावेऽपि न स्वातन्त्र्यम्। अभावत्वविरोधात्। नापि तदन्योन्याभावः पटादेर्धर्मः संसर्गाभावान्तर्भावापातात्। न च स घटस्यैव धर्मः स्वरूपं वा घटः। घटो न भवतीति प्रतीत्यभावादित्यभिप्रेत्याह। न घटस्वरूपमेवेति। यदि प्रतीतिमाश्रित्य घटान्योन्याभावः पटादिरिष्यते तदा पटादेर्भावस्याभावत्वविधानाद्व्याघात इत्याशङ्क्याह। न चेति। स्वरूपपररूपाभ्यां सर्वं सदसदात्मकमिति हि वृद्धाः। तथाच पटादेः स्वेनात्मनाभावत्वं घटतादात्म्याभावात्तदभावत्वञ्चेत्यव्याहतिरित्यर्थः। सिद्धे प्रतीत्यनुसारिणि दृष्टान्ते विवक्षितमनुमानमाह। एवमिति। किञ्च तेषामभावानां घटाद्भिन्नत्वात्पटवदेव सत्यमेष्टव्यमित्यनुमानान्तरमाह। तथेति। अनुमानफलं कथयति। एवञ्चेति। तेषां घटादन्यत्वे तस्यानाद्यनन्तत्वमद्वयत्वं सर्वात्मत्वञ्च प्राप्नोति। सत्त्वे च तेषामभावानामभावाच्च भावाभावयोर्मिथः सङ्कृतिरित्यर्थः। ननु प्रसिद्धोऽभावो भाववदशक्योऽपह्नोतुमिति चेत् स तर्हि

पत्तिः। अथ कल्पयित्वा व्यपदिश्येत शिलापुत्रकस्य शरीरमिति यद्वत्। तथापि घटस्य प्रागभाव इति कल्पितस्यैवाभावस्य घटेन व्यपदेशो न घटस्वरूपस्यैव।

अथार्थान्तरं घटाद्घटस्याभाव इत्युक्तोत्तरमेतत्। किञ्चान्यत्प्रागुत्पत्तेः शशविषाणवदभावभूतस्य घटस्य स्वकारणसत्तासम्बन्धानुपपत्तिः। द्विनिष्ठत्वात् सम्बन्धस्यायुतसिद्धानामदोष इति चेत्। न। भावाभावयोरयुतसिद्धत्वानुपपत्तेः। भावभूतयोर्हि युतसिद्धताऽयुतसिद्धता वा स्यान्नतु

---

घटस्य स्वरूपमर्थान्तरं वेति विकल्पाद्यमनूद्य दूषयति अथेत्यादिना। प्रागभावादेर्घटत्वेऽपि सम्बन्धं कल्पयित्वा घटस्येत्युक्तिरिति शङ्कते। अथेति सम्बन्धस्य कल्पितत्वे सम्बन्धिनोऽप्यभावस्य तथात्वं स्यादिति दूषयति। तथापीति। यत्र सम्बन्धं कल्पयित्वा व्यपदेशस्तत्र न वास्तवो भेदो यथा राहुशिरसोस्तथात्रापि विकल्पिते सम्बन्धे भेदस्य तथात्वाद्वास्तवत्वं सम्बन्धिनोरन्यतरस्य स्यात्। न चाभावस्तथा सापेक्षत्वात्तौ घटस्तथेत्यर्थः। कल्पान्तरमनुवदति। अथेति।

अनुमानफलं वदद्भिर्घटस्य कारणात्मना भुवत्ववचनेन समाहितमेतदित्याह। उक्तोत्तरमिति। असत्कार्यवादे दोषान्तरमाह। किञ्चेति। स्वहेतुसम्बन्धः सत्तासम्बन्धो वा जन्मेति तार्किकाः। न च प्रागुत्पत्तेरसतः सम्बन्धस्तस्य सतोऽवृत्तेरित्यर्थः। युतसिद्धयोरज्जुघटयोर्मिथः संयोगे पृथक्सिद्धिरपेक्ष्यते। अयुतसिद्धानां परस्परपरिहारेण प्रतीत्यनर्हाणां कार्यकारणादीनां मिथोयोगे पृथक्सिद्ध्यभावो न दोषमावहतीति शङ्कते। अयुतेति। परिहरति। नेति। उक्तमेव स्फोटयति। भावेति। व्यवस्थारेष्या कार्यकारणयोः साधितान्तुच्छव्यावृत्तिमुपसंहरति। तस्मादिति।

नैवेहेत्यत्र सर्वस्य प्रागुत्पत्तेरसत्त्वशङ्का स्वतयनेत्यादिवाक्यव्याख्यानेन निरस्ता। सम्भूति स्वतयशब्दस्यार्थान्तरे रूढत्वान्न तेनाकरणं जगतः

अशनाययाऽशनाया हि मृत्युस्तन्मनोऽकुरुतात्मन्वी स्यामिति।

भावाभावयोरभावयोर्वा तस्मात् सदेव कार्य्यं प्रागुत्पत्तेरिति सिद्धम्। किं लक्षणेन मृत्युनावृतमित्यत आह।

अशनायया अशितुमिच्छा अशनाया सैव मृत्युः सा हि मृत्योर्लक्षणम्। तया लक्षितेन मृत्युनाशनायया। कथमशनाया मृत्युरिति। उच्यते। अशनाया हि मृत्युः। हि शब्देन प्रसिद्धं हेतुमवद्योतयति। यो ह्यशितुमिच्छति सोऽशनायानन्तरमेव हन्ति जन्तून्। तेनासावशनायया लक्ष्यते मृत्युरिति अशनाया हीत्याह। बुद्ध्यात्मनोऽशनाया धर्म्म इति स एष बुद्ध्यवस्थो हिरण्यगर्भो मृत्युरित्युच्यते। तेन मृत्युनेदं कार्य्यमावृतमासीत्। यथा पिण्डावस्थया मृदा घटादय आवृताः

सम्भवतीत्याक्षिपति। किं लक्षणेनेति। अनभिव्यक्तनामरूपमध्यक्षाद्ययोग्यमपञ्चीकृतपञ्चमहाभूतावस्थातिरिक्तं मायारूपं साभासं मृत्युरित्युच्यते। न हि सर्वं कार्यमनन्तरकारणादुत्पत्तुमर्हतीत्यभिप्रेत्याह। अत आहेति।

कथं यथोक्तो मृत्युरशनायया लक्ष्यते न हि मूलकारणस्याशनायादिमत्त्वम्। अशनायापिपासे प्राणस्येति स्थितेरिति शङ्कते। कथमिति। मूलकारणस्यैव सूत्रत्वं प्राप्तस्य सर्वसंहर्तृत्वान्मृत्युत्वे सति वाक्यशेषोपपत्तिरिति। परिहरति। उच्यत इति। प्रसिद्धमेव प्रकटयति। यो हीति। तथापि प्रसिद्धं मृत्युं हित्वा कथं हिरण्यगर्भोपादानमत आह। बुद्ध्यात्मन इति। उक्तं हेतुं कृत्वा फलितमाह इति स इति। ननु न तेन जगदाव्रियते मूलकारणेनैव तदावरणात्। तत्कथं वाक्योपक्रमोपपत्तिरत आह। तेनेति। ननु हिरण्यगर्भे प्रकृते कथं सद्दारि नत्वेकप्रयोगस्त-

सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चते वै मे-

स्युरिति तद्वत्। तन्मनोऽकुरुत। तदिति मनसो निर्देशः। स प्रकृतो मृत्युर्वक्ष्यमाणकार्य्यसिसृक्षया तत्कार्य्यालोचनक्षमं मनःशब्दवाच्यं सङ्कल्पादिलक्षणमन्तःकरणमकुरुत कृतवान्। केनाभिप्रायेण मनोऽकरोदित्युच्यते आत्मन्वी आत्मावानिति लिङ्गव्यत्ययेन स्यां भवेयम्। अहमनेनात्मना मनसा मनस्वी स्यामित्यभिप्रायः।

स प्रजापतिरभिव्यक्तेन मनसा समनस्कः सन्नर्चन्नर्चयन् पूजयन्नात्मानमेव कृतार्थोऽस्मीत्यचरच्चरणमकरोत्। तस्य प्रजापतेरर्चतः पूजयत आपो रसात्मिकाः पूजाङ्गभूता अजायन्त उत्पन्नाः। अत्राकाशप्रभृतीनान्त्रयाणामुत्पत्त्यनन्तरमिति

---

त्याह। तदिति। मनस इति वाक्यार्थमधुना कथयति स प्रकृत इति भूतसृष्टिव्यतिरेकेण भौतिकस्य मनसः सृष्टिरयुक्तेति मत्वा पृच्छति। केनेति। अपञ्चीकृतानां हिरण्यगर्भादिभूतानां प्रागेव लब्धात्मकत्वात्तेभ्यो मनोव्यक्तिरविरुद्धेति मन्वानो ब्रूते। उच्यत इति। स्वात्मवत्त्वस्य स्वाभाविकत्वान्न तदा शंसनीयमित्याशङ्क्य वाक्यार्थमाह। अहमिति। मनसो व्यक्तस्योपयोगमाह। स प्रजापतिरिति।

ननु तैत्तिरीयकाणामाकाशादिसृष्टिरुच्यते तत् कथमिहापामादौ सृष्टिवचनन्तत्राह। अत्रेति। सप्तम्या हिरण्यगर्भकर्तृकसर्गोक्तिः। त्रयाणामपञ्चीकृतानामिति यावत्। नन्वाकाशाद्या तैत्तिरीये सृष्टिः। इह त्वबाद्येति। उदितानुदितहोमवद्विकल्पो भविष्यति नेत्याह। विकल्पेति। पुरुषतन्त्रत्वात् क्रियाया युक्तो विकल्पः। सिद्धेऽर्थे तु पुरुषानधीने नासौ सम्भवति। अतः सृष्टिर्विवक्षिता चेदाकाशाद्यैव सा युक्ता। अविद्याप्रधानत्वात्तु नादरः सृष्टाविति भावः। अपामत्र सृष्टिवचनमनुपयुक्तम्।

कमभूदिति तदेवार्कस्यार्कत्वम्। कꣳ ह वा अस्मै भवति य एवमेतदर्कस्यार्कत्वं वेद॥

आपो वा अर्कस्तद्यदपाꣳ शर आसीत्तत्समहन्यत।

---

वक्तव्यं श्रुत्यन्तरसामर्थ्यात् विकल्पासम्भवाच्च सृष्टिक्रमस्य। अर्चते पूजां कुर्व्वते वै मे मह्यं कमुदकमभूदित्येवममन्यत। यस्मान्मृत्युस्तदेव तस्मादेव हेतोरर्कस्यार्कस्याग्नेरश्वमेधक्रतूपयोगिकस्यार्कत्वमर्कत्वे हेतुरित्यर्थः। अग्नेरर्कनामनिर्वचनमेतत्। अर्चनात्सुखहेतुपूजाकरणात्सम्बन्धाच्चाग्नेरेतद्गौणं नामार्क इति। य एवं यथोक्तमर्कस्यार्कत्वं वेद जानाति कमुदकं सुखं वा नामसामान्यात्। ह वा इत्यवधारणार्थौ भवत्येवेति। अस्मै एवंविदे एवंविदर्थं भवति॥ १॥

आपो वा अर्कः। कः पुनरसावर्क इत्युच्यते। आपो वा या अर्चनाङ्गभूतास्ता एवार्कोऽग्नेरर्कस्य हेतुत्वात्। अप्सु चाग्निः प्रतिष्ठित इति। न पुनः साक्षादेवार्कस्ताः। तासा-

---

न सृष्टेस्ताभिरेव पूजा सिद्ध्यतीत्याशङ्क्याश्वमेधिकाग्नेरर्कनामसिद्ध्यर्थं तदुपयोगमुपन्यस्यति। अर्चत इति। कोऽसौ हेतुरित्यपेक्षायामर्चतिपदावयवस्यार्कशब्देन सङ्गतिरिति मन्वानः सन्नाह। अर्कत्वमिति। एवं मृत्योरर्कत्वेऽपि कथमग्नेरर्कत्वमित्याशङ्क्य मृत्युसम्बन्धादित्याह। अग्नेरिति। किमर्थमग्नेरर्कनामनिर्वचनमित्याशङ्क्यापूर्व्वक्रियायोगस्य फलान्तराभावादुपासनार्थमित्याह। अग्नेरिति। निर्वचनमेव स्फोरयति। अर्चनादिति। फलवत्त्वाच्च यथोक्तनामवतोऽग्नेरुपास्तिरत्र विवक्षितेत्याह। य एवमिति॥१॥

अपामर्कत्वश्रवणात् नाग्नेरर्कत्वमिति शङ्कते। कः पुनरिति। प्रकरणमाश्रित्य तासामर्कत्वमौपचारिकमित्युत्तरमाह। उच्यत इति। तास्तर्हि-

सा पृथिव्यभवत्तस्यामश्राम्यत् तस्य श्रान्तस्य तप्तस्य तेजो रसो निरवर्त्तताग्निः ॥ २ ॥

---

मप्रकरणादग्नेश्च प्रकरणम्। वक्ष्यति चायमग्निरर्क इति। तत्तत्र यदपां शर इव शरो दध्न इव मण्डभूतमासीत् तत् समहन्यत संघातमापद्यत। तेजसा बाह्यान्तः पच्यमानं लिङ्गव्यत्ययेन वा योऽपांशरः स समहन्यतेति सा पृथिव्यभवत् स सङ्घातो येयं पृथिवी साऽभवत्। ताभ्यो ह्यद्भ्योऽण्डमभिनिर्वृत्तमित्यर्थः। तस्याम्पृथिव्यामुत्पादितायां स मृत्युः प्रजापतिरश्राम्यच्छ्रमयुक्तो बभूव। सर्व्वो हि लोकः कार्य्यं कृत्वा श्राम्यति। प्रजापतेश्च तन्महत् कार्य्यं यत् पृथिवीसर्गः किन्तस्य श्रान्तस्येत्युच्यते। तस्य श्रान्तस्य सन्तप्तस्य खिन्नस्य तेजो रसस्तेज एव रसस्तेजोरसः सारो निरवर्त्तत प्रजापतिशरीरान्निष्क्रान्त इत्यर्थः। कोऽसौ निष्क्रान्तोऽग्निः सोऽण्डस्यान्तर्विराट् प्रजापतिः प्रथमजः कार्य्यकरणसङ्घातवान् जातः। स वै शरीरी प्रथम इति स्मरणात् ॥ २ ॥

---

रण्डमयमण्डं सम्बभूवेति श्रुतिमनुरुन्धन्नुपचारहेत्वन्तरमाह। अप्सु चेति। मुख्यमर्कत्वमपां वारयति। न पुनरिति। ननु श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवायपारदौर्बल्यमर्थविप्रकर्षात् प्रकरणादापो वा अर्क इति वाक्यं बलवदित्याशङ्क्य वाक्यसहकृतं प्रकरणमेव केवलवाक्याद्बलवदित्याशयवानाह। वक्ष्यति चेति। भूतान्तरसहितास्वप्सु कारणभूतासु पृथिवीद्वारा पार्थिवोऽग्निः प्रतिष्ठित इत्युक्तमिदानीम्पृथिवीसर्गन्ताभ्यो दर्शयति तदित्यादिना। अप्सु भूतान्तरसहितासूत्पन्नासु सतीष्विति सप्तम्यर्थः।

**स त्रेधात्मानं व्यकुरुतादित्यं तृतीयं वायुं तृतीयꣳ स एष प्राणस्त्रेधा विहितः तस्य प्राची दिक् शिरोऽसौ चासौ चेर्मौ ॥**

---

स च जातः प्रजापतिस्त्रेधा त्रिप्रकारमात्मानं स्वयमेव कार्य्यकरणसङ्घातं व्यकुरुत व्यभजदित्येतत् कथं त्रेधेत्याह। आदित्यं तृतीयमग्निवायूपेक्षया त्रयाणाम् पूरणमकुरुतेत्यनुवर्त्तते। अग्न्यादित्यापेक्षया वायुस्तृतीयम्। तथा वाय्वादित्यपेक्षयाग्निस्तृतीयमिति द्रष्टव्यम्। सामर्थ्यस्य तुल्यत्वात् त्रयाणां सङ्ख्यापूरणत्वे। स एष प्राणः सर्वभूतानामग्निवाय्वादित्यरूपेण विशेषतः स्वेनैव मृत्य्वात्मना त्रेधा विहितो विभक्तो न विराट्स्वरूपोपमर्दनेन। तस्यास्य प्रथमजस्याग्ने

---

शर इव शर इत्युत्तरमेव व्याचष्टे। दध्न इवेति। सङ्घाते सहकारिकारणमाह। तेजसेति। यत्तदिति पदे नपुंसकत्वेन श्रुते कथन्तयोः शरशब्देन कारणस्योच्छूनत्ववाचिना पुंलिङ्गेनान्वयस्तत्राह। लिङ्गव्यत्ययेनेति। उक्तानुपपत्तिद्योतनार्थो वाशब्दो व्यत्ययेनान्वयमेवाभिनयति। योऽपामिति। वाक्यतात्पर्य्यमाह। ताभ्य इति। स्थूलप्रपञ्चात्मकविराजः सूक्ष्मप्रपञ्चात्मकसूत्रत्वादुत्पत्तिं वक्तुं पातनिकामाह। तस्यामिति। उक्तेऽर्थे लोकप्रसिद्धिमनुकूलयति। सर्वो हीति। इदानीं विराडुत्पत्तिमुपपादयति। किन्तस्येत्यादिना। अग्निशब्दार्थं स्फुटयति। सोऽण्डस्येति। तस्य प्रथमशरीरित्वे मानमाह। स वा इति ॥ २ ॥

विराजो ध्यानार्थमवच्छेदभेदमाह। स चेति। कोऽस्य त्रेधाभावस्य कर्त्तेति विवक्षायामाह। स्वयमेवेति। कथमेकस्य त्रिधात्वमन्यथा कथमेकत्वमित्याह। कथमिति। मृदो घटशरावाद्यनेकरूपवत्त्ववद्विराजो बहुस्वरू-

अथास्य प्रतीची दिक् पुच्छमसौ चासौ च सक्थ्यौ

---

रश्वमेधोपयोगिकस्यार्कस्य विराजयित्वात्मकस्याग्नेरस्यैव दर्शनमुच्यते। सर्व्वा हि पूर्व्वोक्तोत्पत्तिरस्य स्तुत्यर्थेत्यवोचाम। इत्थमसौ शुद्धजन्मेति। तस्य प्राची दिक् शिरो विशिष्टत्वसामान्यात्। असौ चासौ च ऐशान्याग्नेयौ ईर्म्मौ बाहू। ईरयतेर्गतिकर्म्मणः।

अथास्याग्नेः प्रतीची दिक् पुच्छं जघन्यो भागः। प्राङ्मुखस्य प्रत्यग्दिकसम्बन्धात्। असौ चासौ च वायव्यनैर्ऋत्यौ

---

पत्वं साधयति। अथेत्यादिना। कथमग्निस्तृतीयमित्युक्तं कल्प्यते तत्राह। सामर्थ्यस्येति। वाय्वादित्ययोरिवाग्नेरपि सङ्ख्यापूरणत्वशक्तेरविशिष्टत्वादग्निस्तृतीयमकुरुतेत्युपपद्यते स त्रेधात्मानमिति चापक्रमादित्यर्थः। ननु किमयं त्रेधा भावो विराट्स्वरूपोपमर्द्देन क्रियते। न हि स तस्मिन् सत्येव युक्तो विरोधादित्याह। स एष इति। यथा तन्त्ववस्थानुपमर्द्दनेन मूलकारणात् पटो जायते तथा सर्व्वेषां भूतानां प्राणतया साधारणोऽप्ययं स्वेनैव स्वनन्त्वेणानुगतेन मृत्युरूपेण त्रेधा विभागस्य कर्त्ता। न चैकस्य बहुरूपत्वविरोधो मायाविवदुपपत्तेरित्यर्थः। तस्य प्राचीत्यादेस्तात्पर्यमाह। तस्येति। उक्तानि विशेषणानि प्रकरणाविच्छेदार्थमनूद्यन्ते। अग्निविषयन्दर्शनमिदानीमुच्यते चेत् नैवेत्यादि पूर्व्वोक्तमनर्थकमित्याशङ्क्याह। सर्व्वा हीति। स्तुतिमेवाभिनयति। इत्थमिति। कर्म्माग्नेः संस्कर्त्तव्यत्वाच्चित्याग्निशिरसि प्राचीदृष्टिः कर्त्तव्येत्याह। तस्येति। आरोपे सादृश्यमाह। विशिष्टत्वेति शिरसोऽनन्तरभावित्वाद्बाह्वोरैशान्यादिदृष्टिमाह। असौ चेति। कथमीर्म्मशब्दो बाहुवाचीत्याशङ्क्य तदुत्पत्तिमाह। ईरयतेरिति। गत्यर्थयोगादीर्म्मशब्दो बाहुमधिकरोतीत्यर्थः।

तत्पुच्छादिषु प्रतीच्यादिदृष्टिरध्यस्यति। अथेत्यादिना। चित्यस्याग्नेःशिरसि बाह्वोः प्राच्यादिदृष्टिकरणानन्तरमित्यर्थः। सक्थिपदं पृष्ठनिष्ठोच्च

दक्षिणा चोदीची च पार्श्वे द्यौः पृष्ठमन्तरिक्षमुदर-
मियमुरः स एषोऽप्सु प्रतिष्ठितो यत्र क्व चेति तदेव
प्रतितिष्ठत्येवं विद्वान् ॥ ३ ॥

सोऽकामयत द्वितीयो म आत्मा जायतेति

---

सक्थ्न्यौ सक्थिनी पृष्ठकोणत्वसामान्यात्। दक्षिणा चो-
दीची च पार्श्वे उभयदिक्सम्बन्धसामान्यात्। द्यौः पृष्ठमन्त-
रिक्षमुदरमिति पूर्ववत्। इयमुरः अधोभागसामान्यात्।
स एषोऽग्निः प्रजापतिरूपो लोकाद्यात्मकोऽग्निरप्सु प्रति-
ष्ठितः। एवमिमे लोका अप्स्वन्तरिति श्रुतेः। यत्र क्वच
यस्मिन् कस्मिंश्चिदेति गच्छति तदेव तत्रैव प्रतितिष्ठति
स्थितिं लभते। कोऽसावेवं यथोक्तमप्सु प्रतिष्ठितत्वमग्नेर्विद्वान्
विजानन् गुणफलमेतत्। ३।

सोऽकामयत योऽसौ मृत्युः सोऽशनादिक्रमेणात्मनात्मानम-

---

तास्थिद्वयविषयम्। उभयशब्देन प्राचीप्रतीचीद्वयं गृह्यते। उरसि पृथिवी-
दृष्टिमाह। इयमिति। उपास्यमुक्तमग्निमनुवदति। स एष इति। तस्योपा-
सनामेवाप्सु प्रतिष्ठितत्वं गुणमुपदिशति। अग्निरिति। भूतान्तरसहितानाम-
पां सर्वलोककारणत्वादशेषलोकात्मकोऽग्निस्तत्र प्रतिष्ठितः सम्भवति इत्यत्र
श्रुत्यन्तरं संवादयति। एवमिति। यथैतेषु लोकेषु सर्वं कार्यं प्रति-
ष्ठितं तथेति यावत्। लोकशब्देन स्थूलानां भूतानां सन्निवेशविशेषा गृ-
ह्यन्ते। अप्सु भूतान्तरसहितासु कारणभूतास्विति यावत्। फलश्रुतिं व्या-
चष्टे। यत्रेति। अथोपास्तिफलं अप पुनर्मृत्युं जयतीत्यादिना वक्ष्यते।
किमिदमस्थाने फलसङ्कीर्त्तनमत आह। गुणेति ॥ ३ ॥

उत्तरग्रन्थमवतार्य तस्य पूर्वग्रन्थेन सम्बन्धं वक्तुं वृत्तं कीर्त्त-

ण्डस्यान्तः कार्य्यकरणसङ्घातवन्तं विराजमग्निमसृजत स त्रेधा चात्मानमकुरुतेत्युक्तम्। स किंव्यापारः सन्नसृजतेत्युच्यते। स मृत्युरकामयत कामितवान्। किं द्वितीयो मे ममात्मा शरीरं येनाहं शरीरी स्यां स जायेतोत्पद्येतेत्येवमेतदकामयत। स एवं कामयित्वा मनसा पूर्व्वोत्पन्नेन वाचं त्रयीलक्षणां मिथुनं द्वन्द्वभावं समभवत् सम्भवनं कृतवान् मनसा त्रयीमालोचितवान् त्रयीविहितं सृष्टिक्रमं मनसा अन्वालोचयदित्यर्थः॥ कोऽसावशनायया लक्षितो मृत्युः। अशनायालक्षणो मृत्युरित्युक्तम्। तमेव परामृशत्यन्यत्र प्रसङ्गो मा भूदिति। तद्रेत आसीत्। तत्तत्र मिथुने यद्रेत आसीत्प्रथमशारीरिणः प्रजापतेरुत्पत्तौ कारणं रेतो वीजं ज्ञानकर्म्मरूपं त्रय्यालोचनायां यत् दृष्टवानासीत्। जन्मान्तरकृतं तद्भावभावितोऽपः सृष्ट्वा तेन रेतसा वीजेनाप्स्वनुप्रविश्याण्डरूपेण गर्भीभूतः स संवत्सरोऽभवत् स संवत्सरकालनिर्म्माता संवत्सरः प्रजापतिरभवत्॥

---

यति। सोऽकामयतेत्यादिना। अवान्तरव्यापारमन्तरेण कर्त्तृत्वानुपपत्तिरिति मत्वा पृच्छति। स किंव्यापार इति। कामनादिरूपमवान्तरव्यापारमुत्तरवाक्यावष्टम्भेन दर्शयति। उच्यत इति कामनाकार्य्यं मनःसंयोगमुपन्यस्यति। स एवमिति। कोऽयं मनसा सह वाचो द्वन्द्वभावस्तत्राह। मनसेति। वाक्यार्थमेव स्फुटयति। त्रयीविहितमिति। वेदोक्तसृष्टिक्रमालोचनं प्रजापतेर्नेदम्प्रथमम्। संसारस्यानादित्वादिति वक्तुमनुशब्दः। सोऽकामयतेत्यादौ सर्व्वनाम्नोऽव्यवहितविराड्विषयत्वमाशङ्क्य परिहरति। कोऽसावित्यादिना। कथन्तया मृत्युर्लक्ष्यते तत्राह। अशनायेति। किमिति तर्हि पुनरुक्तिरित्याशङ्क्याह। तमेवेति। अन्यत्रानन्तरप्रकृतेर्विराडात्मनीति यावत्। अवान्तरव्यापारान्तरमाह। तदित्यादिना। प्रसिद्धं

स मनसा वाचं मिथुनꣳ समभवत् अशनाया मृत्युस्तद्यद्रेत आसीत्स संवत्सरोऽभवत्। न ह पुरा ततः संवत्सर आस तमेतावन्तं कालमबिभः।

यावान्त्संवत्सरस्तमेतावतः कालस्य परस्तादसृजत। तञ्जातमभिव्याददात् स भाणकरोत्सैव वागभवत् ॥ ४ ॥

---

न ह पुरा पूर्वं ततस्तस्मात् संवत्सरकालनिर्मातुः प्रजापतेः संवत्सरः कालो नास ह न बभूव ह। तं संवत्सरकालनिर्मातारमन्तर्गर्भं प्रजापतिं यावानिह प्रसिद्धः काल एतावन्तमेतावत्संवत्सरपरिमाणं कालमबिभः भृतवान्। यावान् संवत्सर इह प्रसिद्धस्ततः परस्तात् किं कृतवान् तमेतावतः कालस्य संवत्सरमात्रस्य परस्तादूर्द्ध्वमसृजत सृष्टवान् अण्डमभिनदित्यर्थः। तमेवं कुमारञ्जातमग्निं प्रथमशरीरिणं अशनायावत्त्वात् मृत्युरभिव्याददान्मुखविदारणं कृतवानत्तुम्। स च कुमारो भीतः स्वाभाविक्याऽविद्यया युक्तो भाणित्येवं शब्दमकरोत्। सैव वागभवद्वाक् शब्दोऽभवत् ॥ ४ ॥

---

रेतो व्याचर्त्तयति। ज्ञानेति। ननु प्रजापतेर्न ज्ञानं कर्म वा सम्भवति तत्रानधिकारादित्याशङ्क्याधीदित्यस्य पदस्यार्थमाह। जन्मान्तरेति। वाक्यस्यापेक्षितं पूरयित्वा वाक्यान्तरमादाय व्याकरोति। तद्भावेत्यादिना।

ननु संवत्सरस्य प्रागेव प्रसिद्धत्वात्र प्रजापतेस्तन्निर्माणेन तदात्मत्वमित्याशङ्क्योत्तरं वाक्यमुपादत्ते। न ह पुरेति। तद्व्या-

स ऐचत यदि वा इममभिमꣳस्ये कनीयोऽन्नं करिष्य इति स तया वाचा तेनात्मनेदꣳ सर्व्व-

स ऐचत स एवम्भीतं कृतरवं कुमारं दृष्ट्वा मृत्युरैचत ईचितवान्। अशनायावानपि यदि कदाचिदहं इमं कुमारमभिमंस्ये। अभिपूर्वो मन्यतिर्हिंसार्थः हिंसिष्य इत्यर्थः। कनीयोऽन्नं करिष्ये कनीयोऽल्पमन्नं करिष्य इत्येवमीचित्वा तद्भचणादुपरराम। बहु ह्यन्नं कर्त्तव्यं दीर्घकालभचणाय न कनीयः। तद्भचणे हि कनीयोऽन्नं स्यात् वीजभचण इव सस्याभावः। स एवं प्रयोजनमन्नबाहुल्यमालोच्य तयैव त्रय्या वाचा पूर्वोक्तया तेनैव चात्मना मनसा मिथुनीभावमालो-

सृष्टे। पूर्व्वमिति। प्रजापतेरादित्यात्मकत्वात्तदधीनत्वाच्च संवत्सरव्यवहारस्यादित्यात्पूर्व्वं व्यवहारो नासीदेवेत्यर्थः। कियन्तं कालमण्डरूपेण गर्भो बभूवेत्यपेचायामाह। तमित्यादिना। अवान्तरव्यापारमनेकविधमभिधाय विराडुत्पत्तिमाकाङ्क्षाद्वारोपसंहरति। यावानित्यादिना। केयम्पूर्व्वमेव गर्भतयाविद्यमानस्य विराजः सृष्टिस्तत्राह। अण्डमिति। विराडुत्पत्तिमुक्त्वा गर्भमात्रस्य सृष्टिं विवचुर्भूमिकां करोति। तमेवमिति। अयोग्येऽपि पुत्रभचणे प्रवर्त्तकन्दर्शयति। अशनायावत्त्वमिति। विराजो भयकारणमाह। स्वाभाविक्येति। इन्द्रियन्देवताश्च व्यावर्त्तयति। वाक् शब्द इति॥ ४॥

इदानीमृगादिसृष्टिमुपदेष्टुं पातनिकां करोति। स इत्यादिना। ईचणप्रतिबन्धकमाशङ्कायन्दर्शयति। अशनायावानपीति। अधिपूर्व्वो मन्यतिरिति रुद्रोऽस्य पशूनभिमन्येत नास्य रुद्रः पशूनभिमन्यत इत्यादि शास्त्रमत्र प्रमाणयितव्यम्। अन्नस्य कनीयस्त्वे का हानिरित्याशङ्क्याह। बह्विति। तथापि विराजो भचणे का चतिस्तत्राह। तद्भचणे

मसृजत यदिदं किञ्चर्चो यजूंषि सामानि छन्दांसि यज्ञान् प्रजाः पशून्।

थनमुपगम्योपगम्येदं सर्वं स्थावरजङ्गमञ्चासृजत यदिदं किञ्च यत्किञ्चेदम्। किन्तदृचो यजूंषि सामानि छन्दांसि च सप्त गायत्र्यादीनि स्तोमशस्त्रादिकर्म्माङ्गभूतांस्त्रिविधान्मन्त्रान् गायत्र्यादि छन्दोविशिष्टान् यज्ञांश्च तत्साध्यान् प्रजास्तत्कर्त्रीः पशूंश्च ग्राम्यानारण्यात् कर्म्मसाधनभूतान्। ननु वाचा मिथुनीभूतयाऽसृजतेत्युक्तं ऋगादीनीह कथमसृजतेति। नैष दोषः। मनसस्त्वव्यक्तोऽयं मिथुनीभावस्तया वाह्यः। ऋगादीनां विद्यमानानामिव कर्म्मसु विनियोगभावेन व्यक्तीभावः सर्ग इति॥

हीति। तस्याद्यात्मकत्वात्तदुत्पादकत्वाच्चेति शेषः। कारणनिवृत्तौ कार्य्यनिवृत्तिरित्यत्र दृष्टान्तमाह। वीजेति। यथोक्तख्यानन्तरं मिथुनभावद्वारा त्रयीसृष्टिं प्रस्तौति स एवमिति। ननु विराजः सृष्ट्या स्थावरजङ्गमात्मनो जगतः सृष्टेरुक्तत्वात् किं पुनरुच्यतेत्याशयेन दृष्ट्वा परिहरति। किन्तदिति। गायत्र्यादीनीत्यादिपदेनोष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीच्छन्दांस्युक्तानि। केवलानां छन्दसां सर्गासम्भवात्तदारूढानामृग्यजुःसामात्मनां मन्त्राणां सृष्टिमत्र विवक्षितेत्याह। स्तोत्रेति। उद्गात्रादिना गीयमानमृग्जातं स्तोत्रं तदेव होत्रादिना शंस्यमानं शस्त्रम्। स्तुतमनुशंसतीति श्रुतेः। यच्च गीयते न च शंस्यतेऽध्वर्युप्रभृतिभिश्च प्रयुज्यते तदप्यत्र याज्ञमित्यभिप्रेत्यादिपदम्। अतएव त्रिविधानित्युक्तम्। अजादयो ग्राम्याः पशवो गवयादयस्त्वारण्या इति भेदः। कर्म्मसाधनभूतानसृजतेति सम्बन्धः। स मनसा वाचं मिथुनं स-

स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्व्वं वा अत्तीति तददितेरदितित्वꣳ सर्व्वस्यैतस्यात्ता भवति सर्व्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद ॥ ५ ॥

---

स प्रजापतिरेवमन्नवृद्धिं बुद्धा यद्यदेव क्रियां क्रियासाधनं फलं वा किञ्चिदसृजत तत्तदत्तुं भक्षयितुमध्रियत धृतवान् मनः सर्वं कृत्स्नं वै यस्मादत्तीति तत्तस्माददितेरदितिनाम्नो मृत्योरदितित्वं प्रसिद्धम्। तथा च मन्त्रोऽदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पितेत्यादिः। सर्वस्यैतस्य जगतोऽन्नभूतस्यात्ता सर्वात्मनैव भवति अन्यथा विरोधात्। न हि कश्चित्सर्वस्यैकोऽत्ता दृश्यते तस्मात् सर्वात्मा भवतीत्यर्थः। सर्वमस्यान्नं भवति। अतएव सर्वात्मनो ह्यत्तुः सर्वमन्नम्भवतीत्युपपद्यते। य एवमेतद्यथोक्तमदितेर्मृत्योः प्रजापतेः सर्वस्यादनाददितित्वं वेद तस्यैतत् फलम् ॥ ५ ॥

---

मभवदित्युक्तत्वात् प्रागेव तस्याः सिद्धत्वान्न तस्या सृष्टिः श्लिष्टेति शङ्क्यते। नन्विति व्यक्ताव्यक्तविभागेन परिहरति नेत्यादिना। इति मिथुनोभावसर्गयोरुपपत्तिरिति शेषः।

अन्नसर्गस्यान्नसर्गस्येति द्वयमुक्तम्। इदानीमुपास्यस्य प्रजापतेर्गुणान्तरं निर्द्दिशति। स प्रजापतिरित्यादिना। कथं मृत्योरदितिनामत्वं सिद्धवदुच्यते तत्राह। तथा चेति। अदितेः सर्वात्मत्वं वदता मन्त्रेण सर्वकारणस्य मृत्योरदितिनामत्वं सूचितमिति भावः। मृत्योरदितित्वविज्ञानवतोऽवान्तरफलमाह। सर्व्वस्येति। सर्वात्मनेति कुतो विशिष्यते तत्रा-

सोऽकामयत भूयसा यज्ञेन भूयो यजेयेति। सोऽश्राम्यत्सतपोऽतप्यत तस्य श्रान्तस्य तप्तस्य यशो वीर्य्यमुदक्रामत्।

सोऽकामयतेत्यश्वाश्वमेधयोर्निर्वचनार्थमिदमाह।

भूयसा महता यज्ञेन भूयः पुनरपि यजेयेति। जन्मान्तरकरणापेक्षया भूयः शब्दः। स प्रजापतिर्जन्मान्तरेऽश्वमेधेनायजत्। स तद्भावभावित एव कल्पादौ व्यावर्त्तत। सोऽश्वमेधक्रियाकारकफलात्मत्वेन निवृत्तः सन्नकामयत भूयसा यज्ञेन भूयो यजेयेत्येवं महत् कार्यं कामयित्वा लोकवदश्राम्यत्। स तपोऽतप्यत। तस्य श्रान्तस्य तप्तस्येति पूर्ववद्यशोवीर्यमुदक्रामदिति। स्वयमेव पदार्थमाह।

ह। अन्यथेति। सर्व्वरूपेणावस्थानाभावे सर्वात्मकत्वस्याशक्यत्वादित्यर्थः। विरोधमेव साधयति। न हीति। फलस्योपासनाधीनत्वात्प्रजापतिमदितिनामानमात्मत्वेन ध्यायन् ध्येयात्मा भूत्वा तत्तद्रूपत्वमापन्नः सर्वस्यान्नस्यात्ता स्यादित्यर्थः। अन्नमन्नमेवास्य सदा न कदाचित्तदस्यात्तृ भवतीति वक्तुमनन्तरवाक्यमादत्ते। सर्व्वमिति। अतएवेत्युक्तं व्यक्तीकरोति। सर्वात्मनो हीति॥ ५॥

उपास्तिविधौ सफलेति सति समाप्तिरेव ब्राह्मणस्योचिता किमुत्तरग्रन्थेनेत्याशङ्का प्रतीकमादाय तात्पर्य्यमाह। सोऽकामयतेत्यादिना। तदेवाश्वमेधस्याश्वमेधत्वमित्यत इदन्तं वाक्यमिदन्तं वाक्यमिदमानिर्दिश्यते। भूयो दक्षिणकत्वादश्वमेधस्य भूयस्त्वमिति यज्ञोऽकामयतेत्यनेन सम्बध्यते। कथम्पुनस्तेन यजमानस्य प्रजापतेर्भूयःयज्ञोक्तिः। न हि स पूर्व्वमश्वमेधमन्वतिष्ठत् कर्म्मानधिकारत्वात्तत्राह। जन्मान्तरेति तदेव स्फुटयति। स प्रजापतिरिति। अयातीते जन्मनि यजमानोऽश्वमे-

प्राणा वै यशो वीर्य्यं तत्प्राणेषूत्क्रान्तेषु शरीरं श्वयितुमध्रियत तस्य शरीर एव मन आसीत् ॥ ६ ॥

---

प्राणाश्चक्षुरादयः। वै यशो यशोहेतुत्वात्तेषु हि सत्सु ख्यातिर्भवति। तथा वीर्यं बलमस्मिन् शरीरे। न ह्युत्क्रान्तप्राणो यशस्वी बलवान् भवति। तस्मात्प्राणा एव यशो वीर्यं चास्मिन् शरीरे। तदेवं प्राणलक्षणं यशो वीर्यमुदक्रामत् उत्क्रान्तवत्। तदेवं यशो वीर्यभूतेषु प्राणेषूत्क्रान्तेषु शरीरान्निष्क्रान्तेषु तच्छरीरम्प्रजापतेः श्वयितुमुच्छूनभावङ्गन्तुमध्रियतामेध्यञ्चाभवत्। तस्य प्रजापतेः शरीरान्निर्गतस्यापि तस्मिन्नेव शरीरे मन आसीत्। यथा कस्यचित् प्रिये विषये दूरङ्गतस्यापि मनो भवति तद्वत्। स तस्मिन्नेव शरीरे गतमनाः सन् किमकरोदिति ॥ ६ ॥

---

धस्य कर्त्ताभूत्। अधुना हिरण्यगर्भो भूयो यजेयेत्याह। तथाच कर्तृभेदाद्भूयः शब्दासामञ्जस्यमत आह। स तद्भावेति। स प्रजापतिरश्वमेधवासनाविशिष्टो ज्ञानकर्म्मफलत्वेन कल्पादौ निर्वृत्तो भूयो यजेयेत्याह। कर्तृभोक्त्रोरैक्येन साधकफलावस्थयोर्यजमानस्तत्वयोर्भेदाभावादित्यर्थः। प्रजापतिरीश्वरो न तस्य दुःखात्मकक्रत्वनुष्ठानेच्छा युक्तेत्याशङ्क्य प्रकृतिवशात्तदुपपत्तिमभिप्रेत्याह। सोऽश्वमेधेति। कथमेतावता विवक्षिता स्तुतिः सिद्धा इत्याशङ्क्याह। एवमिति। श्रमकारणमाह। स तप इति।

चक्षुरादीनां यशस्त्वे हेतुमाह। यशोहेतुत्वादिति। तदेव साधयति। तेषु हीति। प्राणा एवेति तथाशब्दार्थः। तत्त्वहि तेषु शरीरे बलम्भवतीति पूर्व्ववदेव हेतुरन्वेयः। उक्तमर्थं व्यतिरेकद्वारा स्फोर-

सोऽकामयत मेध्यं म इदꣳ स्यादात्मन्व्यनेन स्यामिति। ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वम्।

---

उच्यते सोऽकामयत कथं मेध्यं मेधार्हं यज्ञीयं मे ममेदं शरीरं स्यात्। किञ्चात्मन्वी आत्मवांश्चानेन शरीरेण शरीरवान् स्यामिति प्रविवेश। यस्मात्तच्छरीरं मद्वियोगात् गतयशोवीर्यं सदश्वदश्वयत् ततस्तस्मादश्वः समभवत्। ततोऽश्वनामा प्रजापतिरेव साक्षादत्र स्तूयते। यस्माच्च पुनस्तत् प्रवेशाद्गतयशोवीर्यत्वादमेध्यं सन्मेध्यमभूत्तदेव तस्मादेवाश्वमेधस्याश्वमेधनाम्नः क्रतोरश्वमेधत्वमश्वमेधनामलाभः। क्रियाकारकफलात्मको हि क्रतुः। स च प्रजापतिरेवेति स्तूयते। क्रतुनिर्वर्त्तकस्याश्वस्य प्रजापतित्वमुक्तं उषा वा अश्वस्य मेध्यस्येत्यादिना। तस्यैवाश्वस्य मेध्यस्य प्रजापतिस्वरूपस्याग्नेश्च यथोक्तस्य क्रतुफलात्मरूपतया

---

यति। न हीति। प्राणानां यशस्त्वं वीर्यवत्त्वं चोपसंहृत्य वाक्यार्थं निगमयति। तदेवमिति। तत्रार्थोऽश्वत्वादि व्याचष्टे। तदेवमित्यादिना। शरीरान्निर्गतस्य प्रजापतेर्मुक्तत्वमाशङ्क्याह। तस्येति। सम्यग्ज्ञानाभावादासङ्गे सत्यपि न पुनस्तस्मिन्प्रवेशो युक्तः परित्यक्तपरिग्रहायोगादिति शङ्कते। स तस्मिन्निति। ६।

अज्ञानवशादुपरित्यक्तपरिग्रहोऽपि सम्भवतीत्याह। उच्यत इति। वीतदेहस्य कामनाऽयुक्तेति शङ्कते। कथमिति। सामर्थ्यातिशयादशरीरस्यापि प्रजापतेस्तदुपपत्तिरिति मन्वानो ब्रूते। मेध्यमिति। कामनाफलमाह। इति प्रविवेशेति। तथापि कथं प्रकृतिनिर्वर्त्तिलिङ्गिरित्याशङ्क्याह। य-

एष ह वा अश्वमेधं वेद य एनमेवं वेद ।

---

समस्योपासनं विधातव्यमित्यारभ्यते । पूर्वत्र क्रियापदस्य विधायकस्याश्रुतत्वात् क्रियापदापेक्षत्वाच्च प्रकरणस्यायमर्थोऽवगम्यते ।

एष ह वै अश्वमेधं क्रतुं वेद यः कश्चिदेनमश्वमग्निरूपमर्कञ्च यथोक्तमेवं वक्ष्यमाणेन समासेन प्रदर्श्यमानेन विशेषणेन विशिष्टं वेद स एषोऽश्वमेधं वेद नान्यः । तस्मादेवं

---

दिति । यच्छब्दो यस्मादिति व्याख्यातः । देहस्याश्वत्वेऽपि कथं प्रजापतेस्तथात्वमित्याशङ्क्य तत्तादात्म्यादित्याह । तत इति । अश्वस्य प्रजापतित्वेन स्तुतित्वात्तस्योपास्यत्वं फलतीति भावः । तथापि कथमश्वमेधनामनिर्वचनमित्याशङ्क्याह । यस्माच्चेति । कृतोऽस्तदात्मकस्य प्रजापतेरिति यावत् । देहो हि प्राणवियोगादश्वयत् तत्रैव गात्रे मेधार्होऽभूदतः सोऽश्वमेधस्तत्तादात्म्यात्प्रजापतिरपि तथेत्यर्थः । ननु प्रजापतित्वेनाश्वमेधस्य स्तुतिर्नोपयोगिनी । अग्नेरुपास्यत्वेन प्रस्तुतत्वात् क्रतूपासनाभावादत आह । क्रियेति । ननु क्रत्वङ्गस्याश्वस्याश्वमेधक्रतोरात्मनश्चाग्नेरुक्तरीत्या स्तुतत्वात्तदुपास्तेश्च प्रागेवोक्तत्वादेष ह वा अश्वमेधमित्यादिवाक्यं नोपयुज्यते तत्राह । क्रतुनिर्वर्तकस्येति । उक्तञ्च । चित्यस्याग्नेस्तस्य प्राची दिगित्यादिना प्रजापतित्वमिति शेषः । अश्वोपासनमग्न्युपासनञ्चैकमेवेति वक्तुमुत्तरं वाक्यमित्याह । तस्यैवेति । य एवमेतदृदितेरदितित्वं वेदेत्यादौ प्रागेव विहितमुपासनं किम्पुनरारम्भेणेत्याशङ्क्याह । पूर्वत्रेति । यद्यपि विधिरदितित्वं वेदेति श्रुतस्तथापि सगुणोपास्तिविधिर्न प्रधानविधिः । अत्र तु प्रधानविधिरुपास्तिप्रकरणत्वादपेक्ष्यते । अतोऽश्वमेधं वेदेति प्रधानविधिरिति भावः ।

तात्पर्यमुक्त्वा वाक्यमादायाक्षराणि व्याकरोति । एष इति । यथोक्तमित्युभयत्र प्रजापतित्वमनुकृष्यते । तमनवरुद्धेत्यादिभिः प्र-

तमनवरुद्धेरवामन्यत । तꣳ संवत्सरस्य परस्तादात्मन आलभत । पशून्देवताभ्यः प्रत्यौहत् ।

---

वेदितव्य इत्यर्थः ॥ कथन्तत्र पशुविषयमेव तावद्दर्शनमाह । तत्र प्रजापतिर्भूयसा यज्ञेन भूयो यजेयेति कामयित्वात्मनमेव पशुं मेध्यं कल्पयित्वा तं पशुमनवरुद्धेरवोत्सृष्टं पशुमवरोधमकृत्वैव मुक्तप्रग्रहममन्यताचिन्तयत् । तं संवत्सरस्य पूर्णस्य परस्तादूर्द्ध्वमात्मने आत्मार्थमालभत प्रजापतिदेवतात्मकत्वेनेत्येतदालभतालम्भं कृतवान् । पशूनन्यान् ग्राम्यानारण्यांश्च देवताभ्यो यथादैवतं प्रत्यौहत् प्रतिगमितवान् । यस्माच्चैवं प्रजापतिरमन्यत तस्मादेवमन्योऽप्युक्तेन विधिनात्मानं पशुमश्वं मेध्यं कल्पयित्वा सर्वदैवत्योऽहं प्रोक्ष्यमाण आलभ्यमानस्त्वहं मद्दैवत्य एव स्याम् । अन्य इतरे पशवो ग्राम्यारण्या यथादैवतमन्याभ्यो देवताभ्य आलभ्यन्ते मदवयवभूताभ्य एवेति विद्यात् ॥

---

दृश्यमानविशेषणम् । विधिरत्र स्पष्टो न भवतीत्याशङ्क्याह । तस्मादिति । अश्वमेधो विशेष्यत्वेन सम्बध्यते । एवं यज्ञात्मनिदर्शनत्वे भाति सति कुतो विधिरित्याह । कथमिति । एष ह वा अश्वमेधं वेदेत्यादौ विवक्षितस्य विधेर्भूमिकां करोति । तत्रेत्यादिना । उपासनविधिप्रस्तावः सम्प्रत्यर्थः । कथं नु पशुविषयन्दर्शनन्दर्शयति । तत्रेति । एवमनन्तरवाक्ये प्रवृत्ते सतीति यावत् । अथ विवक्षितं विधिमभिदधाति । यस्माच्चेति । प्रजापतिरित्यस्मकृतावस्थायाममन्यतेत्यत्र किम्प्रमाणमित्याशङ्क्य सम्प्रति तत्कार्य्यभूतासु प्रजासु तथाविधचेष्टादृष्टेरित्याह । अत एवेति ।

तस्मात्सर्व्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्त। एष वा अश्वमेधो य एष तपति तस्य संवत्सर आत्माऽयमग्निरर्कस्तस्येमे लोका आत्मानः तावेता-वर्काश्वमेधौ।

---

अतएवेदानीं सर्वदेवत्यं प्रोक्षितम्प्राजापत्यमालभन्ते याज्ञिकाः। एवं एष वा अश्वमेधो य एष तपति यस्त्वेवं पशु-साधनकः क्रतुः स एष साक्षात् फलभूतो निर्दिश्यते एष वा अश्वमेधः। कोऽसौ य एष सविता तपति जगदवभासयति तेजसा। तस्यास्य क्रतुफलात्मनः संवत्सरः कालविशेष आत्मा शरीरं तन्निर्वर्त्त्यत्वात्संवत्सरस्य। तस्यैव क्रत्वात्मनोऽग्निसा-ध्यत्वाच्च फलस्य क्रतुत्वरूपेणैव निर्देशः। अयम्पार्थिवोऽग्नि-रर्कः साधनभूतः। तस्य चार्कस्य क्रतौ चित्यस्येमे लोका-

---

प्रोक्षितं मन्त्रसंस्कृतं पशुमिति यावत्। फलावस्थप्रजापतिरुदितेत्ययं शब्दार्थः। उपासनविधिरुक्तः। सम्प्रति प्रतीकमादाय तत्पर्य्यमाह। एष इति। द्विविधो हि क्रतुः। कल्पितपशुहेतुको बाह्यतद्धेतुकश्च। स च द्विप्रकारोऽपि फलरूपेण स्थितः॥ सवितैवेति उपास्तिफलं वक्तुं ए-तद्वाक्यमित्यर्थः। विशेषोक्तिं विना नास्ति बुभुत्सोपशान्तिरित्याह। को-ऽसाविति। क्रतुफलात्मकः सविता मण्डलं देवता वेति सन्देहे द्वितीयं गृहीत्वा तस्येत्यादि व्याचष्टे। तस्यास्येति। आदित्योदयानुदयाभ्यामहोरात्रिद्वारा संवत्सरव्यवस्थानात्तन्निर्म्मातृत्तस्य युक्तं तदात्मत्वमित्यर्थः। क्रतोरादित्यत्वमुक्त्वा तदङ्गस्याग्नेस्तद्रूपत्वं वक्तुमयमग्निरर्क इति वाक्यम्। तस्यार्थमाह। तस्यैवेति। ननु पूर्व्वोक्तस्यैवाग्नेरादित्यत्वं कुतो नियम्यते ऽन्यश्चित्योऽग्निरन्यश्चाग्निरादित्यः किं न स्यादित्याशङ्क्याह। तस्य चेति।

सा पुनरेकैव देवता भवति मृत्युरेवाप पुनर्मृत्युञ्जयति नैनं मृत्युराप्नोति मृत्युरस्यात्मा भवति

---

त्रयोऽप्यात्मानः शरीरावयवाः । तथाच व्याख्यातं तस्य प्राची दिगित्यादिना ॥ तावग्न्यादित्यावेतौ यथा विशेषितावर्काश्वमेधौ क्रतुफले ॥

अर्को यः पार्थिवोऽग्निः स साक्षात् क्रतुरूपः क्रियात्मकः क्रतोरग्निसाध्यत्वात्तद्रूपेणैव निर्देशः । क्रतुसाध्यत्वाच्च फलस्य क्रतुरूपेणैव निर्देशः । आदित्योऽश्वमेध इति । तौ साध्यसाधनौ क्रतुफलभूतावग्न्यादित्यौ सा उ पुनर्भूय एकैव देवता भवति । का सा मृत्युरेव । पूर्वमप्येकैवासीत् क्रियासाधनफलभेदाय विभक्ता ॥ तथाचोक्तम् । स त्रेधात्मानं व्यकुरुतेति । सा पुनरपि क्रियानिर्वृत्त्युत्तरकालमेकैव देवता भवति मृत्युरेव फलरूपः । यः पुनरेवमेनमश्वमेधं मृत्युमे-

---

तथापि कथं तस्यैवादित्यत्वं तत्राह । तथा चेति । तस्य प्राचीत्यादित्यादिना लोकात्मकत्वाश्वस्याग्नेरुक्तं तदिहाप्यनूद्यते तस्मात्तस्यैवात्मादित्यत्वमिष्टमित्यर्थः । अग्न्यादित्यभेदस्य लोकवेदसिद्धत्वान्न तयोरेकेन क्रतुना तादात्म्यमित्याशङ्क्याह । ताविति । यथा विशेषितत्वमादित्यरूपत्वम् ।

कुतस्तस्य चार्कस्य क्रतुरूपत्वं साधनत्वेन भेदादित्याशङ्क्योपचारादित्याह । क्रियात्मक इति । तथापि कथमादित्यस्य क्रतुतादात्म्योक्तिरित्याशङ्क्याह । क्रतुसाध्यत्वादिति । नन्वादित्यस्य क्रतुफलत्वेन क्रतुत्वेऽपि हेतोरग्नेस्तादात्म्यायोगादयुक्तमग्नेरादित्यत्वमित्याशङ्क्याह । ताविति । क्रतुफलत्वात्तदात्मा सविता तद्धेतुश्चित्योऽग्निस्तावुक्तविभागाद्व्युत्पादितौ साधनादिव्यापारौ सन्तावेकैव प्राणाख्या देवतेति तयोरैक्योक्तिरित्यर्थः ।

एतासान्देवतानामेको भवति ॥ ७ ॥

इति द्वितीयं ब्राह्मणम् ।

द्वया ह प्राजापत्या देवाश्चासुराश्च ॥

---

कान्देवतां वेद अहमेव मृत्युरस्मि अश्वमेध एका देवता सा मद्रूपाश्वाग्निसाध्येति । सोऽपजयति पुनर्मृत्युं पुनर्मरणं सकृन्मृत्वा पुनर्मरणाय न जायत इत्यर्थः । अपजितोऽपि मृत्युरेनं पुनराप्नुयादित्याशङ्क्याह । नैनं मृत्युराप्नोति ॥ कस्मान्मृत्युरस्यैव विद आत्मा भवति । किञ्च मृत्युरेव फलरूपः सन्नेतासान्देवतानामेको भवति तस्यैतत् फलम् ॥ ७ ॥ तृतीयस्य द्वितीयं ब्राह्मणम् ॥

द्वया हेत्याद्यस्य कः सम्बन्धः । कर्म्मणां ज्ञानसहितानां परा गतिरुक्ता । मृत्वात्मभावोऽश्वमेधगत्युक्त्या । अथेदानीं मृत्वात्मभावसाधनभूतयोः कर्म्मज्ञानयोर्यत उद्भवस्तत्प्रकाश-

---

एकैवेत्युक्ते प्रकृतयोरग्न्यादित्ययोरन्यतरपरिशेषं शङ्कते । का सेति । कथं द्वयोरेकत्वमेकत्वे वा कथं द्वित्वं तत्राह । पूर्व्वमपीति । उक्तेऽर्थे वाक्योपक्रममनुकूलयति । तथा चेति । स पुनरिति । पुनरित्यादेरर्थं निगमयति । स पुनरिति । ननु फलकथनार्थमुपक्रम्य प्राणात्मनाग्न्यादित्ययोरेकत्वं वदता प्रक्रान्तं प्रस्तुतमिति चेत्याह । यः पुनरिति । एकत्वमभिन्नत्वम् ॥ २ ॥ तृतीये द्वितीयं ब्राह्मणम् ।

द्वितीयमग्निब्राह्मणान्तरमवतार्य तस्य पूर्व्वेण सम्बन्धाप्रतीतेर्न सोऽस्तीत्याशङ्क्य हेतुमुपन्यस्यन् समाधानमाहेत्याह — 

नार्थमुद्गीथब्राह्मणमारभ्यते ॥ ननु मृत्य्वात्मभावः पूर्वञ्च ज्ञानकर्म्मणोः फलमुक्तम्। उद्गीथज्ञानकर्म्मणोस्तु मृत्य्वात्मभावातिक्रमणं फलं वक्ष्यति। अतो भिन्नविषयत्वात् फलस्य न पूर्वकर्मज्ञानोद्भवप्रकाशनार्थत्वमिति चेत्। नायन्दोषः। अग्न्यादित्यात्मभावत्वादुद्गीथफलस्य पूर्वत्राप्येतदेव फलमुक्तमेतासान्देवतानामेको भवतीति। ननु मृत्युमतिक्रान्त इत्यादि विरुद्धम्। न स्वाभाविकपाप्मासङ्गविषयत्वादतिक्रमणस्य कोऽसौ स्वाभाविकः पाप्मासङ्गो मृत्युः। कुतो वा तस्योद्भवः। केन वा तस्यातिक्रमणम्। कथं वेत्येतस्यार्थप्रकाशनायाख्यायिकाऽऽरभ्यते। कथं द्वया द्विप्रकाराः। ह इति पूर्ववृत्तावद्योतको निपातः। वर्त्तमानप्रजापतेः पूर्वजन्मनि

---

गतिर्मुक्तिरित्याशङ्क्याह। मृत्य्वात्मभाव इति। अश्वमेधोपासनस्य साश्वमेधस्य केवलस्य वा फलमुक्तं नोपास्यन्तराणां कर्मान्तराणाञ्चेत्याशङ्क्याश्वमेधफलोक्त्योपास्यन्तराणां केवलानां समुच्चितानाञ्च फलमुपलक्षितमित्याह। अश्वमेधेति। वृत्तमनूद्योत्तरब्राह्मणस्य तात्पर्य्यमाह। अथेति। ज्ञानयुक्तानां कर्म्मणां संसारफलत्वप्रदर्शनानन्तरमिति यावत्। ज्ञानकर्मणोरुद्भावकस्य प्राणस्य स्वरूपं निरूपयितुं ब्राह्मणमित्युत्थाप्योत्थापकत्वं सम्बन्धमुक्तमाक्षिपति। नन्विति। मृत्युमतिक्रान्तो दीप्यत इति मृत्योरतिक्रमस्य वक्ष्यमाणज्ञानकर्म्मफलत्वात्पूर्व्वत्र च तदन्तर्भावस्य तत्फलस्योक्तत्वात् उभयस्यापि फलस्य भेदात् पूर्व्वोत्तरयोर्ज्ञानकर्म्मणोर्विषयवद्धेतोश्च भेदान्न पूर्व्वोक्तयोस्तयोरुद्भवकारणप्रकाशनार्थं ब्राह्मणमित्यर्थः। पूर्व्वोत्तरज्ञानकर्मफलभेदाभावादेकविषयत्वात्तदुद्भावकप्रकाशनार्थं ब्राह्मणं युक्तमिति परिहरति।

यद्वृत्तन्तदेव द्योतयति ह शब्देन। प्राजापत्याः प्रजापतेर्वृत्तजन्मावस्थस्यापत्यानि प्राजापत्याः। के ते देवाश्चासुराश्च। तस्यैव प्रजापतेः प्राणा वागादयः। कथं पुनस्तेषान्देवासुरत्वम्। उच्यते शास्त्रजनितज्ञानकर्मभाविता द्योतनाद्देवा भवति। त एव स्वाभाविकप्रत्यक्षानुमानजनितदृष्टप्रयोजनकर्मज्ञानभाविता असुराः। स्वेष्वेवासुषु रमणात् सुरेभ्यो वा देवेभ्योऽन्यत्वात्। यस्माच्च दृष्टप्रयोजनज्ञानकर्मभाविता असुराः।

---

नायमिति। वाक्यशेषविरोधं शङ्कित्वा दूषयति नन्वित्यादिना। स्वाभाविकः शास्त्रानाधेयो योऽयं पाप्मा विषयासङ्गरूपः स मृत्युः। तस्यातिक्रमणं वाक्यशेषे कथ्यते। न हि हिरण्यगर्भात्मत्वस्य तयोरतः पूर्वोक्तज्ञानकर्मभ्यां तुल्यविषयत्वमेतयोस्तरज्ञानकर्मणोरित्यर्थः। ज्ञानकर्मणोरुद्भावकत्वं वक्तुं ब्राह्मणमारभ्यतामाख्यायिका तु किमर्थेत्याशङ्क्य तस्यास्तात्पर्यमाह। कोऽसाविति। कथं यथोक्तो ब्राह्मणाख्यायिकयोरर्थः शक्यो ज्ञातुमित्याकाङ्क्षां निश्चिप्याक्षराणि व्याकरोति कथमित्यादिना। निपातार्थमेव स्फुटयति। वर्त्तमानेति। प्रजापतिशब्दो भविष्यद्वृत्त्या यजमानं गोचरयतीत्याह। इत्तेति। इन्द्रादयो देवा विरोचनादयश्चासुरा इत्याशङ्कां वारयति। तस्यैवेति। याजमानेषु प्राणेषु देवत्वमसुरत्वञ्च विरुद्धं न सिद्धतीति शङ्कते। कथमिति। तेषु तदुभयमौपाधिकं साधयति। उच्यत इति। शास्त्रानपेक्षयोर्ज्ञानकर्मणोरुत्पादकमाह। प्रत्यक्षेति। सन्निधानासन्निधानाभ्यां प्रमाणद्वयोक्तिः। स्वेष्वेवासुषु रमणं नामात्मम्भरितत्वम्। इत्यादिवाक्यद्वयं व्याचष्टे। यस्माच्चेति।

ततः कानीयसा एव देवा ज्यायसा असुराः। य एषु लोकेष्वस्पर्द्धन्त ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति ॥ १ ॥

---

ततस्तस्मात् कानीयसाः कनीयांस एव कानीयसाः स्वार्थे वृद्धिः कनीयांसोऽल्पा एव देवाः। ज्यायसा असुरा ज्यायांसोऽसुराः। स्वाभाविकी हि कर्मज्ञानप्रवृत्तिर्महत्तरा। प्राणानां शास्त्रजनितायाः कर्मज्ञानप्रवृत्तेर्दृष्टप्रयोजनत्वात्। अतएव कनीयस्त्वं देवानां शास्त्रजनितप्रवृत्तेरल्पत्वात्। अत्यन्तयत्नसाध्या हि सा।

ते देवाश्चासुराश्च प्रजापतिशरीरस्था एषु लोकेषु निमित्तभूतेषु स्वाभाविकेतरकर्मज्ञानसाध्येष्वस्पर्द्धन्त स्पर्द्धां कृतवन्तः। देवानाञ्चासुराणाञ्च वृत्त्युद्भवाभिभवौ स्पर्द्धा कदाचिच्छास्त्रजनिता कर्मज्ञानभावनारूपा वृत्तिः प्राणानामुद्भवति। यदा चोद्भवति तदा दृष्टप्रयोजना प्रत्यक्षानुमानज-

---

देवानामल्पत्वं प्रपञ्चयति। स्वाभाविकीहीति। महत्तरत्वे हेतुर्दृष्टप्रयोजनत्वादिति। असुराणां बहुत्वं प्रपञ्चयति। शास्त्रजनितेति। असुराणाम्बाहुल्यमिति शेषः। तदेव साधयति। अत्यन्तेति।

उभयेषान्देवासुराणां मिथः सङ्घर्षन्दर्शयति। ते देवाश्चेति। कथम्ब्रह्मादीनां स्थावरान्तानां भोगस्थानानां स्पर्द्धानिमित्तत्वमित्याशङ्क्य तेषां शास्त्रीयेतरज्ञानकर्मसाध्यत्वात्तयोश्च देवासुरजयाधीनत्वात्तस्य च स्पर्द्धापूर्व्वकत्वात्परम्परया लोकानां तन्निमित्तत्वमित्यभिप्रेत्य विशिनष्टि। स्वाभावि-

नितकर्म्मज्ञानभावनारूपा तेषामेव प्राणानां वृत्तिरासुर्य्यभिभूयते। स देवानाञ्जयोऽसुराणाम्पराजयः। कदाचित्तद्विपर्य्ययेण देवानां वृत्तिरभिभूयते आसुर्य्या उद्भवः। सोऽसुराणाञ्जयो देवानाम्पराजयः। एवन्देवानाञ्जये धर्म्मभूयस्त्वादुत्कर्ष आप्रजापतित्वप्राप्तिः। असुरजयेऽधर्मभूयस्त्वादपकर्ष आस्थावरत्वप्राप्तिः। उभयसाम्ये मनुष्यत्वप्राप्तिः। त एवं कनीयस्त्वादभिभूयमाना असुरैर्देवा बाहुल्यादसुराणां किं कृतवन्त इत्युच्यते। ते देवा असुरैरभिभूयमाना ह किल ऊचुरुक्तवन्तः। कथं हन्तेदानीमस्मिन्यज्ञे ज्योतिष्टोम उद्गीथेनोद्गीथकर्म्मपदार्थकर्त्तृस्वरूपाश्रयणेनात्ययामातिगच्छामः। असुरानभिभूय स्वन्देवभावं शास्त्रप्रकाशितं प्रतिपद्यामह इत्युक्तवन्तोऽन्योन्यम्॥ उद्गीथकर्म्मपदार्थकर्त्तृस्वरूपाश्रयणञ्च ज्ञानकर्म्मभ्याम्। कर्म्म वक्ष्यमाणमन्त्रजपलक्षणं विधित्समानं तदेतानि जपेदिति। ज्ञानन्त्विदमेव निरूप्यमाणम्॥ १॥

---

का पुनरेषां स्पर्द्धा नामेत्याशङ्क्याह। देवानाञ्चेति। तामेव सफलां विवृणोति। कदाचिदित्यादिना। अधिकृतैरसुरपराजये देवजये च प्रयतितव्यमित्यनुग्रहबुद्ध्या जयफलमाह। एवमिति। आकाङ्क्षापूर्व्वकमनन्तरवाक्यमादाय व्याकरोति। तएवमित्यादिना। योऽयमुद्गीथो नाम कर्म्माङ्गभूतः पदार्थस्तत्कर्त्तुः प्राणस्य स्वरूपाश्रयणेन कथं सिद्ध्यतीत्याशङ्क्याह। उद्गीथेति। किन्तत् कर्म्म किं वा ज्ञानन्तदाह। कर्मेति। तान्येतान्यसतो मा सद्गमयेत्यादीनि यजूंषि जपेदिति विधित्स्यमानमिति योजना॥१॥

नन्विदमभ्यारोहजपविधिशेषोऽर्थवादो न ज्ञाननिरूपण-
परम्। न। य एवं वेदेति वचनात्। उद्गीथप्रस्तावे पुरा-
कल्पश्रवणाद् उद्गीथविधिपरमिति चेत्। न। अप्रकरणात्।
उद्गीथस्य चान्यत्र विहितत्वात् विद्याप्रकरणत्वाच्चास्याभ्या-
रोहजपस्य चानित्यत्वात्। एवंवित्प्रयोज्यत्वात् विज्ञानस्य च
नित्यवत् श्रवणात्। तद्वैतल्लोकजिदेवेति च श्रुतेः। प्राणस्य
वागादीनाञ्च शुद्ध्यशुद्धिवचनात्। न ह्यनुपास्यत्वे प्राणस्य
शुद्धिवचनम्। वागादीनां च सहोपन्यस्तानामशुद्धिवचनम्।

---

द्वया हेत्यादि न ज्ञाननिरूपणपरम्। जपविधिशेषत्वेनार्थवादत्वात्
तत् कुतोऽत्र ज्ञानस्य निरूप्यमाणत्वमित्याक्षिपति। नन्विति। आभिरु-
क्ष्येनारोहतीति। देवभावमनेनेत्यभ्यारोहः मन्त्रजपस्तद्विधिशेषोऽर्थवादो
द्वया हेत्यादिवाक्यमित्यर्थः। उपास्तिविधिश्रवणात् तत्परं वाक्यं न
जपविधिशेष इति दूषयति। नेति। माभूज्जपविधिशेषस्तथाप्युद्गायेत्यौद्गा-
त्रस्य कर्मणः सन्निधाने पुरातनकल्पनाप्रकारस्य द्वया हेत्यादिना श्रवणात्
तद्विधिशेषोऽर्थवादोऽयमिति शङ्कते। उद्गीथेति। नेदं वाक्यं ज्ञान-
स्योद्गीथविधिशेषस्तत्प्रकरणस्थत्वाभावेन सन्निध्यभावादिति दूषयति। नाप्र-
करणादिति। उद्गीथस्तर्हि क्व विधीयते न खल्वविहितमङ्गम्भवति तत्राह।
उद्गीथस्य चेति। अन्यत्रेति कर्मकाण्डोक्तिः। अथोद्गायेत्युद्गीथविधिरपि
इह प्रतीयते तत्कथं सन्निधिरपोद्यते तत्राह। विद्येति। उद्गीथविधि-
रिह प्रतीयमानः प्राणस्योद्गातृत्वोपासनविधिः। अन्यथाप्रकारविरोधा-
दित्यर्थः। जपविधिशेषत्वमुद्गीथविधिशेषत्वं वा ज्ञानस्य नास्तीत्युक्तम्।
इदानीं जपविधिशेषत्वाभावे युक्त्यन्तरमाह। अभ्यारोहेति। अनित्यत्वं
साधयति। एवमिति। प्राणविज्ञानवतानुष्ठेयो जपो न तद्विज्ञानात् प्राग-
स्ति तस्यासौ पश्चाद्भावी। प्रागेव सिद्धं विज्ञानं प्रयोजयतीत्यर्थः। वस्तुमि

वागादिनिन्दया मुख्यप्राणस्तुतिश्चाभिप्रेतोपपद्यते। मृत्युमतिक्रान्तो दीप्यत इत्यादिफलवचनञ्च। प्राणस्वरूपापत्तिर्हि फलं तद्यद्वागाद्यग्न्यादिभावः।

भवतु नाम प्राणस्योपासनं नतु विशुद्ध्यादिगुणवत्तेति। ननु स्याच्छ्रुतत्वात् न स्यादुपास्यत्वे मृत्यर्थोपपत्तेः। न। अविपरीतार्थप्रतिपत्तेः श्रेयःप्राप्त्युपपत्तेर्लोकवत्। यो ह्यविपरीतमर्थं प्रतिपद्यते लोके स इष्टं प्राप्नोति अनिष्टाद्वा निवर्त्तते न विपरीतार्थप्रतिपत्त्या। तथेहापि श्रौतशब्दजनितार्थप्रतिपत्तौ श्रेयःप्राप्तिरुपपन्ना न विपर्य्यये। न

---

प्राचीनत्वं कथमित्याशङ्क्याह। विज्ञानस्य चेति। य एवं विद्वान् पौर्णमासीं यजत इति वत् य एवं वेदेति विज्ञानं श्रुतं न हि प्रयाजादिर्पौर्णमासीप्रयोजकम्। तस्या एव तत्प्रयोजकत्वात्। तथा प्राणवित्प्रयोज्यो जपो न विज्ञानप्रयोजकः। तस्य स्वप्रयोजकत्वेन प्रागेव सिद्धेरावश्यकत्वादित्यर्थः। फलवत्त्वाच्च प्राणविज्ञानं स्वतन्त्रं विधित्सितमित्याह। तद्धेति। प्राणोपास्तेर्विवक्षितत्वे हेत्वन्तरमाह। प्राणस्येति। यद्धि स्तूयते तद्विधीयत इति न्यायमाश्रित्योक्तमेव प्रपञ्चयति। न हीति। अतश्च प्राणोपास्तिरत्र विधित्सितेत्याह। मृत्युमिति। फलवचनं प्राणस्यानुपास्यत्वेनोपपद्यत इति सम्बन्धः। उक्तमेव व्यनक्ति। प्राणेति। मृत्युमोक्षणानन्तरं वागादीनां यदग्न्यादित्वं फलं तदध्यात्मपरिच्छेदं हित्वोपास्तिवराधिदैविकप्राणस्वरूपापत्तेरुपपद्यते। तस्माद्विधित्सितैवात्र प्राणोपास्तिरित्यर्थः।

उक्तन्यायेन प्राणोपास्तिमुपेत्य प्राणदेवतां शुद्ध्यादिगुणवतीमाक्षिपति। भवत्विति। यथा प्राणस्योपास्तिः शास्त्रदृष्टत्वादिष्टा तथास्य गुणसम्बन्धः श्रुतत्वादेष्टव्यः। उपास्त्यावुपास्ये च गुणवति प्राणे प्रामाणिकप्राप्तेरविशेषादिति सिद्धान्तो ब्रूते। नन्विति। प्राणस्योपास्यत्वे वि-

चोपासनार्थश्रुतशब्दोत्थविज्ञानविषयस्यायथार्थत्वे प्रमाण-
मस्ति। न च तद्विज्ञानस्यापवादः श्रूयते। ततः श्रेयःप्रा-
प्तिदर्शनाद्यथार्थतां प्रतिपद्यामहे। विपर्यये चानर्थप्राप्तिद-
र्शनात्। यो हि विपर्ययेणार्थं प्रतिपद्यते लोके पुरुषं
स्थाणुरिति अमित्रं मित्रमिति वा सोऽनर्थं प्राप्नुवन् दृश्यते।
आत्मेश्वरदेवतादीनामप्ययथार्थानामेव चेद्ग्रहणं श्रुतितोऽन-
र्थप्राप्त्यर्थं शास्त्रमिति ध्रुवं प्राप्नुयाल्लोकवदेव न चैतदिष्टम्।

---

शुद्ध्यादिगुणवादस्य स्तुत्यर्थत्वेनार्थवादत्वसम्भवान्न यथोक्ता देवता स्यादिति
पूर्ववाद्याह। न स्यादिति। विशुद्ध्यादिगुणवादस्यार्थवादत्वेऽपि नाभू-
तार्थवादत्वमिति परिहरति। नेति। विशुद्ध्यादिगुणविशिष्टप्राण-
दृष्टेरत्र फलप्राप्तिः श्रुता न ज्ञानस्य मिथ्यार्थत्वे युक्ता सम्यग्ज्ञानादेव
पुमर्थाप्तेः सम्भवादतः स्तुतिरपि यथार्थैवेत्यर्थः। लोकदृष्टान्तं व्याचष्टे।
यो हीति। इहेति वेदाख्यदार्ष्टान्तिकोक्तिः। ननु विशुद्ध्यादिगुणवतीं दे-
वतां वदन्ति वाक्यान्युपासनाविध्यर्थत्वान्न स्वार्थे प्रामाण्यं प्रतिपद्यन्ते
तत्राह। न चेति। अन्यपराणामपि वाक्यानां मानान्तरसंवादविसं-
वादयोरसतोः। स्वार्थे प्रामाण्यमनुभवानुसारिभिरेष्टव्यमित्यर्थः। ननु
प्राणस्य विशुद्ध्यादिवादो न स्वार्थे मानमन्यपरत्वादादित्ययूपादिवाक्यवदत
आह। न चेति। आदित्ययूपादिवाक्यार्थज्ञानस्य प्रत्यक्षादिना-
पवादवद्विशुद्ध्यादिगुणविज्ञानस्य नापवादः श्रुतस्तस्माद्विशुद्ध्यादिवादस्य स्वा-
र्थे मानत्वमप्रत्यूहमित्यर्थः। विशुद्ध्यादिगुणकप्राणविज्ञानात्फलश्रवणा-
त्तद्वादस्य यथार्थत्वमेवेत्युपसंहरति। तत इति। लोकवद्वेदेऽपि सम्यग्-
ज्ञानादिष्टप्राप्तिरनिष्टपरिहारश्चेत्यन्वयमुखेनोक्तमर्थं व्यतिरेकमुखेनापि सम-
र्थयते। विपर्यये चेत्यादिना। शास्त्रस्यानर्थार्थत्वमिष्टमिति शङ्कां नि-
राचष्टे। न चेति। अपौरुषेयस्यासम्भावितसर्वदोषस्याशेषपुरुषार्थ-
हेतोः शास्त्रस्यानर्थार्थत्वमेष्टुमशक्यमित्यर्थः। शास्त्रस्य यथार्थभूतार्थत्वं
निगमयति।

तस्माद्यथाभूतानेवात्मेश्वरदेवतादीन् ग्राहयत्युपासनार्थं शास्त्रम्। नामादौ ब्रह्मदृष्टिदर्शनादयुक्तमिति चेत् स्फुटं नामादेरब्रह्मत्वम्। तत्र ब्रह्मदृष्टिं स्थाण्वादाविव पुरुषदृष्टिं विपरीतां ग्राहयच्छास्त्रं दृश्यते। तस्माद्यथार्थमेव शास्त्रतः प्रतिपत्तेः श्रेय इत्ययुक्तमिति चेत्। न। प्रतिमावद्भेदप्रतिपत्तेः। नामादावब्रह्मणि ब्रह्मदृष्टिं विपरीतां ग्राहयति। शास्त्रं स्थाण्वादाविव पुरुषदृष्टिमिति नैतत्साध्ववोचः। कस्माद्भेदेन हि ब्रह्मणो नामादिवस्तुप्रतिपन्नस्य नामादौ विधीयते ब्रह्मदृष्टिः प्रतिमादाविव विष्णुदृष्टिः। आलम्बनत्वे हि नामादिप्रतिपत्तिः प्रतिमावदेव न तु नामाद्येव ब्रह्मेति। यथा स्थाणावनिर्ज्ञाते न स्थाणुरिति पुरुष एवायमिति प्रतिपद्यते विपरीतम्। न तु तथा नामादौ ब्रह्मदृष्टिर्विप-

---

तस्मादिति। उपासनार्थं ज्ञानार्थञ्चेति शेषः। शास्त्राद्यथार्थप्रतिपत्तेः श्रेयःप्राप्तिरित्यत्र व्यभिचारं चोदयति। नामादाविति। तदेव स्फुटयति। स्फुटमिति। अब्रह्मणि ब्रह्मदृष्टिरेतस्मिंस्तद्बुद्धित्वान्मिथ्या धीः। सा च यावन्नाम्नो गतमित्यादिश्रुत्या फलवती। ततः शास्त्राद्यथार्थप्रतिपत्तेरेव फलमित्ययुक्तमित्यर्थः। भेदापह्नपूर्व्वकोऽन्यस्यान्यात्मतावभासो मिथ्याज्ञानम्। अत्र तु भेदे भासमानेऽन्यत्रान्यदृष्टिर्विधीयते। यथा। विष्णोर्भेदे प्रतिमायां गृह्यमाणे तत्र विष्णुदृष्टिः क्रियते। तन्नेदं मिथ्याज्ञानमित्याह। नेति। नञर्थं स्फुटयति। नामादाविति। प्रश्नपूर्व्वकं हेतुं व्याचष्टे। कस्मादिति। प्रतिमायां विष्णुदृष्टिं प्रत्यालम्बनत्वमेव न विष्णुतादात्म्यं नामादेस्तु ब्रह्मतादात्म्यं स्तुतमिति वैषम्यमाशङ्क्याह। आलम्बनत्वेनेति। उक्तमर्थं वैधर्म्यदृष्टान्तेन स्फुटयति। यथेति। कर्म्ममीमांसको ब्रह्मविद्वेषं प्रकटयन् प्रत्य-

रीता। ब्रह्मदृष्टिरेव केवला नास्ति ब्रह्मेति चेत्, एतेन प्रतिमाब्राह्मणादिषु विष्णुादिदेवपित्रादिदृष्टीनां तुल्यता। न ऋगादिषु पृथिव्यादिदृष्टिदर्शनात् विद्यमानपृथिव्यादिवस्तु-दृष्टीनामेवर्गादिविषयेष्वाक्षेपदर्शनात्। तस्मात्तत्सामान्यान्ना-मादिषु ब्रह्मादिदृष्टीनां विद्यमानब्रह्मादिविषयत्वसिद्धिः। एतेन प्रतिमाब्राह्मणादिषु विष्णुादिदेवपित्रादिबुद्धीनाञ्च स-त्यवस्तुविषयत्वसिद्धिः। मुख्यापेक्ष्यत्वाच्च गौणत्वस्य। पञ्चा-ग्न्यादिषु चाग्नित्वादेर्गौणत्वान्मुख्याग्न्यादिसद्भाववन्नामादिषु ब्रह्मत्वस्य गौणत्वान्मुख्यब्रह्मसद्भावोपपत्तिः। क्रियार्थैश्चाविशे-षाद्विद्यार्थानाम्। यथा च दर्शपौर्णमासादिक्रियेदम्फला

---

वतिष्ठते। ब्रह्मेति। केवला तद्दृष्टिरेव नास्ति चोद्यते चोदनावशाच्च फलं चेत्स्यति ब्रह्म तु नास्ति मानाभावादित्यर्थः। अथ यथा देवानां प्रतिमा-दिषूपास्यमानानामन्यत्र सत्त्वम्। यथा च वस्वाद्यानां पितॄणां ब्राह्मणा-दिदेहे तर्प्यमाणानामन्यत्र सत्त्वम्। तथा ब्रह्मणोऽपि नामादावुपास्यत्वाद-न्यत्र सत्त्वं भविष्यतीत्याशङ्क्याह। एतेनेति। नामादौ ब्रह्मदर्शनेनेति यावत्। दृष्टान्तासिद्धिर्न क्वापि ब्रह्मास्तीति भावः। सत्यज्ञानादिलक्षणं ब्रह्म नास्तीत्ययुक्तम्। सदेवसौम्येदमित्यादिश्रुतेरित्याह।

नेति। किञ्च ब्रह्मदृष्टिः सत्यर्था शास्त्रीयदृष्टित्वात् दूवमेवर्गाग्निः सामेति दृष्टिवदित्याह। ऋगादिष्विति। तदेव स्फुटयति। विद्यमानेति। ताभिर्दृष्टिभिः सामान्यं दृष्टित्वम् तस्मादिति यावत्। यत्तु दृष्टान्तासिद्धि-रिति तत्राह। एतेनेति। ब्रह्मदृष्टेः सत्यार्थत्ववचनेनेति यावत्। ब्रह्मा-स्तित्वे हेत्वन्तरमाह। मुख्यापेक्षत्वादिति। उक्तमेव विवृणोति। पञ्चेति। पञ्चाग्नयो द्युपर्जन्यपृथिवीपुरुषयोषितः। आदिपदं वाग्धेन्वादिसङ्ग्रहा-र्थम्। ननु वेदान्तवेद्यं ब्रह्मेष्यते न च तेभ्यस्तद्धीः सिद्ध्यति तेषां विधि-वैधुर्येणाप्रामाण्यात् तत् कुतो ब्रह्मसिद्धिरत आह। क्रियार्थैश्चेति। वि-

विशिष्टेतिकर्त्तव्यताका एवं क्रमप्रयुक्ताङ्गा चेदित्येतदलौकिकं वस्तु प्रत्यक्षाद्यविषयं तथाभूतञ्च वेदवाक्यैरेव ज्ञाप्यते। तथा परमात्मेश्वरदेवतादिवस्तुस्थूलादिधर्म्मकमगनयाद्यतीतं चेत्येवमादिविशिष्टमिति वेदवाक्यैरेव ज्ञाप्यत इत्यलौकिकत्वात् तथाभूतमेव भवितुमर्हतीति॥ न च क्रियार्थैर्वाक्यैर्ज्ञानवाक्यानां बुद्ध्युत्पादकत्वे विशेषोऽस्ति। न चानिश्चिता विपर्य्यस्ता वा परमात्मादिवस्तुविषया बुद्धिरुत्पद्यते। अनुष्ठेयाभावादयुक्तमिति चेत्।

क्रियार्थैर्वाक्यैस्त्वंशभावनानुष्ठेया ज्ञाप्यतेऽलौकिक्यपि। न तथा परमात्मेश्वरादिविज्ञानेऽनुष्ठेयं किञ्चिदस्ति। अतः क्रियार्थैः साधर्म्यमित्ययुक्तमिति चेत्। न ज्ञानस्य तथाभूतार्थविषयत्वात्। न ह्यनुष्ठेयस्य त्वंशस्य भावनाख्यस्यानु-

---

मतं स्वार्थे प्रमाणमज्ञातज्ञापकत्वात् सम्मतवत्। अतो वेदान्तशास्त्रादेव ब्रह्मसिद्धिरित्यर्थः। सिद्धसाध्यार्थभेदेन वैषम्यात् अविशिष्टत्वमनिष्टमित्याशङ्क्योक्तं विद्यणोति। यथा चेति। विशिष्टत्वं स्वरूपोपकारित्वं फलोपकारित्वञ्च पञ्चमोक्तप्रकारं परामृशमेवमित्यादिदं अलौकिकत्वं साधयति। प्रत्यक्षादीति। किञ्च वेदान्तनामप्रामाण्यं बुद्ध्यनुत्पत्तेर्वा संशयाद्युत्पत्तेर्वा नाद्य इत्याह। न चेति। न द्वितीय इत्याह। न चानिश्चितेति। कोटिद्वयास्पर्शित्वादबाधाच्चेत्यर्थः। क्रियार्थैर्वाक्यैर्विद्यादीनां वाक्यानां साधर्म्यमुक्तमाक्षिपति। अनुष्ठेयेति। साधर्म्यस्यायुक्तमेव व्यनक्ति। क्रियार्थैरिति। वाक्योत्थबुद्धेर्यथार्थत्वाद्विध्यभावेऽपि वाक्यप्रामाण्यमज्ञातज्ञापत्वेनाविरुद्धमिति परिहरति। न ज्ञानस्येति। अनुष्ठेयनिष्ठत्वनन्तरेण कुतो वस्तुनि प्रयोगप्रत्यययोस्तथार्थत्वमित्याशङ्क्य

ष्ठेयत्वात्तथात्वं किन्तर्हि प्रमाणसमधिगतत्वात्। न च तद्विषयाया बुद्धेरनुष्ठेयविषयत्वात्तथार्थत्वं किन्तर्हि वेदवाक्यजनितत्वादेव॥ वेदवाक्याधिगतस्य वस्तुनस्तथात्वे सत्यनुष्ठेयत्वं विशिष्टं चेदनुतिष्ठति नोचेत् अनुष्ठेयत्वविशिष्टं नानुतिष्ठति अनुष्ठेयत्वे वाक्यप्रमाणत्वानुपपत्तिरिति चेत्। न ह्यनुष्ठेयेऽसति पदानां संहतिरुपपद्यते। अनुष्ठेयत्वे तु सति तादर्थ्येन पदानि संहन्यन्ते। तत्रानुष्ठेयनिष्ठं वाक्यं प्रमाणं भवति। इदमनेनेवङ्कर्त्तव्यमिति। न त्विदमनेनैवमित्येवंप्रकाराणां पदशतानामपि वाक्यत्वमस्ति। कुर्य्यात् क्रियेत कर्त्तव्यं भवेत् स्यादित्येवमादीनामन्यतमेऽसत्यतः परमात्मेश्वरादीनामवाक्यप्रमाणत्वम्।

---

तयोर्विषयतथात्वार्थं तदपेक्षास्यप्रामाण्यार्थत्वं वेति विकल्प्याद्यन्दूषयति। न हीति तदुभयविषयस्य कर्त्तव्यार्थस्य तथात्वं न कर्त्तव्यत्वापेक्षम्। किन्तु मानगम्यत्वादन्यथा विप्रलम्भकविधिवाक्येऽपि तथात्वापत्तेरित्यर्थः। द्वितीयम्प्रत्याह। न चेति। बुद्धिग्रहणं प्रयोगोपलक्षणार्थम्। कर्त्तव्यतार्थविषयप्रयोगादेर्नानुष्ठेयविषयत्वान्मानत्वं किन्तु प्रमाकरणत्वात् तज्जन्यत्वाच्चान्यथोक्तातिप्रसक्तितादवस्थ्यादतोऽनुष्ठेयनिष्ठत्वं मानत्वेऽनुपयुक्तमित्यर्थः। कुतस्तर्हि कार्य्याकार्य्यधियावित्याशङ्क्याह। वेदेति। वैदिकस्यार्थस्याबाधेन तथार्थत्वे सिद्धे सर्मीहितं साधनत्वविशिष्टं चेद्वस्तु तदा कर्त्तव्यमिति धियानुतिष्ठति। तच्चेदनिष्टसाधनत्वविशिष्टं तदा न कार्य्यमिति धिया नानुतिष्ठति। अतो मानस्यावहुष्ठानानुष्ठानहेतू कार्य्याकार्य्यधियावित्यर्थः। तथापि ब्रह्मणो वाक्यार्थत्वं पदार्थत्वं वा नाद्यमित्याह। अननुष्ठेयत्वमिति। तस्याकार्य्यत्वेऽपि वाक्यार्थत्वं किं न स्यादित्याशङ्क्याह। न हीति। उभयत्राप्यतीति छेदः। द्वितीयन्दूषयति।

पदार्थत्वे च प्रमाणान्तरविषयत्वम्। अतोऽसदेतदिति चेत्। न। अस्ति मेरुर्वर्णचतुष्टयोपेत इत्येवमाद्यननुष्ठेयेऽपि वाक्यदर्शनात्। न च मेरुर्वर्णचतुष्टयोपेत इत्येवमादिवाक्यश्रवणे मेर्वादावनुष्ठेयत्वबुद्धिरुत्पद्यते। तथास्तिपदसहितानां परमात्मेश्वरादिप्रतिपादकवाक्यपदानां विशेषणविशेष्यभावेन संहतिः केन वार्य्यते। मेर्वादिज्ञानवत्परमात्मज्ञाने प्रयोजनाभावादयुक्तमिति चेत्। न। ब्रह्मविदाप्नोति परम्। भिद्यते हृदयग्रन्थिरिति फलश्रवणात्। संसारबीजाविद्यादिदोषनिवृत्तिदर्शनाच्च। अनन्यशेषत्वाच्च तज्ज्ञानस्य जुह्वामिव

---

पदार्थत्वे चेति। ब्रह्मणः शास्त्रार्थत्वमेतदित्युच्यते। कार्य्यास्पृष्टेऽर्थे वाक्यप्रामाण्यं दृष्टान्तेन साधयति। नेत्यादिना। शुक्लकृष्णलोहितमिश्रलक्षणं वर्णचतुष्टयं तद्विशिष्टो मेरुरस्तीत्यादिप्रयोगे मेर्वादावकार्य्येऽपि सम्यग्धीदर्शनात् तत्त्वमसिवाक्यादपि कार्य्यास्पृष्टे ब्रह्मणि सम्यग्ज्ञानसिद्धिरित्यर्थः। दृष्टान्तेऽपि कार्य्यधीरेव वाक्यादुदेतीत्याशङ्क्याह। न चेति। ननु तत्र क्रियापदाधीना पदसङ्गतिर्युक्ता। वेदान्तेषु पुनस्तदभावात्तदसंहत्ययोगात् कुतो वाक्यप्रमाणत्वं ब्रह्मणः सम्भवति तत्राह। तथेति। विमतमफलं सिद्धार्थज्ञानत्वात् सम्मतवदित्यनुमानात् तत्त्वमादेः सिद्धार्थस्यायुक्तं मानत्वमिति शङ्कते। मेर्वादीति। श्रुतिविरोधेनानुमानं धुनोते। नेत्यादिना। विद्वदनुभवविरोधाच्च नैवमित्याह। संसारेति। फलश्रुतेरर्थवादत्वेनामानत्वादनुमानाबाधकतेत्याशङ्क्याह। अनन्येति। पर्णमयीत्वाधिकरणन्यायेन जुह्वां फलश्रुतेरर्थवादत्वं युक्तम्। ब्रह्मधियोऽन्यशेषत्वप्रापकाभावात्तत्फलश्रुतेरर्थवादत्वासिद्धिरिति। अन्यथा शारीरकानारम्भः स्यादित्यर्थः। श्रुत्यनुभवाभ्यां वाक्योत्थज्ञानस्य फलवत्त्वदृष्टेर्युक्ता कार्य्यास्पृष्टेऽर्थे तत्त्वमस्यादेर्मानतेत्युक्तम्। सम्प्रति शास्त्रस्य कार्य्यपरत्वान्नियमे हेत्वन्तरमाह। प्रतिषिद्धेति। यद्यपि कलञ्जभक्षणादेरधः-

फलश्रुतेरर्थवादत्वानुपपत्तिः। प्रतिषिद्धानिष्टफलसम्बन्धश्च वेदादेव विज्ञायते न चानुष्ठेयः सः। न च प्रतिषिद्धविषये प्रवृत्तक्रियस्याकरणादन्यदनुष्ठेयमस्ति।

अकर्त्तव्यताज्ञाननिष्ठतैव हि परमार्थतः प्रतिषेधविधीनां स्यात्। क्षुधार्त्तस्य प्रतिषेधज्ञानसंस्कृतस्याभक्ष्येऽभोज्ये वा प्रत्युपस्थिते कलञ्जाभिशस्तान्नादाविदं भक्ष्यमदो भोज्यमिति वा ज्ञानमुत्पन्नं तद्विषयया प्रतिषेधज्ञानस्मृत्या बाध्यते। मृगतृष्णिकायामिव पेयज्ञानं तद्विषययाथात्म्यविज्ञानेन तस्मिन्बाधिते स्वाभाविकविपरीतज्ञानेऽनर्थकरी तद्भक्षणभोजनप्रवृत्तिर्न भवति। विपरीतज्ञाननिमित्तायाः प्रवृत्तेर्नि-

---

पातस्य च सम्बन्धो न कलञ्जं भक्षयेदित्यादिवाक्यात्प्रतीयते। तथापि तस्यानुष्ठेयत्वाद्वाक्यस्यानुष्ठेयनिष्ठत्वसिद्धिरित्याशङ्क्याह। न चेति। सम्बन्धस्याभावार्थत्वान्नानुष्ठेयतेत्यर्थः। अभक्षणादिकार्यमिति विधिपरत्वमेव निषेधवाक्यस्य किं न स्यादित्याशङ्क्याह। न चेति। तस्यापि कार्यार्थत्वे विधिनिषेधभेदभङ्गान्नञश्च स्वसम्बन्ध्यभावबोधेन मुख्यस्यार्थान्तरे वृत्तौ लक्षणापातान्निषिद्धविषये रागादिना प्रवृत्तक्रियावतो निषेधवाक्यार्थधीसंस्कृतस्य निषेधश्रुतेरकरणात् प्रसक्तक्रियानिवृत्त्युपलक्षितादौदासीन्यादन्यदनुष्ठेयं न प्रतिभातीत्यर्थः। भावविषयं कर्त्तव्यत्वं विधीनामर्थोऽभावविषयन्तु निषेधानामिति विशेषमाशङ्क्याह। अकर्त्तव्यतेति। अभावस्य भावार्थत्वाभावात् कर्त्तव्यताविषयत्वासिद्धिरिति हिशब्दार्थः। प्रतिषेधज्ञानवतोऽपि कलञ्जभक्षणादिज्ञानदर्शनात् तन्निवृत्तेर्नियोगाधीनत्वात् तन्निष्ठमेव वाक्यमेष्टव्यमिति चेन्नेत्याह। क्षुधार्त्तस्येति। विषलिप्तशरहतस्य पशोर्मांसं कलञ्जम्। ब्रह्मवधाद्यभिशापयुक्तस्यान्नपानादि। तस्मिन्नभक्ष्येऽभोज्ये च प्राप्ते यद्भक्ष्यज्ञानं क्षुद्वामस्योत्पन्नं तन्निषेधधी-

वृत्तिरेव न पुनर्यत्नः कार्य्यस्तदभावे। तस्मात्प्रतिषेधविधीनां वस्तु याथात्म्यज्ञाननिष्ठतैव न पुरुषव्यापारनिष्ठतागन्धोऽप्यस्ति। तथेहापि परमात्मादियाथात्म्यज्ञानविधीनां तावन्मात्रपर्य्यवसानतैव स्यात्। तथा तद्विज्ञानसंस्कृतस्य तद्विपरीतार्थज्ञाननिमित्तानाम्प्रवृत्तीनामनर्थार्थत्वेन ज्ञायमानत्वात्। परमात्मादियाथात्म्यज्ञानस्मृत्या स्वाभाविके तन्निमित्तविज्ञानबाधितेऽभावः स्यात्।

ननु कलञ्जादिभक्षणादेरनर्थार्थत्वेन वस्तु याथात्म्यज्ञानस्य स्मृत्या स्वाभाविके तद्भक्ष्यत्वादिविपरीतज्ञाने निवर्त्तिते तद्भक्षणाद्यनर्थप्रवृत्त्यभाववद्प्रतिषेधविषयत्वाच्छा-

---

संस्कृतस्य तद्वीस्तत्र बाध्यमितत्र लौकिकदृष्टान्तमाह। मृगतृष्ण्

कायामिति। तथापि प्रवृत्त्यभावसिद्धये विधिरर्थ्यतामिति चेन्नेत्याह।

तस्मिन्निति। तदभावः प्रवृत्त्यभावो न विधिजन्यप्रयत्नसाध्यो निमित्ताभावेनैव सिद्धेरित्यर्थः। दृष्टान्तमुपसंहरति। तस्मादिति। दार्ष्टान्तिकमाह। तथेति। न केवलं तत्त्वमस्यादिवाक्यानां सिद्धवस्तुमात्रपर्य्यवसानता किन्तु सर्व्वकर्म्मनिवर्त्तकत्वमपि सिद्धतीत्याह। तथेति। अकर्त्तृभोक्तृब्रह्माहमिति ज्ञानसंस्कृतस्य प्रवृत्तीनामभावः स्यादिति सम्बन्धः। तस्माद्ब्रह्मभावाद्विपरीतोऽर्थो यस्य कर्त्तृत्वादिज्ञानस्य तन्निमित्तानामनर्थार्थत्वेन ज्ञायमानत्वादिति हेतुः। कदा पुनस्तासामभावः स्यादत आह। परमात्मादीति। भ्रान्तिमाप्तभक्षणादि निरासेन निवृत्तिनिष्ठतया निषेधवाक्यमानत्ववत् तत्त्वमादेरपि प्रत्यग्ज्ञानोत्थकर्त्तृत्वादि निवर्त्तकत्वेन मानत्वोपपत्तिरिति समुदायार्थः। दृष्टान्तदार्ष्टान्तियोर्वैषम्यमाशङ्कते।

नन्विति। तस्य निषिद्धत्वादनर्थार्थत्वमेव यद्वस्तु याथात्म्यं तज्ज्ञानेन निषेधे कृते तत्संस्कारद्वारा सम्पादितस्तत्र शास्त्रीयज्ञानविपरीतज्ञाने बाधिते तत्कार्य्यप्रवृत्त्यभावो निमित्ताभावे नैमित्तिकाभाव-

स्त्रविहितप्रवृत्त्यभावो न युक्त इति चेत्। न। विपरीतज्ञान-निमित्तत्वानर्थार्थत्वाभ्यां तुल्यत्वात्। कलञ्जभक्षणादि-प्रवृत्तेर्मिथ्याज्ञाननिमित्तत्वमनर्थार्थत्वञ्च यथा तथा शास्त्र-विहितप्रवृत्तीनामपि। तस्मात् परमात्मयाथात्म्यविज्ञानवतः शास्त्रविहितप्रवृत्तीनामपि मिथ्याज्ञाननिमित्तत्वेनानर्थत्वेन च तुल्यत्वात् परमात्मज्ञानेन विपरीतज्ञाने निवर्त्तिते युक्त एवाभावः। ननु तत्र युक्तो नित्यानान्तु केवलशास्त्रनिमित्तत्वा-दनर्थार्थत्वाभावाच्चाभावो न युक्त इति चेत्। न। अविद्या-रागद्वेषादिदोषवतो विहितत्वात्। यथा स्वर्गकामादिदोषवतो दर्शपौर्णमासादीनि काम्यानि कर्म्माणि विहितानि तथा सर्व्वानर्थवीजाविद्यादिदोषवतस्तज्जनितेष्टानिष्टप्राप्तिपरिहार-रागद्वेषादिदोषवतश्च तत्प्रेरिताविशेषप्रवृत्तेरिष्टानिष्टप्राप्तिप-

---

न्यायेन युक्तो न तथाग्निहोत्रादिप्रवृत्त्यभावो युक्तः। ब्रह्मविदाऽग्निहो-त्रादि न कर्त्तव्यमिति निषेधानुपलम्भादित्यर्थः। तत्त्वमस्यादिवाक्येना-र्थान्निषिद्धमग्निहोत्रादीति मन्वानः साम्यमाह। नेत्यादिना। शास्त्रीय-प्रवृत्तीनां गर्भवासादिहेतुत्वादनर्थार्थत्वमहङ्कर्त्तृत्वाद्यभिमानकृतत्वेन विप-रीतज्ञाननिमित्तत्वम्। एतदेव दृष्टान्तावष्टम्भेन स्पष्टयति। कलञ्जेति। काम्यानामज्ञानहेतुत्वानर्थार्थत्वाभ्यां विदुषस्तेषु प्रवृत्त्यभावो युक्तो नित्या-नान्तु शास्त्रमात्रप्रयुक्तानुष्ठानत्वान्नाज्ञानकृतत्वम्। प्रत्यवायाख्यानार्थध्वं-सित्वाच्च नानर्थकरत्वम्। अतस्तेषु प्रवृत्त्यभावो युक्तो न भवतीति शङ्कते। नन्विति। नित्यानां शास्त्रमात्रकृतानुष्ठानत्वमसिद्धमिति परिहरति। नेत्या-दिना। तदेव प्रपञ्चयति। यथेति। अविद्यादीत्यादिशब्देनास्मितादि-क्लेशचतुष्टयोक्तिः। तैरविद्यादिभिर्जनितेष्टप्राप्तौ तादृगनिष्टप्राप्तौ च क्रमेण रागद्वेषवतः पुरुषस्येष्टप्राप्तिमनिष्टपरिहारञ्च वाञ्छतस्ताभ्यामेव रागद्वेषा-

रिहारार्थिनो नित्यानि कर्म्माणि विधीयन्ते न केवलं शास्त्रनिमित्तान्येव। न चाग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुबन्धसोमानां कर्मणां स्वतः काम्यनित्यत्वविवेकोऽस्ति।

कर्त्तृगतेन हि स्वर्गादिकाम्यदोषेण कामार्थता। तथा विद्यादिदोषवतः स्वभावप्राप्तेष्टानिष्टप्राप्तिपरिहारार्थिनस्तदर्थान्येव नित्यानीति युक्तं तम्प्रति विहितत्वात्। न परमात्मयाथात्म्यविज्ञानवतः शमोपायव्यतिरेकेण किञ्चित् कर्म विहितमुपलभ्यते। कर्म्मनिमित्तदेवतादिसर्वसाधनविज्ञानोपमर्देन ह्यात्मज्ञानं विधीयते। न चोपमर्दितक्रियाकारकादिविज्ञानस्य कर्म्मप्रवृत्तिरुपपद्यते। विशिष्टक्रियासाधनादिज्ञानपूर्वकत्वात् क्रियाप्रवृत्तेः। न हि देशकालाद्यनवच्छिन्ना-

---

भ्यामिष्टं मे भूयादनिष्टं माभूदित्यविशेषकामनाभिप्रेरिताविशेषप्रवृत्तियुक्तस्य नित्यानि विधीयन्ते। स्वर्गकामः पशुकाम इति विशेषार्थिनः काम्यानि। तुल्यन्तूभयेषां केवलशास्त्रनिमित्तत्वमित्यर्थः। किञ्च काम्यानां दुष्टत्वं ब्रुवता नित्यानामपि तदिष्टस्तुत्पत्तिर्विनियोगप्रयोगाधिकारविधिरूपे विशेषाभावदित्याह। नचेति। कथन्तर्हि काम्यनित्यविभागस्तत्राह।

कर्त्तृगतेनेति। स्वर्गकामः पशुकाम इति विशेषार्थिनः काम्यविधिरिष्टं मे स्यादनिष्टं माभूदित्यविशेषकामप्रेरिताविशेषितप्रवृत्तिमतो नित्यविधिरित्युक्तमित्यर्थः। नन्वविद्यादिदोषवतो नित्यानि कर्माणीत्ययुक्तम्। परमात्मज्ञानवतोऽपि यावज्जीवश्रुतेस्तेषामनुष्ठेयत्वादित्याशङ्क्य श्रुतेरविरक्तविषयत्वान्नैवमित्याह। न परमात्मेति। योगारूढस्य तस्यैव शमः कारणमुच्यत इति स्मृतेर्ज्ञानपरिपाके कारणं कर्मोपशमः एव प्रतीयते न तथा कर्मविधिरित्यर्थः। न केवलं विहितं नोपलभ्यते न सम्भवति

स्थूलाद्वयादिब्रह्मप्रत्ययधारिणः कर्मावसरोऽस्ति । भोजना-
दिप्रवृत्त्यवसरवत् स्यादिति चेत् । न । अविद्यादिकेवलदो-
षनिमित्तत्वाद्भोजनादिप्रवृत्तेरावश्यकत्वानुपपत्तेः । न तु तथा
नियतं कदाचित् क्रियते कदाचिन्न क्रियते चेति नित्यं
कर्मोपपद्यते । केवलदोषनिमित्तत्वात्तु भोजनादिकर्मणोऽ-
नियतत्वं स्यात् । दोषोद्भवाभिभवयोरनियतत्वात् कामाना-
मिव काम्येषु ।

शास्त्रनिमित्तकालाद्यपेक्षत्वाच्च नित्यानामनियतत्वानुप-
पत्तिः । दोषनिमित्तत्वे सत्यपि यथा काम्याग्निहोत्रस्य

---

चेत्याह । कर्मनिमित्तेति । यदा नासि त्वं संसारी किन्त्वकर्त्रभोक्तृ
ब्रह्मासीति श्रुत्या ज्ञाप्यते तदा देवतायाः सम्प्रदानत्वं करणत्वम् । व्रीह्या-
देरित्येतत् सर्वमुपमृदितं भवति । तत् कथमकर्त्रादिज्ञानवतः सम्भवति
कर्मविधिरित्यर्थः । उपमृदितमपि वासनावशादुद्भविष्यति ततश्च विदुषो-
ऽपि कर्मविधिः स्यादित्याशङ्क्याह । न चेति । वासनावशादुद्भूतस्याबाधा-
सत्त्वादात्मस्मृत्या पुनः पुनर्बाधाच्च विदुषो न कर्मप्रवृत्तिरित्यर्थः । किञ्चा-
नवच्छिन्नं ब्रह्मास्मीति मतेस्तदात्मकस्य देहादिसापेक्षं कर्म निरवकाशमि-
त्याह । नहीति । विदुषो भिक्षाटनादिवत् कर्मावसरः स्यादिति शङ्कते
भोजनादीति । अपरोक्षज्ञानवतो वा परोक्षज्ञानवतो वा भोजनादिप्रवृत्तिः
नाद्यः । अनभ्युपगमात् तत्प्रतीतेर्बाधितानुवृत्तिमात्रत्वात् । अग्निहो-
त्रादेरबाधिताभिमाननिमित्तस्य तथात्वानुपपत्तिरित्यभिप्रेत्याह । नेति । न
द्वितीयः । परोक्षज्ञानिनः याज्ञानपेक्षक्षुत्पिपासादिदोषजत्वात् तत्-
प्रवृत्तेरिष्टत्वादित्याह । अविद्यादीति । अग्निहोत्रादेरपि तथा
स्यादिति चेन्नेत्याह । नत्विति । भोजनादिप्रवृत्तेरावश्यकत्वानुपपत्तिं
विवृणोति । केवलेति । न तु तथेत्यादि प्रपञ्चयति । शास्त्रनिमित्तेति ।

शास्त्रविहितत्वात् सायं प्रातःकालाद्यपेक्षत्वं एवं तद्भोजनादिप्रवृत्तौ नियमवत् स्यादिति चेत्। न। नियमस्याक्रियात्वात् क्रियायाश्चाप्रयोजकत्वान्नासौ ज्ञानस्यापवादकरः। तस्मात् परमात्मयाथात्म्यज्ञानविधेरपि तद्विपरीतस्थूलद्वैता-

---

तर्हि शास्त्रविहितकालाद्यपेक्षत्वान्नित्यानामदोषप्रभवत्वं भवेदित्याशङ्क्याह। दोषेति। एवन्दोषकृतत्वेऽपि नित्यानां शास्त्रसापेक्षत्वात् कालाद्यपेक्षत्वमविरुद्धमित्याह। एवमिति। भोजनादेर्दोषकृतत्वेऽपि चातुर्मास्यं चरेद्व्रतं यतीनान्तु चतुर्गुणमित्यादिनियमवद्विदुषोऽग्निहोत्रादिनियमोऽपि स्यादिति शङ्कते। तद्भोजनादीति। विदुषो नास्ति भोजनादिनियमोऽतिक्रान्तविधित्वात्। न चैतावता यथेष्टचेष्टापत्तिरधर्माधीनाऽविवेककृता हि सा। न तौ विदुषो विद्येते। अतोऽविद्यावस्थायामप्यसतौ यथेष्टचेष्टा विद्यादशायां कुतः स्यात्। संस्कारस्याप्यभावात्। बाधितानुवृत्तेश्च। अग्निहोत्रादेस्त्वनाभासत्वान्न बाधितानुवृत्तिरित्याह। नेति। किञ्चाविदुषां विविदिषूणामेव नियमः। तेषां विधिनिषेधगोचरत्वात्। न च तेषामप्येष ज्ञानोदयपरिपन्थी। तस्यान्यनिवृत्तिरूपस्य स्वयं क्रियात्वाभावात्। नापि सत्क्रियामाक्षिपन् ब्रह्मविद्यां प्रतिक्षिपति। अन्यनिवृत्त्यात्मनस्तदाक्षेपत्वासिद्धेरित्याह। नियमस्येति। कर्मणः रागादिमतोऽधिकारात्। विरक्तस्य ज्ञानाधिकारात्। ज्ञानिनो हेत्वभावादेव कर्माभावात्। तस्य भोजनाद्यतुल्यत्वात्। तत्त्वमादेः सर्वव्यापारोपरमात्मकज्ञानहेतोर्निवर्त्तकत्वेन प्रामाण्यं प्रतिपादितमुपसंहरति। तस्मादिति। तत्र विधिरत्वादकं वाक्यम्। तस्य निषेधवाक्यवत् तत्त्वज्ञानहेतोस्तद्विरोधिमिथ्याज्ञानध्वंसित्वात्। अशेषव्यापारनिवर्त्तकत्वेन कूटस्थवस्तुनिष्ठस्य युक्तं प्रामाण्यम्। मिथ्याज्ञानध्वंसे हेत्वभावे फलाभावन्यायेन सर्वकर्मनिवृत्तेरित्यर्थः। तत्पदोपात्तं हेतुमेव स्पष्टयति। कर्मप्रवृत्तीति। यथा प्रतिषेधे भक्षणादौ प्रतिषेधशास्त्रवशात् प्रवृत्त्यभावस्तथा तत्त्वमस्यादिवाक्यसामर्थ्यात्कर्मस्वपि प्रवृत्त्यभावस्य तुल्यत्वात्प्रामाण्यमपि तुल्यमित्यर्थः। प्रतिषेधशास्त्रस्येव तत्त्वमस्यादिशास्त्रस्यावसाने तथैव निवृत्तिनिष्ठत्वं स्याद-

ते ह वाचमूचुस्त्वन्न उद्गायेति तथेति तेभ्यो वागुदगायत् ।

---

दिज्ञाननिवर्त्तकत्वात् सामर्थ्यात् सर्वकर्म्मप्रतिषेधविध्यर्थत्वं सम्पद्यते । कर्म्मप्रवृत्त्यभावस्य तुल्यत्वाद्यथा प्रतिषेधविषये । तस्मात्प्रतिषेधविधिवच्च वस्तुप्रतिपादनं तत् परत्वञ्च सिद्धं शास्त्रस्य ॥ १ ॥

ते देवा ह एवं विनिश्चित्य वाचं वागभिमानिनीं देवतां ऊचुरुक्तवन्तः । त्वं नोऽस्मभ्यमुद्गाय औद्गात्रं कर्म्म कुरुष्व वाग्देवतानिर्वर्त्त्यमौद्गात्रं कर्म्म दृष्टवन्तः । तामेव च देवतां जपमन्त्राभिधेयां असतो मा सद्गमयेति । अत्र चोपासनायाः कर्म्मणश्च कर्त्तृत्वेन वागादय एव विवक्ष्यन्ते । कस्मात् । यस्मात् परमार्थतस्तत्कर्त्तृकस्तद्विषय एव च

---

वस्तुप्रतिपादकत्वमित्यत्र न्यायमाह । तस्मादिति । प्रतिषेधो हि प्रसक्तक्रियां निवर्त्तयंस्तदुपलक्षितौदासीन्यात्मके वस्तुनि पर्य्यवस्यति । तथा तत्त्वमस्यादिवाक्यस्यापि वस्तुप्रतिपादकत्वमविरुद्धमित्यर्थः । वेदान्तानां सिद्धे प्रामाण्यवदर्थवादादीनामन्यपराणामपि संवादविसंवादयोरभावे स्वार्थे मानत्वसिद्धौ सिद्धा विद्युदादिगुणवती प्राणदेवतेति चकारार्थः ॥ १ ॥

प्राणमिह परीक्षमाणमित्यत्र प्रसङ्गागतं विचारं परिसमाप्य ते ह वाचमित्यादि व्याचष्टे । ते देवा इति । अचेतनाया वाचो नियोज्यत्वं वारयति । वागभिमानिनीमिति । नियोक्तॄणां देवानामभिप्रायमाह । वाग्देवतेति । नन्वौद्गात्रं कर्म्म जपमन्त्रप्रकाश्या देवता निर्वर्त्तयिष्यति न तु वाग्देवतेति तत्राह । तामेवेति । असतो मा सद्गमयेति जपमन्त्राभिधेयां दृष्टवन्त इति पूर्व्वेण सम्बन्धः । वागाद्याश्रयं कर्त्तृत्वादि दर्शयतोऽर्थवादस्य प्रासङ्गिकं तात्पर्यमाह । अत्र चेति ।

सर्वोज्ञानकर्म्मसंव्यवहार:। वक्ष्यति हि ध्यायतीव लेलायतीवेत्यात्मकर्त्तृकत्वाभावं विस्तरत: षष्ठे। इहापि चाध्यायान्त उपसंहरिष्यति अव्याकृतादिक्रियाकारकफलजातं त्रयं वा इदं नामरूपं कर्मेत्यविद्याविषयम्। अव्याकृतात्तु यत्परं परमात्माख्यं विद्याविषयमनामरूपकर्मात्मकं नेति नेतीतरप्रतीत्याख्यानेनोपसंहरिष्यति पृथक्॥ यस्तु वागादिसमाहारोपाधिकल्पित: संसार्यात्मा तञ्च वागादिसमाहारपक्षपातिनमेव दर्शयिष्यति तेभ्यो भूतेभ्य: समुत्थाय तान्येवानुविनश्यतीति। तस्माद्युक्ता वागादीनामेव ज्ञानकर्मकर्तृ-

---

घ्रात्माश्रये कर्त्तृत्वादावनवभासमाने तस्य वागाद्याश्रयत्वमयुक्तमित्याह। कस्मादिति। परस्य जीवस्य वा कर्त्तृत्वादि विवक्षितमिति विकल्पाद्यन्दूषयति। यस्मादिति। विचारदशायां वागादिसङ्घातस्य क्रियादिशक्तिमत्वात् कर्त्तृत्वादिस्तदाश्रयो यस्मात्प्रतीतस्तस्मात्परस्यात्मन: स्वतस्तच्छक्तिशून्यस्य न तदाश्रयत्वमित्यर्थ:। किञ्चाविद्याश्रय: सर्व्वो व्यवहारो न तद्धीने परस्मिन्नवतरतीत्याह। तद्विषय इति। कर्त्ता शास्त्रार्थवत्त्वादिति न्यायेन कर्त्तृत्वमात्मनोऽङ्गीकर्त्तव्यमित्याशङ्क्य: यथा च तक्षोभयथेति न्यायादौपाधिकन्तस्मिन् कर्त्तृत्वमित्यभिप्रेत्याह। वक्ष्यति हीति। यदुक्तमविद्याविषय: सर्व्वो व्यवहार इति तत्र वाक्यशेषमनुकूलयति। इहापीति। इतश्च परस्मिन्नात्मनि कर्त्तृत्वादिव्यवहारो नास्तीत्याह। अव्याकृतात्त्विति। अनामरूपकर्म्मात्मकमित्यस्मादुपरिष्टात् तत्पदमध्याहर्त्तव्यं पृथग्विद्याविषयात् क्रियाकारकफलजातादिति शेष:। मा भूत् परमात्मा कर्त्तृत्वाद्याश्रयो जीवस्तु स्यादिति द्वितीयमाशङ्क्याह। यस्त्विति। जीवशब्दवाच्यस्य विशिष्टस्य कल्पितत्वात् न तात्त्विकं कर्त्तृत्वादिकं। किन्तु तद्द्वारा स्वरूपे समारोपितमिति भाव:। आत्मनि तात्त्विककर्त्तृत्वाद्यभावे फलितमर्थवादतात्पर्य्यमुपसंहरति। तस्मादिति।

यो वाचि भोगस्तं देवेभ्य आगायत् यत् कल्याणं वदति तदात्मने ।

---

त्वफलप्राप्तिविवक्षा । तथेति तथास्त्विति देवैरुक्ता वाक् तेभ्यो ऽर्थिभ्योऽर्थायोदगायदुद्गानङ्कृतवती ।

कः पुनरसौ देवेभ्योऽर्थाय उद्गानकर्मणा वाचा निर्वर्त्तितः कार्यविशेष इति उच्यते । यो वाचि निमित्तभूतायां वागादिसमुदायस्य य उपकारो निष्पद्यते वदनादिव्यापारेण स एव । सर्वेषां ह्यसौ वाग्वदनाभिनिर्वृत्तो भोगः फलम् । तम्भोगं सा त्रिषु पवमानेषु कृत्वावशिष्टेषु नवसु स्तोत्रेषु वाचनिकमार्त्विज्यं फलं यत् कल्याणं शोभनं वदति वर्णानभिनिर्वर्त्तयति तदात्मने मह्यमेव । तद्ध्यसाधारणं वाग्देवतायाः कर्म यत् सम्यग्वर्णानामुच्चारणं अतस्तदेव विशिष्यते यत् क·

---

तात्पर्य्यमर्थशब्दस्योक्ता नियुक्तया वाग्देवतया यत् कृतन्तदुपन्यस्यति । तथेत्यादिना ।

उद्गातृत्वं जपमन्त्रप्रकाश्यत्वस्यात्मनोऽङ्गीकृत्य वागुद्गाने प्रवृत्ता चेत्यया कश्चिदुपकारो देवानामुद्गानेन निवर्त्तनीयः । स च नास्तीति शङ्कते । कः पुनरिति । वदनादिव्यापारे सति यः सुखविशेषः सङ्घातस्य निष्पद्यते स एव कार्य्यविशेष इत्याह । उच्यत इति । यो वाचीति प्रतीकमादाय व्याख्यायते कथम्पुनर्वाचो वचनं चक्षुषो दर्शनमित्यादिना निष्पन्नं फलं सर्व्वसाधारणमित्याशङ्क्यानुभवमनुसृत्याह । सर्वेषामिति । किञ्च देवार्थमुद्गायन्त्या वाचः स्वार्थमपि किञ्चिदुद्गानमस्ति । तथा च ज्योतिष्टोमे द्वादशस्तोत्राणि तत्र त्रिषु पवमानाख्येषु स्तोत्रेषु याजमानं फलमुद्गानेन कृत्वा शिष्टेषु नवसु स्तोत्रेषु यत् कल्याणवदनसामर्थ्यन्तदात्मने स्वार्थमेवागायत् इत्याह । तं भोगमिति । ऋत्विजां क्रीतत्वान्न फलसम्बन्धः

ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव स पाप्मा ॥ २ ॥

ल्याणं वदतीति। यत्तु वदनकार्यं सर्वसङ्घातोपकारात्मकं तद्याजमानिकमेव। तत्र कल्याणवदनात्मसम्बन्धसङ्गावसरं देवताया रन्ध्रमेव प्रतिलभ्यते।

विदुरसुराः कथमनेनोद्गात्रा नोऽस्मान् स्वाभाविकं ज्ञानं कर्म्म चाभिभूयातीत्य शास्त्रजनितकर्मज्ञानरूपेण ज्योतिषोद्गात्रात्मनाऽत्येष्यन्ति अतिगमिष्यन्तीत्येवं विज्ञाय तमुद्गातारमभिद्रुत्याभिगम्य स्वेनासङ्गलक्षणेन पाप्मनाऽविध्यन्ताडितवन्तः संयोजितवन्त इत्यर्थः। स यः स पाप्मा प्रजापतेः पूर्व्वजन्मावस्थस्य वाचि न क्षिप्तः स एष प्रत्यक्षोक्रियते कोऽसौ यदेवेद-

सम्भवतीत्याशङ्क्याह। वाचनिकमिति। अथात्मनेऽन्नाद्यमागायदिति श्रुतमित्यर्थः। कल्याणवदनसामर्थ्यस्य स्वार्थत्वं समर्थयते। तद्धीति। कल्याणवदनं वाचोऽसाधारणं चेत् कस्तर्हि यो वाचेत्यादेर्विषयस्तत्राह। यत्त्विति। वागदेवतायामसुराणामवकाशन्दर्शयति। तत्रेति। स्वार्थे परार्थे चोद्गाने सतीति यावत्। कल्याणवदनस्यात्मना वाचैव सम्बन्धे योऽयमासङ्गोऽभिनिवेशस्स एवावसरो देवतायास्तमवसरं प्राप्येत्यर्थः। अवसरमेव व्याकरोति। रन्ध्रमेवेति। असुरानतीत्येति सम्बन्धः।

कोऽसावसुरात्ययस्तं व्याचष्टे। स्वाभाविकमिति। तत्रोपायमुपन्यस्यति। शास्त्रेति। असुरानभिभूय केनात्मना देवाः स्यास्यन्तीति विवक्षायामाह। ज्योतिषेति। प्रजापतेर्वाचि पाप्मा क्षिप्तोऽसुरैरिति कुतोऽवगम्यते तत्राह। स इः स पाप्मेति। प्रतिषिद्धवदनमेव पाप्मेत्ययुक्तमदृष्टस्य क्रियातिरिक्तत्वाङ्गीकारादित्याशङ्क्याह। येनेति। असभ्यं स्त्री वभनसार्णहं नातिबीभत्सं भयानकस्मृतादिवर्णनं अन्ततमयशादृष्टवचनं

अथ ह प्राणमूचुस्त्वन्न उद्गायेति तथेति तेभ्यः प्राण उदगायद्यः प्राणे भोगस्तं देवेभ्य आगायत्

---

मप्रतिरूपमननुरूपं शास्त्रप्रतिषिद्धं वदति येन प्रयुक्तोऽसभ्य-बीभत्सानृताद्यनिच्छन्नपि वदति अनेन कार्येणाप्रतिरूपवदनेनानुगम्यमानः प्रजापतेः कार्यभूतासु प्रजासु वाचि वर्त्तते स एवाप्रतिरूपवदनेनानुमितः स प्रजापतेर्वाचि गतः पाप्मा कारणानुविधायि हि कार्यमिति । २ ।

तथैवं घ्राणादिदेवता उद्गीथनिर्वर्त्तकत्वाज्जपमन्त्रप्रकाश्या उपास्याश्चेति क्रमेण परीक्षितवन्तो देवानाञ्चैतन्निश्चितमासीत् वागादिदेवताः क्रमेण परीक्ष्यमाणाः कल्याणविषयविशेषात्मसम्बन्धासङ्गहेतोरासुरपाप्मसंसर्गादुद्गीथनिर्वर्त्तनासमर्थाः ।

---

आदिशब्दात् पिशुनत्वं गृह्यते । त्रिमत्र प्रजापतेर्वाचि पाप्मसत्त्वे मानमुक्तं भवतीत्याशङ्क्य स एव स पाप्मेति व्याकरोति । अनेनेति । प्रजापत्यासु प्रजासु प्रतिपन्नेनासत्यवदनादिना लिङ्गेन तद्वाचि पाप्मानुमीयते । विमतं पाप्मपूर्वकं प्रतिकूलधीविषयत्वाद् दुःखवद्यः स पाप्मा प्रजावाच्यनुमितः स एव प्रजापतिवाचि पाप्मानं गमयति । विमतं कारणपूर्वकं कार्यत्वात् घटवत् । न च प्रजागतं दुरितं प्राजापत्यं तद्विना हेत्वन्तरादेव स्यात् कारणानुविधायित्वात् कार्यस्य । न च तत्कारणेऽपि परस्मिन् प्रसङ्गोपायविद्धमिति श्रुतेः । न च न वै देवान् पापङ्गच्छतीति श्रुतेर्न स्रष्टेऽपि पापे वेधसस्तस्य फलावस्थस्यापापत्वेऽपि यजमानावस्थस्य तद्भावादित्यर्थः। आद्यसकाराभ्यां कारणस्य पाप्मानमनूद्य तस्यैव कार्यस्यत्वमुच्यते । उत्तराभ्यान्तु कार्यस्य पाप्मानमनूद्य तस्यैव कारणस्यत्वमिति विभागः ॥ २ ॥

वाग्देवताया जपमन्त्रप्रकाश्यत्वमुपास्यत्वञ्च नेति निर्धार्याविशिष्टपर्यायचतुष्टयस्य तात्पर्यमाह । तथेति । परीक्षाफलनिर्णयमाह । देवाना-

यत् कल्याणञ्जिघ्रति तदात्मने। ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपञ्जिघ्रति स एव स पाप्मा ॥ ३ ॥

अथ ह चक्षुरूचुस्त्वन्न उद्गायेति तथेति तेभ्यश्चक्षुरुदगायत्। यश्चक्षुषि भोगस्तन्देवेभ्य आगायद्यत्कल्याणम्पश्यति तदात्मने। ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपम्पश्यति स एव स पाप्मा॥ ४॥ अथ ह श्रोत्रमूचुस्त्वन्न उद्गायेति तथेति तेभ्यः श्रोत्रमुदगायद् यः श्रोत्रे भोगस्तन्देवेभ्य आगायद्यत्कल्याणꣳ शृणोति तदात्मने ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपꣳ शृणोति स एव स पाप्मा ॥ ५ ॥

---

अतोऽनभिधेयाः। असतो मासद्गमयेति अनुपास्याश्चाशुद्धत्वादितराव्यापकत्वाच्चेति। एवमुखल्वनुक्ता अपि एतास्त्वगादिदेवताः कल्याणाकल्याणकार्यदर्शनादेवं वागादिवद्देवैनाः पाप्मनाऽविध्यन् पाप्मना विद्धवन्त इति यदुक्तन्तत् पाप्मभिरुपास्य-

---

श्चेति। अनुपास्यत्वे हेत्वन्तरमाह। इतरेति। इतरः कार्यकारणसङ्घातः तस्मिन्नव्यापकत्वं परिच्छिन्नत्वं अतश्चानुपास्यत्वं जपमन्त्राप्रकाश्यत्वञ्चेत्यर्थः।

अथ हमन ऊचुस्त्वन्न उद्गायेति तथेति तेभ्यो मन उदगायत् यो मनसि भोगस्तन्देवेभ्य आगायद्यत्कल्याणꣳ सङ्कल्पयति तदात्मने ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्त्स यः पाप्मा यदेवेदमप्रतिरूपꣳ सङ्कल्पयति स एव स पाप्मैवमु खल्वेता देवताः पाप्मभिरुपासृजन्नेवमेनाः पाप्मनाऽविध्यन् ॥ ६ ॥ अथ हेममासन्यम्प्राणमूचुस्त्वन्न उद्गायेति तथेति

---

जन् पाप्मभिः संसर्गं कृतवन्त इत्येतद्वागादिदेवता उपासीना अपि मृत्युव्यतिगमनाया शरणाः सन्तो देवाः क्रमेण । ३।४।५।६

अथानन्तरं ह इममित्यभिनयप्रदर्शनं आसन्नं आस्ये भवमासन्यं मुखान्तर्बिलस्थं प्राणमूचुस्त्वन्न उद्गायेति तथेत्येवं शरणमुपगतेभ्यः स एष प्राणो मुख्य उदगायत् इत्यादि पूर्व-

---

उक्तैरिन्द्रियैरनुक्तेन्द्रियाण्युपलक्षणीयानीति विवक्षित्वोपसंहरति । एवमिति । वागादिवत्त्वगादिषु कल्पकाभावान्न पाप्मावेधोऽस्तीत्याशङ्क्याह ।। कल्याणेति । पाप्मभिरुपासृजन्पाप्मनाऽविध्यन्नित्यनयोरस्ति पौनरुक्त्यमित्याशङ्क्य व्याख्यानव्याख्येयभावान्नैवमित्याह । इति यदुक्तमिति । सम्प्रति मुख्यप्राणस्य मन्त्रप्रकाश्यत्वमुपास्यत्वञ्च वक्तुमुत्तरवाक्यमुपादाय व्याकरोति । वागादीति । क्रमेणोपासीना इति सम्बन्धः । वागादिषु नैराश्यानन्तर्यमथशब्दार्थः । विवक्षितार्थप्रापकोऽसाधारणदेहतदवयवव्यापारोऽभिनयः । २ । ४ । ५ । ६ । दोषासंसर्गिणं दोषेण संसृष्टं कर्तुमिच्छा कुतो जातेत्याशङ्क्याह । स्वेनेति ।

तेभ्य एष प्राण उद्गायत्वे विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्त्स यथाश्मानमृत्वा लोष्टो विध्वꣳसेतैवꣳ हैवविध्वꣳ

---

वत् पाप्मनाऽविध्यन्त्स वेधनङ्कर्त्तुमिष्टवन्तस्ते च दोषासंसर्गिणं सन्तं मुखं प्राणं स्वेनासङ्गदोषेन वागादिषु लब्धप्रसराः तदभ्यासानुवृत्त्या संस्पृशमाणा विनेशुर्विनष्टा विध्वस्ताः। कथमिवेति दृष्टान्त उच्यते। स यथा स दृष्टान्तो यथा लोकेऽश्मानम्पाषाणमृत्वा गत्वा प्राप्य लोष्टः पांशुपिण्डः पाषाणचूर्णनायाश्मनि निक्षिप्तः स्वयं विध्वंसेत विस्रंसेत विचूर्णीभवेत्। एवं हैव यथायन्दृष्टान्त एवमेव विध्वंसमाना विशेषेण ध्वंसमाना विष्वञ्चो नानागतयो विनेशुर्विनष्टाः यतस्ततस्तस्मादसुरविनाशाद्देवत्वप्रतिबन्धभूतेभ्यः स्वाभाविकासङ्गजनितपाप्मभ्यो वियोगात्। असंसर्गधर्मिमुखप्राणाश्रयबलाद्देवा वागादयः प्रकृता अभवन्। किमभवन् स्वन्देवतारूपमग्न्याद्यात्मकं वच्य-

---

तदभ्यासानुवृत्त्या तस्य पाप्मसंसर्गकरणस्याभ्यासवशादिति यावत्। उक्तमर्थं दृष्टान्तेन स्पष्टयति। कथमित्यादिना। असुरनाशेनासङ्गजनितपाप्मवियोगे हेतुमाह। असंसर्गेति। वच्यमाणं सोऽग्निरभवदित्यादि नेति शेषः। वागादीनां स्थितानां नष्टानाञ्च कुतोऽग्न्यादिरूपत्वमित्याशङ्क्याह। पूर्वमपीति। न तर्हि तेषाम्परिच्छेदाभिमानः स्यादित्याशङ्क्याह। स्वाभाविकेनेति। परिच्छेदाभिमानादग्न्याद्यात्माभिमानस्य बलवत्त्वं सूचयति। आश्रयेति। न केवलमत्रोक्तानामेवासुराणाम् संसर्गधर्मिप्राणाश्रयाद्विनाशः। किन्तु तुल्यजातीयानामपीत्यभिप्रेत्याह। किञ्चेति। वागादीनामग्न्यादिभावापत्तिवचनेन तत्संयतस्य यजमानस्य देवताप्राप्तिराह-

समाना विष्वञ्चो विनेशुस्ततो देवा अभवन् परा

माणम्पूर्वमप्यग्न्याद्यात्मानम्। एवं सन्तः स्वाभाविकेन पाप्मना तिरस्कृतविज्ञानाः पिण्डमात्राभिमाना आसन्। ते तत्पाप्मवियोगादुज्झित्वा पिण्डमात्राभिमानं शास्त्रसमर्पितवागाद्यग्न्यात्माभिमाना बभूवुरित्यर्थः। किञ्च ते प्रतिपक्षभूता असुराः पराभवन्नित्यनुवर्त्तते। पराभूता विनष्टा इत्यर्थः॥ यथा पुराकल्पेन वर्णितः पूर्वयजमानोऽतिक्रान्तकालिकः। एतामेवाख्यायिकारूपां श्रुतिं दृष्ट्वा तेनैव क्रमेण वागादिदेवताः परीक्ष्य तासामासङ्गपाप्मास्पददोषवत्त्वेनादोषास्पदं मुख्यं प्राणमात्मत्वेनोपगम्य वागाद्याध्यात्मिकपिण्डमात्रपरिच्छिन्नात्माभिमानं हित्वा वैराजपिण्डाभिमानं वाभिगाद्यग्न्याद्यात्मविषयं वर्त्तमानप्रजापतित्वं शास्त्रप्रकाशितं प्रतिपन्नः तथैवायं यजमानस्तेनैव विधिना भवति। प्रजा-

रपाप्मध्वंसश्च फलत्वेनोक्तम्। तत्र पूर्वकल्पे यजमानस्यातिशयशालित्वाद्यथोक्तफलवत्त्वेऽपि नेदानीन्तनस्यैवमित्याशङ्का पराऽस्य भवतीत्यादिश्रुतिमवतारयति। यथेति। पूर्वकल्पनाप्रकारेण पूर्वजन्मस्थो यजमानः शास्त्रप्रकाशितं वर्तमानप्रजापतित्वम्प्रतिपन्नो यथेति सम्बन्धः। पूर्वयजमान इत्यस्य व्याख्या अतिक्रान्तकालिक इति। पुराकल्पमेव दर्शयति। एतामिति। तेनेति श्रुत्युक्तेनेत्येतत्। तेनैव विधिना श्रुतिप्रकाशितेन क्रमेण मुख्यं प्राणमात्मत्वेनोपगम्येति शेषः। सापत्नो भ्रातृव्यस्तस्य द्विषन्निति कुतो विशेषणमर्थसिद्धत्वादुद्देश्यस्येत्याशङ्क्याह। यत इति। तस्य द्वेष्टृत्वनियमे हेतुमाह। पारमार्थिकेति। अपरिच्छिन्नदेवतात्वमत्र परमार्थिकमात्मस्वरूपं विवक्षितम्। तत्तिरस्करणकारणत्वादुक्तपाप्मनो विशेषणमर्थवदिति शेषः। यदाग्नेयोऽष्टाकपाल इति वत् य एवं वेदेति प्रसिद्धार्थोपबन्धविधिपरं वा-

सुरा भवत्यात्मना परास्य द्विषन् भ्रातृव्यो भवति य एवं वेद ॥ ७ ॥

---

पतिस्वरूपेणात्मना परा चास्य प्रजापतित्वप्रतिपक्षभूतः पाप्मा भ्रातृव्यो भवति ॥ यतोऽद्वेष्टापि भवति कश्चिद्भ्रातृव्यो भरतादितुल्यो यस्त्विन्द्रियविषयासङ्गजनितः पाप्मा भ्रातृव्यो द्वेष्टा च। पारमार्थिकात्मस्वरूपतिरस्करणहेतुत्वात्। स च पराभवति विशीर्यते लोष्टवत्प्राणपरिष्वङ्गात्। कस्यैतत् फलमित्याह। य एवं वेद। यथोक्तं प्राणमात्मत्वेन प्रतिपद्यते पूर्वयजमानवदित्यर्थः॥ फलमुपसंहृत्याधुनाऽऽख्यायिकारूपमेवाश्रित्याह॥ कस्माच्च हेतोर्वागादीन्मुक्त्वा मुख्य एव प्राण आत्मत्वेनाश्रयितव्य इति तदुपपत्तिनिरूपणाय। यस्मादयं वागादीनां पिण्डादीनाञ्च साधारण आत्मेत्येतमर्थमाख्यायिकया दर्शयन्त्याह श्रुतिः॥ ७॥

---

कथम्। अतश्चैवं विद्यादिति विवक्षितमित्यभिप्रेत्याह। यथोक्तमिति। फलवत्प्रधानोपास्तेरुक्तत्वात्ते होचुरित्याद्युत्तरवाक्यं गुणोपास्तिपरमित्याह। फलमिति। फलवन्तम्प्रधानविधिमुक्त्वा सम्प्रत्याख्यायिकामेवाश्रित्य गुणविशिष्टप्राणोपासनमाहानन्तरश्रुतिरित्यर्थः। शङ्कोत्तरत्वेन चोत्तरग्रन्थमवतारयति। कस्माच्चेति। विशुद्धस्योक्तत्वाद्वैलक्षण्यं जिज्ञास्यमिति द्योतयितुं च शब्दः। करणानां कार्यस्य तदवयवानाञ्च प्राणो यस्मादात्मा व्यापकस्तस्मात्स एवाश्रयितव्य इत्युपपत्तिनिरूपणार्थं तस्य व्यापकत्वमित्येतदर्थं आख्यायिकया दर्शयन्ती श्रुतिर्हेत्वन्तरमाहेति योजना। तच्छब्दस्तस्य दर्थे॥ ७॥

ते होचुः क्व नु सोऽभूद्यो न इत्थमसक्तेत्ययमास्येऽन्तरिति सोऽयास्य आङ्गिरसोऽङ्गानां हि रसः ॥ ८ ॥

---

ते प्रजापतिप्राणा मुख्येन प्राणेन परिप्रापितदेवस्वरूपा ह ऊचुः उक्तवन्तः फलावस्थाः किमित्याह । क्व नु इति वितर्के । क्व नु कस्मिन्नु सोऽभूत् । यो नोऽस्मान् इत्थमेवमसक्तं सञ्जितवान् देवभावमात्मत्वेनोपगमितवान् । स्मरन्ति हि लोके केनचिदुपकृता उपकारिणं लोकवदेव स्मरन्तो विचारयमाणाः कार्य्यकरणसङ्घाते आत्मन्येवोपलब्धवन्तः । कथमयमास्येऽन्तरिति आस्ये मुखे य आकाशस्तस्मिन्नन्तरयमत्यक्षो वर्त्तत इति । सर्वो हि लोको विचार्य्याध्यवस्यति । तथा देवाः । यस्मादयमन्तराकाशे वागाद्यात्मत्वेन विशेषमनाश्रित्य वर्त्तमान उपलब्धो देवैः । तस्मात्स प्राण अ-

---

प्राणस्यात्मत्वादि व्यक्तीकर्त्तुमाख्यायिकां श्रुतिं विभजते । ते प्रजापतीति । वागादयस्तेन प्राणमाश्रित्य फलावस्थास्तर्हि किमिति प्राणं स्मरन्ति प्राप्तफलत्वादित्याशङ्क्याह । स्मरन्ति हीति । विचारफलं उपलब्धिं कथयति लोकवदिति । तामेवोपलब्धिमाकाङ्क्षाद्वारेण विवृणोति । कथमिति । दृष्टान्तं स्पष्टयति । सर्वो हीति । तथा देवा विचार्य्य प्राणमास्यान्तराकाशस्थं निर्धारितवन्त इत्याह । तथेति । किमनया कथया सिद्धमित्याशङ्क्याह । यस्मादिति । उपलब्धिसिद्ध्यर्थं युक्तं समुच्चिनोति । विशेषेति । सर्वानेव वागादीनविशेषेणाग्न्यादिभावेन प्राणः सञ्जितवान् । न चासमस्यः साधारणं कार्य्यं निवर्त्तयति अतो युक्तितोऽप्ययमास्यान्तराकाशे वर्त्तमानः-

सा वा एषा देवता दूर्नाम दूरꣳ ह्यस्या मृत्यु-

यास्यो विशेषानाश्रयाच्चासक्तमस्क्तितवान् वागादीन्। अत एवाङ्गिरसः। आत्मा कार्यकरणानाम्। कथमाङ्गिरसः। प्रसिद्धं ह्येतदङ्गानां कार्यकरणलक्षणानां रसः सार आत्मेत्यर्थः। कथं पुनरङ्गरसत्वं तदपाये शोषप्राप्तेरिति वक्ष्यामः। यस्माच्चायमङ्गरसत्वाद्विशेषानाश्रयत्वाच्च कार्यकरणानां साधारण आत्मा विशुद्धश्च तस्माद्वागादीनपास्य प्राण एव आत्मत्वेनाश्रयितव्य इति वाक्यार्थः। आत्मा ह्यात्मत्वेनोपगन्तव्योऽविपरीतबोधाच्छ्रेयः प्राप्तेर्विपर्यये चानिष्टप्राप्तिदर्शनात्॥ ८॥

स्यान्मतं प्राणस्य विशुद्धिरसिद्धेति। ननु परिहृतमेतद्वागादीनां कल्याणवदनाद्यासङ्गवत्प्राणस्यासङ्गास्पदत्वाभावेन। वाढम्। किन्त्वाङ्गिरसत्वेन वागादीनामात्मत्वोक्त्या वागादि-

सिद्ध इत्यर्थः। आयास्यत्ववदाङ्गिरसत्वं गुणान्तरं दर्शयति। अत एवेति। सर्वसाधारणत्वादेवेति। यावत्। तथापि कुतोऽस्याङ्गिरसत्वं साधारणेऽपि नर्भास तदनुपलब्धेरित्याशङ्क्य परिहरति। कथमित्यादिना। अङ्गेषु च रसधातोः सारत्वप्रसिद्धेर्न प्राणस्य तथात्वमिति शङ्कित्वा समाधत्ते कथं पुनरित्यादिना। कस्माद्ध हेतोरित्यादि चोद्यपरिहारमुपसंहरति। यस्माच्चेति। वाक्यार्थं प्रपञ्चयति आत्मा हीति॥ ८॥

प्राणस्य शुद्धत्वाद्व्यापकत्वाच्चोपास्यत्वमुक्तं तत्र शुद्धत्वं वागादिवदसिद्धमित्याशङ्कते। स्यान्मतमिति। शङ्कामाक्षिप्य समाधत्ते। नन्वित्यादिना अवेन सृष्टिर्यस्यास्ति तेन सृष्टापरस्याशुद्धतावदशुद्धत्वं वागादिसम्बन्धादशुद्धत्वाशङ्का प्राणस्योन्निपतीत्यर्थः। तात्पर्य्यं दर्शयन्नुत्तरवाक्यमुत्तरत्वेनाव-

दूरꣳ ह वा अस्मान्मृत्युर्भवति य एवं वेद ॥ ९ ॥

---

द्वारेण शवस्पृष्टितत्स्पृष्टेरिवाशुद्धता शङ्क्यत इत्याह। शुद्ध एव प्राणः कुतः सा वा एषा देवता दूर्नाम यं प्राणं प्राप्याश्मानमिव लोष्टवत् विध्वस्ता असुराः तं परामृशति। सेति। सैवैषा येयं वर्त्तमानयजमानशरीरस्था देवैर्निर्धारिताऽयमास्येऽन्तरिति देवता च स्यात् उपासनक्रियायाः कर्म्मभावेन गुणभूतत्वात्। यस्मात्सा दूर्नाम दूरित्येवं ख्याता। नामशब्दः ख्यापनपर्य्यायः। तस्मात्प्रसिद्धास्या विशुद्धिर्दूर्नामत्वात्। कुतः पुनर्दूर्नामत्वमित्याह। दूरं दूरे हि यस्मादस्याः प्राणदेवताया मृत्युरासङ्गलक्षणः पाप्माऽसंश्लेषधर्म्मित्वात् प्राणस्य समीपस्थस्यापि दूरता मृत्योस्तस्माद्दूरित्येवं ख्यातिरेव प्राणस्य विशुद्धिख्यापिका। विदुषः फलमुच्यते। दूरं ह वा

---

तारयति। अस्येति। नन्वत्र प्राणो नोच्यते स्त्रीलिङ्गेनार्थान्तरोक्तिप्रतीतेरित्याशङ्क्याह। यं प्राणमिति। तस्यामूर्त्तस्य परोक्षत्वादपरोक्षवाची च कथमेतच्छब्दो युज्यते तत्राह। सैवेति। कथं प्राणो देवताशब्दो न हि तस्य तच्छब्दत्वं प्रसिद्धमित्याशङ्क्याह। देवता चेति। यागे हि देवता कारकत्वेन गुणभूता प्रसिद्धा। तथा प्राणोऽपि द्रव्याद्यन्यत्वे सति विहितक्रियागुणत्वाद्देवतेत्यर्थः। प्राणोपास्तेर्द्विविधं फलं पापहानिर्देवताभावश्च। तत्र पापहानेरेव प्रधानफलस्यात्र श्रवणाद्दुर्गुणविशिष्टप्राणोपास्तिरिह विवक्षितेति वाक्यार्थमाह। यस्मादिति। न तावत्प्राणदेवताया दूर्नामत्वं निरूढं तत्र तच्छब्दप्रसिद्धेरदर्शनान्नापि यौगिकं प्राणस्य प्रत्यग्वृत्तेर्दूरत्वाभावादित्याक्षिपति। कुतः पुनरिति। परिहरति। अस्येति। कथं पाप्म-

सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य

अस्मात् मृत्युर्भवति। अस्मादेवंविदो य एवं वेद। तस्मादेवमिति प्रकृतं विशुद्धिगुणोपेतं प्राणमुपास्त इत्यर्थः। उपासनं नामोपास्यार्थवादे यथा देवतादिस्वरूपं श्रुत्या ज्ञाप्यते तथा मनसोपगम्यासनं चिन्तनं लौकिकप्रत्ययाव्यवधानेन यावत्तद्देवतादिस्वरूपात्माभिमानाभिव्यक्तिरिति॥ लौकिकात्माभिमानवत्। देवो भूत्वा देवानप्येति किन्देवतोऽस्यां प्राच्यां दिश्यसीत्येवमादिश्रुतिभ्यः॥ ९॥

सा वा एषा देवता दूरं ह वास्मान्मृत्युर्भवतीत्युक्तम्। कथं पुनरेवंविदो दूरं मृत्युर्भवतीत्युच्यते एवंवित्त्वविरोधादिन्द्रियविषयसंसर्गसङ्गजो हि पाप्मा प्राणात्माभिमानिनो हि विरुध्यते। वागादिविशेषात्माभिमानहेतुत्वात्स्वाभाविका·

---

सन्निधौ वर्त्तमानस्य ततो दूरत्वमित्याशङ्क्याह। अस्यैति। उपास्ते सदा भावयतीति यावत्। ब्रह्मज्ञानादिव प्राणतत्त्वज्ञानात्फलसिद्धिसंभवे किं सदा तद्भावनयेत्याशङ्क्य भावनापर्यायोपासनशब्दार्थमाह। उपासनं नामेति। दीर्घकालादरनैरन्तर्यरूपविशेषत्रयं विवक्षित्वाह। लौकिमेति। तस्य मर्यादां दर्शयति। यावदिति। मनुष्योऽहमितिवद्देवो ऽहमिति यस्य जीवत एवाभिमानाभिव्यक्तिस्तस्यैव देहपातादूर्द्ध्वं तद्भावः फलतीत्यत्र प्रमाणमाह। देवो भूत्वेति। का देवता रूपं तवेति। किं देवोऽसि तद्भावो भातीत्यर्थः॥ ९॥

कण्डिकान्तरमवतार्य वृत्तं कीर्त्तयति सा वा इति। नित्यानुष्ठानात्पापहानिर्धर्मात्पापक्षयश्रुतेः। न चेदमुपासनं नित्यं नैमित्तिकं देवतात्मत्वकामिनो विधानात्तत्कथं पापमेवंविदो दूरे भवतीत्याक्षिपति। कथं पुनरिति।

भिमानहेतुत्वाच्च। शास्त्रजनितो हि प्राणात्माभिमानस्तस्मादेवंविदः पाप्मा दूरम्भवतीति युक्तं विरोधात्तदेतत् प्रदर्शयति। सा वा एषा देवतेत्युक्तार्थमेतासां वागादीनां देवतानां पाप्मानं मृत्युं स्वाभाविकाज्ञानप्रयुक्तेन्द्रियविषयसंसर्गासङ्गजनितेन हि पाप्मना सर्वो म्रियते स ह्यतो मृत्युस्तं प्राणात्माभिमानरूपाभ्यो देवताभ्योऽपच्छिद्यापहत्य प्राणात्माभिमानमात्रतयैव प्राणोऽपहन्तेत्युच्यते। विरोधादेव तु पाप्मेवंविदो दूरङ्गमो भवति किं पुनश्चकार देवतानां पाप्मानं मृत्युमपहत्येत्युच्यते॥

---

विरोधिसन्निपाते पूर्वध्वंसमावश्यकं मन्वानः समाधत्ते। उच्यत इति। उक्तमेव व्यनक्ति। इन्द्रियेति। इन्द्रियाणां विषयेषु संसर्गो योऽभिनिवेशस्तेन जनितः पाप्मा परिच्छेदाभिमानो परिच्छिन्नेऽध्यात्मन्यात्माभिमानवतो विरुध्यते परिच्छेदापरिच्छेदयोर्विरोधस्य प्रसिद्धत्वादित्यर्थः। विरोधं साधयति। वागादीति। पाप्मनो वागादिविशेषवत्यात्मनि विशिष्टेऽभिमानहेतुत्वादाधिदैविकापरिच्छिन्नाभिमाने ध्वंसो युज्यते। दृश्यते हि। चाण्डालभाण्डावलम्बिनो जलस्य गङ्गाद्यविशेषभावापत्तावशेषत्वनिवृत्तिः। अशुच्यपि पयः प्राप्य गङ्गां याति पवित्रतामिति न्यायादित्यर्थः। यन्नैसर्गिकाज्ञानजन्यं तदागन्तुकप्रमाणज्ञानेन निवर्त्यते। यथा रज्जुसर्पादिज्ञानम्। नैसर्गिकाज्ञानजन्यश्च पाप्मा। तेन प्रामाणिकप्राणविज्ञानेन तद्ध्वस्तिरित्याह। स्वाभाविकेति। नन्वभिमानयोर्विरोधाविशेषाद्बाध्यबाधकत्वव्यवस्थायोगाद्द्वयोरपि मिथो बाधः स्यात्तत्राह। शास्त्रजनितो हीति। उक्तमेव पापध्वंसरूपविद्याफलं प्रपञ्चयितुमुत्तरवाक्यमित्याह। तदेतदिति। मृत्युमपहत्य यत्रासान्दिशामन्तस्तद्गमयाञ्चकारेति सम्बन्धः। कथं पाप्मा मृत्युरुच्यते तत्राह। स्वाभाविकेति।

यत्रासां दिशामन्तस्तद्गमयाञ्चकार तदासां

---

यत्र यस्मिन्नासां प्राच्यादीनां दिशामन्तोऽवसानं तत्तत्र गमयाञ्चकार गमनं कृतवानित्येतत्। ननु नास्ति दिशामन्तः कथमन्तं गमितवानित्युच्यते। श्रौतविज्ञानवज्जनावधिनिमित्तकल्पितत्वाद्दिशां तद्विरोधिजनाध्युषित एव देशो दिशामन्तो देशान्तोऽरण्यमिति यद्वदित्यदोषः तत्तत्र गमयित्वासां देवतानां पाप्मन इति द्वितीया बहुवचनं विन्यदधाद्विविधं न्यग्भावेनादधात् स्थापितवती प्राणदेवता प्राणात्माभिमानशून्येष्वन्त्यजनेष्विति सामर्थ्यादिन्द्रियसंसर्गजो हि स इति प्राणाश्रयतावगम्यते। तस्मात्तमन्त्यं जनं नेयात् न गच्छेत्सम्भाषणदर्शनादिभिर्न संसृजेत्। तत्संसर्गे पाप्मना संसर्गः कृतः स्यात्पाप्माश्रयो

---

व्यपहत्येत्यत्र पूर्ववदन्वयः। प्राणदेवता चेत् पाप्मानं हन्ति सदैव किन्न हन्यादित्याशङ्क्याह। प्राणात्मेति। भवतु प्राणो वागादीनां पाप्मनोऽपहन्ता विदुषस्तु किमायातमित्याशङ्क्याह। विरोधादेवेति। अनन्ताकाशदेशत्वाद्दिशामन्ताभावाद्यत्रासामित्याद्ययुक्तमिति शङ्कते। नन्विति। शास्त्रीयज्ञानकर्मसंस्कृतो जनो मध्यदेशः। प्रसिद्धस्यापि तदधिष्ठितत्वेन मध्यदेशत्वात् तत्राप्यन्त्यजाधिष्ठितदेशस्य पापीयस्त्वस्वीकारादतस्तं जनं तदधिष्ठितञ्च देशमवधिकृत्वा तेनैव निमित्तेन दिशां कल्पितत्वादानन्त्याभावात्पूर्वोक्तजनातिरिक्तजनस्य तदधिष्ठितदेशस्य चान्तत्वोक्तेर्मध्यदेशादन्यो देशो दिशामन्त इत्युक्तेन काचिदनुपपत्तिरिति परिहरति। उच्यत इति। किमित्यन्त्यजनेष्वित्यधिकावापः क्रियते तत्राह। इति सामर्थ्यादिति। देशमात्रे पाप्मावस्थानानुपपत्तिरित्यर्थः। तामेवानुप-

पाप्मनो विन्यदधात्तस्मान्न जनमियान्नान्तमियन्नेत्पाप्मानं मृत्युमन्ववायानीति ॥ १० ॥

सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्याथैना मृत्युमत्यवहत् ॥ ११ ॥

---

हि सः तज्जननिवासं चान्तं दिगन्तशब्दवाच्यं नेयाज्जनशून्यमपि जनमपि तद्देशवियुक्तमित्युक्तमित्यभिप्रायः। नेदिति। परिणयार्थे निपातः। इत्थं जनसंसर्गे पाप्मानं मृत्युमन्ववायानीति। अनु अव अयानीति अनुगच्छेयमित्येवं भीतो जनमन्तं नेयादिति पूर्वेण सम्बन्धः। १०।

सा वा एषा देवता तदेतत्प्राणात्मज्ञानकर्मफलं वागादीनामग्न्याद्यात्मत्वमुच्यते। अथैना मृत्युमत्यवहत्। यस्मादाध्यात्मिकपरिच्छेदकरः पाप्मा मृत्युः प्राणात्मविज्ञानेनापहतस्तस्मात्स प्राणोऽपहन्ता पाप्मनो मृत्योः। तस्मात्स एव प्राण एना

---

पत्तिं साधयति। दूरन्त्र्येति। भवतु यथोक्तो दिशामन्तस्तथा च पाप्मासंसर्गोऽस्तु तथापि किमायातमित्याशङ्क्य तस्य शिष्टैस्त्याज्यत्वमित्याह। तस्मादिति। निषेधद्वयस्य तात्पर्यमाह। जनशून्यमपीति। प्राणोपास्तिप्रकरणे निषेधश्रुतेस्तदुपासकेनैवायं निषेधोऽनुष्ठेयो न सर्वैरित्याशङ्क्याह। नेदित्यादिना। इत्थं श्रुत्युक्तं निषेधं न चेदहं कुर्यां ततः पाप्मानमनुगच्छेयमिति। निषेधातिक्रमात् सर्वस्य भयं जायते न प्राणोपासकस्यैव। अतः सर्वोऽपि पापाद्भीतो न भयङ्गच्छेद् वाक्यं हि प्रकरणाद्बलवदित्यर्थः ॥ १० ॥

द्विविधं प्राणात्मफलं पापहानिर्देवताभावश्च। तत्र पापहानिमुपदिशता प्रासङ्गिकसाधारणो निषेधो दर्शितः। सम्प्रति देवताभावं वक्तुमुत्तरवाक्यमिति

**स वै वाचमेव प्रथमामत्यवहत्सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते ॥ १२ ॥**

---

वागादिदेवताः प्रकृतं पाप्मानं मृत्युमतीत्याबहत्प्रापयत्स्वं स्वमपरिच्छिन्नमग्न्यादिदेवतात्मरूपम् । ११ ।

स वै वाचमेव प्रथमामत्यवहत् । स प्राणो वाचमेव प्रथमां प्रधानामित्येतदुद्गीथकर्मणीतरकरणापेचया साधकतमत्वं प्राधान्यं तस्यास्तां प्रथमामत्यवहद् वहनं कृतवान् । तस्याः पुनर्मृत्युभवतीत्योढायाः किंरूपमित्युच्यते । सा वाक् यदा यस्मिन् काले पाप्मानं मृत्युमत्यमुच्यत अतीत्यामुच्यत मोचिता स्वयमेव तदा सोऽग्निरभवत्सा वाक् पूर्वमप्यग्निरेव सती मृत्युवियोगेऽप्यग्निरेवाभवत् । एतावांस्तु विशेषो मृत्युवियोगे । सोऽयमतिक्रान्तोऽग्निः परेण मृत्युं परस्तान्मृत्योर्दीप्यते । प्राङ्मोचान्मृत्युप्रतिबद्धोऽध्यात्मवागात्मना नेदानीमिव दीप्तिमानासीदिदानीं तु मृत्युं परेण दीप्यते मृत्युवियोगात् । १२ ।

---

प्रतीकोपादानपूर्वकमाह । सा वा एषेति । अथ यच्छ्रायद्योतितमर्थं कथयति । यस्मादिति । पाप्मापहन्तृत्वमनूद्यावशिष्टभागं व्याचष्टे । तस्माद्वा एवेति ॥ ११ ॥

सामान्योक्तमर्थं विशेषेण प्रपञ्चयति । स वै वाचमित्यादिना । कथं वाचः प्राथम्यं तदाह । उद्गीथेति । वाचो मृत्युमतिक्रान्ताया रूपं प्रश्नपूर्वकं प्रदर्शयति । तस्या इति । अनग्नेरग्नित्वविरोधं धुनीते । सा वागिति । पूर्वमपि वाचोऽग्नित्वेनोपासनात्कथमिदानीमग्नित्वमित्याशङ्क्याह । एतावानिति । उक्तं विशेषं विशदयति । प्रागिति ॥ १२ ॥

अथ प्राणम यवहत्स यदा मृत्युमत्यमुच्यत स वायुरभवत्सोयं वायुः परेण मृत्युमतिक्रान्तः पवते ॥ १३ ॥ अथ चक्षुरत्यवहत् तद्यदा मृत्युमत्यमुच्यत स आदित्योऽभवत्सोऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति ॥ १४ ॥ अथ श्रोत्रमत्यवहत्तद्यदा मृत्युमत्यमुच्यत ता दिशोऽभवंस्ता इमा दिशः परेण मृत्युमतिक्रान्ताः ॥ १५ ॥ अथ मनोऽत्यवहत्तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत्सोऽसौ चन्द्रः परेण मृत्युमतिक्रान्तो भात्येवं ह वा

---

तथा घ्राणः प्राणो वायुरभवत्। स तु पवते मृत्युं परेणातिक्रान्तः। सर्वमन्यदुक्तार्थम् ॥ १३ ॥ तथा चक्षुरादित्योऽभवत् स तु तपति ॥ १४ ॥ तथा श्रोत्रं दिशोऽभवन्। दिशः प्राच्यादिविभागेनावस्थिताः ॥ १५ ॥ मनश्चन्द्रमा भाति। यथा पूर्वं यजमानं वागाद्यग्न्यादिभावेन मृत्युमत्यवहत्। एवमेनं वर्त्तमानयजमानमपि ह वै एषा प्राणदेवता अतिवहति।

---

वागादीनामग्न्यादिदेवतात्वप्राप्त्यानुपासकस्य किमायातम्। न हि तदेव तस्य फलमित्याशङ्क्याह। यद्वेति। देवतात्वप्रतिबन्धकानुपाप्मनः सर्वान्पोह्योक्तवर्त्मना वागादीनामुपासकोपाधिभूतानामग्न्यादिदेवताप्राप्तेव सोऽपि सदा प्राणमात्मत्वेनध्यायन् भावनाबलाद्वैराजं पदं पूर्वयजमानवदाप्नोतीति भावः। कस्येदं फलमित्याकाङ्क्षायां उपासकं विशिनष्टि। यो वागादीति। उक्तोपासनस्य प्रागुक्तं फलमनुगुणमित्यत्र मानमाह। तं य-

एनमेषा देवता मृत्युमतिवहति य एवं वेद ॥ १६ ॥

अथात्मनेऽन्नाद्यमागायद्यद्धि किञ्चान्नमद्यतेऽनेनैव तदद्यत इह प्रतितिष्ठति ॥ १७ ॥

---

वागाद्यग्न्यादिभावेनैव यो वागादिपञ्चकविशिष्टं प्राणं वेद तं यथा यथोपासते तदेव भवतीति श्रुतेः ॥ १६ ॥

अथात्मने। यथा वागादिभिरात्मार्थमागानं कृतं तथा मुख्योऽपि प्राणः सर्वप्राणसाधारणं प्राजापत्यं फलमागानं कृत्वा त्रिषु पवमानेष्वथानन्तरं शिष्टेषु नवसु स्तोत्रेष्वात्मने आत्मार्थमन्नाद्यमन्नञ्च तदाद्यञ्चान्नाद्यमागायत्। कर्त्तुः कामसंयोगो वाचनिक इत्युक्तम्। कथं पुनस्तदन्नाद्यं प्राणेनात्मार्थमागीतमिति गम्यत इत्यत्र हेतुमाह। यत्किञ्चेति। सामान्यान्नमत्र परामर्शार्थं। हीति हेतौ यस्माल्लोके प्राणिभिर्यत्किञ्चिदन्नमद्यते भक्ष्यते तदनेनैव प्राणेनैव। अन इति प्राणस्याख्या प्रसिद्धा। अनः शब्दः सान्तः शकटवाची यस्त्वन्यः स-

---

येति। उपास्यस्य प्राणस्य कार्यकरणसङ्घातस्य विधारकत्वं नाम गुणान्तरं वक्तुमुत्तरवाक्यम् ॥ १३। १४। १५। १६ ॥

तदादाय व्याकरोति। अथेत्यादिना। कर्तुरुद्गातुर्विक्रीतस्य फलस्यान्यस्य त्वाह। कर्त्तुरिति। अन्नागानमार्त्विज्यमित्यत्र प्रश्नपूर्वकं वाक्यशेषमनुकूलयति। कथमित्यादिना। तमेव हेतुमाह। यस्मादिति। प्राणेनैव तदद्यत इति सम्बन्धः। यस्मादित्यस्य तस्मादित्यादिभाष्येणान्वयः। अनितेर्धातोरनशब्दस्य प्राणपर्यायस्तर्हि कथं शकटे तच्छब्दप्रयोगस्तत्राह। अनः शब्द इति। इतश्च प्राणस्य स्वार्थमन्नागानं युक्तमित्याह। किञ्चेति। प्रा-

ते देवा अब्रुवन्नेतावद्वा इद ँ सर्वं यदन्नं तदात्मन आगासीरनु नोऽस्मिन्नन्न आभजस्वेति ते

---

रान्तः स प्राणपर्यायः प्राणेनैव तदद्यत इत्यर्थः। किञ्च न केवलं प्राणेनाद्यत एवान्नाद्यन्तस्मिन्शरीराकारपरिणतेऽन्नाद्ये इह प्रतितिष्ठति प्राणस्तस्मात्प्राणेनात्मनः प्रतिष्ठार्थमागीतमन्नाद्यम्। यदपि प्राणेनान्नादनं तदपि प्राणस्य प्रतिष्ठार्थमेवेति न वागादिवच्चिर कल्याणासङ्गजपाप्मसम्भवः प्राणेऽस्ति।

ते देवाः। नन्ववधारणमयुक्तं प्राणेनैव तदद्यत इति। वागादीनामप्यन्ननिमित्तोपकारदर्शनान्नैष दोषः। प्राणद्वारत्वात्तदुपकारस्य। कथं प्राणद्वारकोऽन्नकृतो वागादीनामुपकार इत्येतमर्थं प्रदर्शयन्नाह। ते वागादयो देवाः स्वविषयद्योतनाद्देवा अब्रुवन्नुक्तवन्तो मुख्यं प्राणमिदमेतावन्नातोऽधिक-

---

णेन वागादिवदात्मार्थमन्नमागीतञ्चेत्तर्हि तस्यापि पाप्मवेधः स्यादित्याशङ्क्याह। यदपीति। इहान्ने देहाकारपरिणते प्राणस्तिष्ठति तदनुसारिणश्च वागादयः स्थितिभाजः। प्राणजातस्थित्यर्थं प्राणस्यान्नमिति न पाप्मवेधस्तस्मिन्नस्तीत्यर्थः॥ १७॥

भर्त्ता श्रेष्ठः पुरोगन्तेत्यादिगुणविधानार्थं वाक्यान्तरमादत्ते। ते देवा इति। तस्य विवक्षितमर्थं वक्तुमादावाक्षिपति। नन्विति। अयुक्तत्वे हेतुमाह। वागादीनामिति। अवधारणानुपपत्तिं दूषयति। नैष दोष इति यथा प्राणस्योपकारोऽन्नकृतो न वागादिद्वारकस्तथा तेषामपि नासौ प्राणद्वारको विशेषाभावादिति शङ्कते। कथमिति वाक्येन परिहरति। एतमर्थमिति। आह विशेषमिति शेषः। तेषां देवत्वं साधयति स्वविषयेति।

वै माभिसंविशतेति तथेति तं समन्तं परिण्य विशन्त ॥

---

मस्ति । वै इति स्मरणार्थम् । इदन्त्वसर्वमेतावदेव किं यदन्नं प्राणस्थितिकरमद्यते लोके तत्सर्वमात्मने आत्मार्थमागासीरागीतवानस्यागानेनात्मसात्कृतमित्यर्थः । वयन्त्वन्नमन्तरेण स्थातुन्नोत्सहामहेऽतोऽनु पश्चान्नोऽस्मानस्मिन्नन्ने आत्मार्थे तवान्ने आभजस्वाभाजयस्व । णिचोऽश्रवणं छान्दसम् । अस्मांश्चान्नभागिनः कुरु इतर आह । ते यूयं यद्यन्नार्थिनः वै मा मामभिसंविशत समन्ततो मामाभिमुख्येन निविशतेत्येव मुक्तवति प्राणे तथेत्येवमिति तं प्राणं परिसमन्तं परिसमन्तान्न्यविशन्त निश्चयेनाविशन्त तम्प्राणं परिवेष्ट्य निविष्टवन्तः इत्यर्थः ।

---

तत्र प्रसिद्धिं प्रमाणयितुं वैशब्द इत्याह । वा इति । स्मरणार्थ इति तत्प्रसिद्धस्यार्थस्येति शेषः । वाक्यार्थमाह । इदन्त्विति । एतावत्त्वमेव व्याचष्टे । तत्सर्वमिति । किमिदं प्राणार्थमन्नागानं नाम तदाह आगानेनेति । का पुनरेतावता भवताङ्कृतिस्तत्राह वयन्त्विति । अन्नमन्तरेण ममापि स्थातुमशक्तेर्मदर्थन्तदागीतमिति चेत्तत्राह । अत इति । आभजस्वेति श्रूयमाणे कथमन्यथा व्याख्यायते तत्राह । णिच इति । तत्रैवान्नस्वामित्वस्याकमपि तत्र प्रवेशमात्रं स्थित्यर्थमपेक्षितमिति वाक्यार्थमाह । अस्मांश्चेति । वैशब्दो यद्यर्थे प्रयुक्तः ।

तस्माद्यदनेनान्नमत्ति तेनैतास्तृप्यन्त्येवꣳ ह वा एनꣳ स्वा अभिसंविशन्ति भर्त्ता स्वानाꣳ श्रेष्ठः पुर एता भवत्यन्नादोऽधिपतिर्य एवं वेद य उ

---

तथा निविष्टानां प्राणानुज्ञया तेषां प्राणेनैवाद्यमानं प्राणस्थितिकरं सदन्नं तृप्तिकरं भवति न स्वातन्त्र्येणान्नसम्बन्धो वागादीनाम् । तस्माद्युक्तमेवावधारणमनेनैव तदद्यत इति । तदेव चाह । तस्माद्यस्मात्प्राणाश्रयतयैव प्राणानुज्ञयाभिसंविष्टा वागादीनान्देवतास्तस्माद्यदन्नमनेन प्राणेनात्ति लोकस्तेनान्नेनैता वागाद्यास्तृप्यन्ति । वागाद्याश्रयम्प्राणं यो वेद वागादयश्च पञ्च प्राणाश्रया इति तमप्येवं ह वै स्वा ज्ञातय अभिसंविशन्ति वागादय इव प्राणम् । ज्ञातीनामाश्रयणीयो भवतीत्यभिप्रायः । अभिसंविष्टानां च स्वानां प्राणवदेव वागादीनां स्वान्नेन भर्त्ता भवति । तथा श्रेष्ठः पुरोऽग्रत एता गन्ता भवति । वागादीनामिव प्राणः तथान्नादोऽनामयावी-

---

प्राणं परिवेष्ट्य तदनुज्ञया वागादीनामन्नार्थिनामवस्थानं चेत्तेषामपि प्राणवदन्नसम्बन्धः स्यादित्याशङ्क्याह । तथेति । व्यस्तप्राणस्यान्नबलाद्वागादिस्थित्यनुपलब्धेरित्यर्थः । वागादीनामन्नोपकारस्य प्राणद्वारत्वे सिद्धे फलितमाह । तस्मादिति । तेषामन्नकृतोपकारस्य प्राणद्वारकत्वे वाक्यशेषं संवादयति । तदेवेति । विद्याफलं दर्शयन् गुणजातमुपदिशति । वागादीति । वेदनमेव व्याचष्टे । वागादयश्चेति । स च प्राणोऽहमस्मीति

ह्येवंविद ए स्वेषु प्रतिपत्तिर्बुभूर्षति न हैव अलं भार्य्येभ्यो भवत्यथ य एवैतमनुभवति यो वै तमनुभार्य्यान् बुभूर्षति स हैवालं भार्य्येभ्यो भवति ॥ १८ ॥

---

त्यर्थः। अधिपतिरधिष्ठाय च पालयिता स्वतन्त्रः पतिः प्राणवदेव वागादीनां य एवं प्राणं वेद तस्य तद्यथोक्तं फलम्भवति। किञ्च य उ ह एवं विदं प्राणविदम्प्रति स्वेषु ज्ञातीनाम्मध्ये प्रतिपत्तिः प्रतिकूलो बुभूषति प्रतिस्पर्द्धी भवितुमिच्छति सोऽसुरा इव प्राणप्रतिस्पर्द्धिनो न हैवालं न पर्याप्तो भार्येभ्यो भरणीयेभ्यो भवितुमित्यर्थः। अथ पुनर्य एव ज्ञातीनाम्मध्ये एवमेवं विदं वागादय इव प्राणमन्वनुगतो भवति यश्चैवै तमेवं विद्वमन्वेवानुवर्त्तयन्नेवात्मीयान् भार्यान्बुभूर्षति भर्त्तुमिच्छति यथैव वागादयः प्राणानुवृत्त्या आत्मबुभूर्षव आसन्। स हैवालंपर्याप्तो भार्येभ्यो भरणीयेभ्यो भवति भर्त्तुं नेतरः स्वतन्त्रः।

---

वेदेति चकारार्थः। अनामयावी व्याधिरहितो दीप्ताग्निरिति यावत्। सम्प्रति प्राणविद्यां स्तुत्वा तद्विद्यावद्विद्वेषिणो दोषमाह। किञ्चेति। इदानीं प्राणविदम्प्रति अनुरागे लाभं दर्शयति। अथेत्यादिना। १८।

सो यास्य आङ्गिरसोऽङ्गानाᳪ हि रसः। प्राणो वा अङ्गानाᳪ रसः प्राणो हि वा अ-

---

सर्वमेतत्प्राणगुणविज्ञानफलमुक्तम्। कार्यकरणानामात्मत्वप्रतिपादनाय प्राणस्याङ्गिरसत्वमुपन्यस्तम्। सो यास्य आङ्गिरस इति अस्माद्धेतोरयमाङ्गिरस इत्याङ्गिरसत्वे हेतुर्नोक्तस्तद्धेतुसिद्ध्यर्थमारभ्यते। तद्धेतुसिद्ध्यायत्तं हि कार्य्यकरणात्मत्वं प्राणस्यानन्तरस्य वागादीनां प्राणाधीनतोक्ता। सा च कथमुपपादनीयेत्याह। सो यास्य आङ्गिरस इत्यादि यथोपन्यस्तमेवोपादीयते। उत्तरार्थं प्राणो वा अङ्गानां रस इत्येवमन्तं वाक्यं यथा व्याख्यातार्थमेव पुनः स्मारयति। कथम्प्राणो वा अङ्गानां रस इति। प्राणो हि। हिशब्दः प्रसिद्धो अङ्गानां रसः। प्रसिद्धमेतत् प्राणस्याङ्गरसत्वं न वागादीनाम्। तस्माद्युक्तं प्राणो वा इति स्मरणम्। कथं

---

ते देवा अब्रुवन्नित्यादौ गुणविधिर्विवक्षितो न त्रिविधविधिर्गुणफलसंबन्धस्य श्रवणादित्याह। सर्वमेतदिति। उत्तरग्रन्थस्य व्यवहितेन सम्बन्धं वक्तुं व्यवहितमनुवदति। कार्यकरणानामिति। अनन्तरग्रन्थमवतारयति। अस्मादिति। किमित्याङ्गिरसत्वसाधको हेतुः साधनीयस्तमाह। तद्धेत्विति। सम्प्रत्यव्यवहितं सम्बन्धं दर्शयति। अनन्तरस्येति। प्रकारान्तरं बुभुत्स्यमानमिति सूचयितुं च शब्दः। तर्हि यदुपपादनीयं तदुच्यतां किमित्युक्तस्य पुनरुक्तिरित्याशङ्क्याह! उत्तरार्थमिति। प्रतिज्ञानुवादो वक्ष्यमाणहेतोरुपयोगीत्यर्थः। यथोपन्यस्तमेवेत्यादि प्रपञ्चयति। प्राणो वा इति। उक्तार्थे निर्णयहेतुं पृच्छति। कथमिति तत्र प्रसिद्धिं हेतुं कुर्वन् परिहरति।

ङ्गाना ꣳ रसस्तस्माद्यस्मात्कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव तच्छुष्यत्येष हि वा अङ्गाना ꣳ रसः १९

---

पुनः प्रसिद्धत्वमित्यत आह। तस्माच्छब्द उपसंहारार्थ उपरितनेन सम्बध्यते। यस्माद्यतोऽवयवात्कस्मादनुक्तविशेषाद्यस्मात्कस्माद्यतः कुतश्चिदङ्गाच्छरीरावयवादविशेषितात् प्राण उत्क्रामत्यपसर्पति तदेव तत्रैव तदङ्गं शुष्यति नीरसम्भवति शोषमुपैति। तस्मादेष हि वा अङ्गानां रस इत्युपसंहारः। अतः कार्यकरणानामात्मा प्राण इत्येतत्सिद्धमात्मापाये हि शोषो मरणं स्यात्तस्मात्तेन जीवन्ति प्राणिनः सर्वे। तस्मादपास्य वागादीन् प्राण एवोपास्य इति समुदायार्थः ॥ १९ ॥

---

प्राणो हीति। प्रसिद्धिमेव प्रकटयति। प्रसिद्धमिति। स रसं प्रसिद्धस्याङ्गिरसत्वस्येति शेषः। प्रसिद्धेति शङ्कते। कथमिति तामन्वयव्यतिरेकाभ्यां साधयति। अत आहेति। पदार्थमुक्त्वा वाक्यार्थमाह। यस्मात्कस्मादिति। उक्तेन व्यतिरेकेणानुक्तमन्वयं समुच्चिनोति च शब्दः। तस्माच्छब्दस्योपरिभावेन सम्बन्धमुक्तं स्फुटयति। तस्मादिति। अन्वयव्यतिरेकाभ्यामङ्गरससत्वे प्राणस्य सिद्धे फलितमाह। अत इति। उक्तन्यायादङ्गरसत्वे सिद्धेऽपि कथमात्मतत्वं सिद्धेदित्याशङ्क्याह। आत्मेति। अस्तु प्राणः सङ्घातस्यात्मा तथापि किं स्यात्तदाह। तस्मादिति। भवतु प्राणाधीनं सङ्घातस्य जीवनं तथापि कथं तस्यैवोपास्यत्वमित्याशङ्क्याह। तस्मादपास्येति ॥ १९ ॥

एष उ एव बृहस्पतिर्वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः ॥ २० ॥

एष उ । न केवलं कार्यकारणयोरेवात्मा प्राणो रूपकर्म्मभूतयो किन्तर्हि ऋग्यजुःसाम्नां नामभूतानामात्मेति । सर्वात्मकतया प्राणं स्तुवन् महीकरोति उपास्यत्वाय । एष उ एव प्रकृत आङ्गिरसो बृहस्पतिः । कथं बृहस्पतिरिति । उच्यते । वाग्वै बृहती बृहती छन्दः षट्त्रिंशदक्षरा । अनुष्टुप् च वाक् कथम् । वाग्वा अनुष्टुबिति श्रुतेः । सा च वागनुष्टुब्बृहत्यां छन्दस्यन्तर्भवति अतो युक्तं वाग्वै बृहतीति प्रसिद्धवदुक्तम् । बृहत्याञ्च सर्व्वा ऋचोऽन्तर्भवन्ति प्राणसंस्तुतत्वात् । प्राणो बृ-

---

बृहस्पत्यादिधर्म्मकं प्राणोपासनं वक्तुं वाक्यान्तरमवतारयति । एष इति । तस्य विधान्तरेण तात्पर्यमाह । न केवलमिति । कार्यं स्थूलशरीरं प्रत्यक्षतो दृश्यमानं रूपात्मकं करणञ्च ज्ञातक्रियाशक्तिमत्कर्म्मभूतं तयोरात्मा प्राण इत्युक्त्वा नामरूपयोरपि तथेति वक्तुं कण्डिकाचतुष्टयमित्यर्थः । किमिति प्राणस्य कारणत्वेन सर्वात्मोक्त्या स्तुतिरित्याशङ्क्याह । उपास्यत्वायेति । उपक्रान्तोऽप्यर्थो बृहस्पतिशब्दादुपरि सम्बध्यते । बृहस्पतिर्देवानां पुरोहित आसीदिति श्रुतेर्देवपुरोहितो बृहस्पतिरुच्यते । तत्कथं प्राणस्य बृहस्पतित्वमिति पृच्छते । कथमिति । देवपुरोहितं व्यावर्त्तयितुमुत्तरवाक्येनोत्तरमाह । उच्यत इति । प्रसिद्धवचनं कथमित्याशङ्क्याह । बृहतीति । छन्द इति । सप्त हि गायत्र्यादीनि प्रधानानि छन्दांसि तेषां मध्यमं छन्दो बृहतीत्युच्यते । सा च बृहती षट्त्रिंशदक्षरा प्रसिद्धेत्यर्थः । भवतु यथोक्ता बृहती तथापि कथं वाग्वै बृहतीत्युक्तं तत्राह । अनुष्टुप् चेति । द्वात्रिंशदक्षरा तावदनुष्टुविष्टा सा चाष्टाक्षरैश्चतुर्भिः पादैः षट्त्रिंशाक्षरायां बृहत्या-

बृहती प्राण ऋच इत्येव विद्यादिति श्रुत्यन्तरात्। वागात्मत्वाच्चर्चां प्राणेऽन्तर्भावः। तत्कथमित्याह। तस्या वाचो बृहत्या ऋच एष प्राणः पतिः। तस्या निर्वर्त्तकत्वात् कौष्ठ्याग्निप्रेरितमारुतनिर्वर्त्त्या हि ऋक् पालनाद्वाचः पतिः प्राणेन हि पाल्यते वाक्। अप्राणस्य शब्दोच्चारणसामर्थ्याभावात्। तस्मादु बृहस्पतिः ऋचां प्राण आत्मेत्यर्थः।

---

मन्तर्भवत्यवान्तरसंख्याया महासंख्यायामन्तर्भावादित्याह। सा चेति। वागनुष्टुभोरनुष्टुब्बृहत्योश्चोक्तमैक्यमुपजीव्य फलितमाह। एत इति। भवतु वागात्मिका बृहती तथापि तत्पतित्वेन प्राणस्य कथमृक्पतित्वमित्याशङ्क्याह। बृहत्याश्चेति। सर्वात्मकप्राणरूपेण बृहत्याः स्तुतत्वात्तत्र सर्वासामृचामन्तर्भावः सम्भवति तस्मात्प्राणस्य बृहस्पतित्वे सिद्धमृक्पतित्वमित्यर्थः। प्राणरूपेण स्तुता बृहतीत्यत्र प्रमाणमाह। प्राणो बृहतीति। तथापि प्राणस्य विवक्षितमृगात्मत्वं कथं सिध्यतीत्याशङ्क्याह। प्राण इति। तस्य तदात्मत्वे हेत्वन्तरमाह। वागात्मत्वादिति। तासां तदात्मत्वेऽपि कथं प्राणेऽन्तर्भावो न हि घटो मृदात्मा पटेऽन्तर्भवतीति शङ्कते। तत्कथमिति। प्राणस्य वाङ्निष्पादकत्वात्तद्भूतानामृचां प्राणे कारणे युक्तोऽन्तर्भाव इत्याह। तस्या इत्यादिना। प्राणस्य तन्निर्वर्त्तकत्वेऽपि न तस्मिन् वाचोऽन्तर्भावो न हि घटस्य कुलालेऽन्तर्भाव इत्याशङ्क्याह। कौष्ठ्येति। कोष्ठनिष्ठेनाग्निना प्रेरितस्ततो वायुरूर्द्ध्वं गच्छन् कण्ठादिभिरभिहन्यमानो वर्णतया व्यज्यते तदात्मिका च वाङ्निर्णीता देवताधिकरणे ऋक् च वागात्मिकोक्ता तद्युक्तं तस्याः प्राणेऽन्तर्भूतत्वमित्यर्थः। ऋगात्मत्वं प्राणस्य प्रकारान्तरेण साधयति। पालनाद्वेति। स्वत्वप्रदत्वे सति स्थापकत्वं तादात्म्यव्याप्तमित्यभिप्रेत्योपसंहरति तस्मादिति

एष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म तस्या एष पतिस्तस्मादु ब्रह्मणस्पतिः ॥ २१ ॥

---

तथा यजुषाम्। कथमेष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म यजुस्तच्च वाग्विशेष एव। तस्या वाचो यजुषो ब्रह्मण एष पतिस्तस्मादु ब्रह्मणस्पतिः पूर्ववत्। कथं पुनरेतदवगम्यते। बृहती ब्रह्मणी ऋग्यजुष्ट्वं न पुनरन्यार्थत्वमित्युच्यते। वाचोऽन्ते साम सामानाधिकरण्यनिर्देशाद्वाग्वै सामेति। तथा च वाग्वै बृहती वाग्वै ब्रह्मेति च वाक्समानाधिकरणयोर्ऋग्यजुष्ट्वं युक्तं परिशेषात् साम्न्यभिहिते ऋग्यजुषी एव परिशिष्टे। वाग्विशेषत्वाच्च वाग्विशेषे हि ऋग्यजुषी। तस्मात्तयोर्वाचा समानाधिकरणता युक्ता। अविशेषप्रसङ्गाच्च। सामोद्गीथ इति च स्पष्टं विशेषाभिधानत्वम्। तथा

---

यजुषामात्मेति पूर्वेण सम्बन्धः। नियतवाद्याक्षरत्वात्कृतस्तद्विपरीतानां यजुषां तत्त्वमिति पृष्ट्वा परिहरति। कथमिति। तथापि कथमात्मा यजुषामात्मेत्याशङ्क्याह। वाग्वै ब्रह्मेति। निरुक्तत्वं पादबद्धत्वञ्चात्रापि तुल्यमित्याह। पूर्ववदिति। रूढिमाश्रित्य शङ्कते। कथं पुनरिति। वाक्यशेषविरोधान्नात्र रूढिः सम्भवतीति परिहरति। उच्यत इति। वाचोऽन्ते सामेत्यन्ते वाचः साम सामानाधिकरण्येन निर्देशाद्धेतोरधिकारोऽयमिति योजना। तथापि कथमृग्यजुष्ट्वं बृहतो ब्रह्मणोरिति तत्राह। तथा चेति। परिशेषमेव दर्शयति। साम्नीति। इतश्च वाक्समानाधिकृतयोर्बृहती ब्रह्मणोर्ऋग्यजुष्ट्वमेष्टव्यमित्याह। वाग्विशेषत्वाच्चेति। तत्रैव हेत्वन्तरमाह। विशेषेति। प्रकृतमेव व्यतिरेकमुखेन विवृणोति। सामेति। द्वितीयश्चकारोऽवधारणार्थः किञ्च वाग्वै बृहती वाग्वै

एष उ एव साम वाग्वै सामैष सा चामश्चेति तत्साम्नः सामत्वम् ॥

---

बृहतीब्रह्मशब्दयोरपि विशेषाभिधानत्वं युक्तम्। अन्यथाऽनिर्धारितविशेषयोरानर्थक्यापत्तेश्च। विशेषाभिधानस्य वाङ्मात्रत्वे चोभयत्र पौनरुक्त्याद् ऋग्यजुः सामोद्गीथशब्दानाञ्च श्रुतिष्वेवं क्रमदर्शनात् ॥ २१ ॥

एष उ एव साम। कथमित्याह वाग्वै सा यत्किञ्चित् स्त्रीशब्दाभिधेयं सा वाक्सर्वस्त्रीशब्दाभिधेयवस्तुविषयो हि सर्वनाम साशब्दः। तथाऽमः एष प्राणः सर्वपुंशब्दाभिधेयवस्तुविषयोऽमः शब्दः। केन मे पौंस्यानि नामान्याप्नोषीति प्राणेनेति ब्रूयात्केन मे स्त्रीनामानीति वाचेति श्रुत्यन्तरात्। वाक् प्राणाभिधानभूतौ सामशब्दौ। तथा प्राणं निर्वर्त्य

---

ब्रह्मेति वाक्याभ्यां बृहतीब्रह्मणोर्वागात्मत्वं सिद्धं न च तयोर्वाङ्मात्रत्वं वाक्यद्वयेऽपि वाग्वै वागिति पौनरुक्त्यप्रसङ्गात्तस्मादुद्बृहतीब्रह्मणोरेष्टव्यमृग्यजुष्ट्वमित्याह। वाङ्मात्रत्वे चेति। तत्रैव स्थानमाश्रित्य हेत्वन्तरमाह ऋगिति।

ऋग्यजुष्ट्वं प्राणस्य प्रतिपाद्य तस्यैव सामत्वं साधयति। एष इत्यादिना। तदेव स्फुटयति। सर्वेति। सा शब्दो हि सर्वनाम। तथा च यः स्त्रीलिङ्गः सर्वः शब्दस्तेनाभिधेयं वस्तु वागित्यर्थः। अमः प्राण इत्युक्तमुपपादयति। सर्वपुंशब्देति। पुंलिङ्गेन सर्वेण शब्देनाभिधेयं वस्तु प्राण इत्यर्थः। तत्र श्रुत्यन्तरं प्रमाणयति। केनेति। आचार्यस्य शिष्यं प्रत्येतद्वाक्यं पौंस्यानि पुंसो वाचकानि। तथापि कस्य सामशब्दवाच्यत्वमित्याशङ्क्य फलितमाह। वागिति। वागुपसर्जनः प्राणः सामशब्दाभिधेय एकवचननिर्देशादित्यर्थः। ननु गीतिषु सामाख्येति न्यायाद्विशि-

यद्वेव समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्व्वेण

---

स्वरादिसमुदायमात्रं गीतिः सामशब्देनाभिधीयतेऽतो न प्राणवाग्व्यतिरेकेण साम नामास्ति किञ्चित्स्वरवर्णादेश्च प्राणनिर्वर्त्त्यत्वात्प्राणतन्त्रत्वाच्च। एष उ एव प्राणः साम यस्मात्साम सामेति वाक् प्राणात्मकं सा चामश्चेति तत्तस्मात्साम्नो गीतिरूपस्य स्वरादिसमुदायस्य सामत्वम्। तत्प्रगीतं भुवि यत उ एव समस्तुल्यः सर्व्वेण वक्ष्यमाणेन प्रकारेण तस्माद्वा सामेत्यनेन सम्बन्धः॥

वाशब्दः समशब्दलाभनिमित्तप्रकारान्तरनिर्द्देशसामर्थ्यलभ्यः। केन पुनः प्रकारेण प्राणस्य तुल्यत्वमित्युच्यते।

---

या काचिद्गीतिः सामेत्युच्यते। तत्कुतो वागुपसर्ज्जनस्य प्राणस्य सामत्वमत आह। तर्हीति। प्राणस्य सामत्वे सतीति यावत्। प्रगीते मन्त्रवाक्ये सामशब्दस्य रूढेरिष्टत्वादस्ति प्राणादिव्यतिरेकेण सामेत्याशङ्क्याह। स्वरेति। आदिपदेन पदवाक्यादिग्रहः। वागुपसर्ज्जने प्राणे मुख्यः सामशब्दस्तत्सम्बन्धादितरत्र गौणो मञ्चादिशब्दवदित्यर्थः। उक्तेऽर्थे तत्साम्नः सामत्वमिति वाक्यं योजयति। यस्मादिति। इदं सामेदं सामेति यद्व्यवह्रियते तद्वाक्प्राणात्मकमेवोच्यते सा चामश्चेति व्युत्पत्तेर्व्वक्तादेवं तस्मात्प्रसिद्धस्य साम्नो यत्सामत्वं तन्मुख्यसामनिर्व्वर्त्त्यत्वाद्गौणमेव सदध्येतृव्यवहारे प्रसिद्धमिति योजना। प्रकारान्तरेण प्राणस्य सामत्वमुपासनार्थमुपन्यस्यति। यदित्यादिना। प्रकारान्तरावद्योती वाशब्दोऽत्र न श्रूयत इत्याशङ्क्याह। वाशब्द इति। निमित्तान्तरमेव प्रश्नपूर्व्वकं प्रकटयति। केनेत्यादिना। ननु प्राणस्य

तस्माद्देव सामाश्नुते साम्नः सायुज्य ७ स लोकतां जयति य एवमेतत्साम वेद ॥ २२ ॥

---

समः प्लुषिणा पुत्तिकाशरीरेण समो मशकेन मशकशरीरेण समो नागेन हस्तिशरीरेण समः । एभिस्त्रिभिर्लोकैस्त्रैलोक्यशरीरेण प्राजापत्येन समोऽनेन जगद्रूपेण हैरण्यगर्भेण पुत्तिकादिशरीरेषु गोत्वादिवत्कात्स्न्र्येन परिसमाप्त इति समत्वं प्राणस्य । न पुनः शरीरमात्रपरिमाणेनैवामूर्त्तत्वात्सर्वगतत्वाच्च न च घटप्रासादादिप्रदीपवत्सङ्कोचविकाशितया शरीरेषु तावन्मात्रं समत्वम् । त एते सर्व एव समाः । सर्वेऽनन्ता इति श्रुतेः । सर्वगतस्य तु शरीरेषु शरीरपरिमाणवृत्तिलाभो न विरुध्यते । एवं समत्वात्सामाख्यं प्राणं वेद यः श्रुतिप्रसारितमहत्वं तस्यैतत्फलमश्नुते व्याप्नोति साम्नः प्राणस्य सायुज्यं सयुग्भावं समान देहेन्द्रि-

---

तत्तच्छरीरपरिमाणत्वे परिच्छिन्नत्वादानन्त्यानुपपत्तिस्तत्कथमस्य विरुद्धेषु शरीरेषु समत्वमित्याशङ्क्याह । पुत्तिकादीति । समशब्दस्य यथा श्रुतार्थत्वं क्लिन्नस्यादित्याशङ्क्याह । न पुनरिति । आधिदैविकेन रूपेणामूर्त्तत्वं सर्वगतत्वञ्च द्रष्टव्यं । ननु प्रदीपो घटे सङ्कुचति प्रासादे च विकसति तथा प्राणोऽपि मशकादिशरीरेषु सङ्कोचमिभादिदेहेषु विकासञ्चापद्यतामिति । समत्वासिद्धिरित्याशङ्क्याह । न चेति । प्राणस्य सर्वगतत्वे सनत्वश्रुतिविरोधमाशङ्क्याह । सर्वगतस्येति । खण्डादिषु गोत्ववच्छरीरेषु सर्वत्र स्थितस्य प्राणस्य तत्तच्छरीरपरिमाणाया वृत्तेर्लाभः सम्भवति । सर्वगतस्यैव नभसस्तत्र तत्र कूपकुम्भाद्यवच्छेदोपलम्भादित्यर्थः । फलश्रुतिमवतार्य व्याकरोति । एवमिति । फलविकल्पे हेतुमाह । भावनेति । वेदनं व्याकरोति ।

एष उ वा उद्गीथः प्राणो वा उत्प्राणेन हीदꣳ सर्वमुत्तब्धं वागेव गीथोच्चगीथा चेति स उद्गीथः ॥ २३ ॥

---

याभिमानत्वं सालोक्यं समानलोकतां वा भावनाविशेषतो य एवमेतद्यथोक्तं साम प्राणं वेद आप्राणात्माभिमानाभिव्यक्तेरुपास्त इत्यर्थः ॥ २२ ॥

एष उ वा उद्गीथः। उद्गीथो नाम सामावयवो भक्तिविशेषो नोद्गानम्। सामाधिकारात्। कथमुद्गीथः प्राणः। प्राणो वा उत्प्राणेन हि यस्मादिदं सर्वं जगदुत्तब्धमूर्ध्वं स्तब्धं उत्तम्भितं विधृतमित्यर्थः। उत्तब्धार्थावद्योतकोऽयमुच्छब्दः प्राणगुणाभिधायकः। तस्मादुत्प्राणो वागेव गीथा शब्दविशेषत्वादुद्गीथभक्तेः। गायतेः शब्दार्थत्वात्स

---

आप्राणेति। इदञ्च फलं मध्यप्रदीपन्यायेनोभयतः सम्बद्धमवधेयम् ॥ २२ ॥

प्रस्तावादिशब्दवदुद्गीथशब्दस्यापि भक्तिविशेषे रूढत्वादुद्गीथेनात्मयामेत्यत्र चौद्गात्रे कर्मणि प्रयुक्तत्वात्कथमुद्गीथः प्राण इत्याशङ्क्याह। उद्गीथो नामेति। नञ्प्रदस्योभयतः सम्बन्धः सामशब्दितस्य प्राणस्य प्रकृतत्वादिति हेतुमाह। सामाधिकारादिति। न तावदुद्गीथशब्दस्य प्राणे रूढिस्तस्य तस्मिन्नुद्गीथप्रयोगादर्शनान्नापि योगोऽवयववृत्तेरदृष्टेरिति शङ्कते। कथमिति। योगवृत्तिमुपेत्य परिहरति। प्राण इति। उच्छब्दो नाशार्थस्य वाचको निपातत्वादित्याशङ्क्याह। उत्तब्धेति। तथापि कथं प्राणो वा उदित्युक्तं तत्राह। प्राणेति। वायुर्वै गौतमः तत्सूत्रमि-

तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाचायं त्यस्य राजा मूर्द्धानं विपातयताद्यदितो-

वागेव। न ह्युद्गीथभक्तिः शब्दव्यतिरेकेण किञ्चिद्रूपमुत्प्रेक्ष्यते तस्माद्युक्तमवधारणम्। वागेव गीथेत्युक्तप्राणो गीथा च प्राणतन्त्रावागित्युभयमेकेन शब्देनाभिधीयते स उद्गीथः॥२३॥

उक्तार्थदार्ढ्यायाख्यायिकारभ्यते। तद्धापि तत्रैतस्मिन्नुक्तेऽर्थे ह अपि आख्यायिकापि श्रूयते ह स्म। ब्रह्मदत्तोब्रह्मदत्तो नामतः। चिकितानस्यापत्यं चैकितानः तदपत्यं युवा चैकितानेयो राजानं यज्ञे सोमं भक्षयन्नुवाच किमयं चमसस्थो मया भक्ष्यमाणो राजा त्यस्य तस्य ममानृतवादिनो मूर्द्धानं शिरो विपातयाद्विस्पष्टं पातयतु। तोरयन्तातङादेश आशिषि लोट्। विपातयतादिति। यद्यहमनृतवादी स्यामित्यर्थः। कथम्पुनरनृतवादित्वप्राप्तिरित्युच्यते। यद्यदीतोऽस्मात् प्रकृतात् प्राणाद्वाक्संयुक्तादयास्यो

त्यादिश्रुतेरित्यर्थः। उद्गीथभक्तेः शब्दविशेषत्वेऽपि गीथावागिति कथमुच्यते तत्राह। गायतेरिति। अथावधारणं साधयति। नहीति। तथापि कथं प्राणस्योद्गीथत्वमित्याशङ्क्य वागुपसर्जनस्य तस्य तथात्वं कथयति। उक्तेति। २३।

तद्धापीत्यादिवाक्यस्य प्रकृतानुपयोगमाशङ्क्याह। उक्तार्थेति। उद्गीथदेवताप्राणो न वागादिरित्युक्तोऽर्थः। जीवति तु वंश्ये युवा (पां ४। १। १६३) इति स्मरणात्पित्रादौ वंश्ये जीवति पौत्रप्रभृतेर्यदपत्यन्तद्युवसञ्ज्ञकमिति द्रष्टव्यम्। क्रियापदनिष्पत्तिप्रकारं सूचयति। तोरिति। तुप्रत्ययस्यायमाशिषि विषये तातङादेशः। तु ह्योस्तातङाशिष्यन्यतरस्यां (पां ७। १। ३५) इति स्मरणादित्यर्थः। मूर्द्धपात-

यास्य आङ्गिरसोऽन्येनोद्गायदिति वाचा च ह्येव स प्राणेन चोद्गायदिति ॥ २४ ॥

---

मुख्यप्राणाभिधायकेनायास्याङ्गिरसशब्देनाभिधीयते । विश्वसृजां पूर्वर्षीणां सत्रे उद्गाता सोऽन्येन देवतान्तरेण वाक्प्राणव्यतिरिक्तेनोदगायदुद्गानं कृतवान् । ततोऽहमनृतवादी स्याम् । तस्य मम देवताविपरीतप्रतिपत्तुर्मूर्द्धानं विपातयत्वित्येवं शपथञ्चकारेति विज्ञाने प्रत्ययदार्ढ्यकर्त्तव्यतां दर्शयति । तमिमं आख्यायिकानिर्द्धारितमर्थं स्वेन वचसोपसंहरति श्रुतिः । वाचा च प्राणप्रधानया प्राणेन च स्वस्यात्मभूतेन सोऽयास्य आङ्गिरस उद्गाता उदगायदित्येषोऽर्थो निर्धारितः शपथेन ॥ २४ ॥

---

प्रापकं दर्शयति । यदीति । अनृतवादित्वस्य प्रापकाभावादप्राप्तिरिति शङ्कते । कथम्पुनरिति । उद्गानस्य वृद्ध्यादिसन्निधानात्तद्देवताप्राजापत्यादिलक्षणादिलक्षिन्देवता किंवा वर्णस्वरादिसन्निधानात्तद्देवतैव तत्र देवतेति विप्रतिपत्तेरनृतवादित्वे शङ्किते ब्रह्मदत्तः शपथेन निर्णयञ्चकारेत्याह । उच्यत इति । प्राणाद्वाक्संयुक्तादन्येनायास्यो यद्युदगायदिति सम्बन्धः । नन्वयास्याङ्गिरसशब्दवाच्यो मुख्यः प्राणो देवता तत्रोद्गाता भवितुमुत्सहते तत्राह । मुख्येति । उक्तार्थदार्ढ्यायेत्युक्तमुपसंहरति । इति विज्ञान इति । उक्तरीत्या शपथक्रियया प्राण एवोद्गीथदेवतेत्यस्मिन्विज्ञाने प्रत्ययो विश्वासस्तस्य यद्दार्ढ्यन्तस्य कर्त्तव्यतामाख्यायिकया दर्शयति श्रुतिरिति यावत् । आख्यायिकार्थस्यैव वाचेत्यादिनोक्तेः पौनरुक्त्यमित्याशङ्क्याह । तमिति । शपथस्य स्वातन्त्र्येणाप्रामाण्येऽपि श्रुतिमूलतया प्रामाण्यं सिध्यतीति भावः ॥ २४ ॥

तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वं तस्य वै स्वर एव स्वं तस्मादार्त्विज्यं करिष्यन्वाचि स्वरमिच्छेत तया वाचा स्वरसम्पन्नयार्त्विज्यं कुर्य्यात्तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्त एव।

तस्य हैतस्य। तस्येति प्रकृतम्प्राणमभिसम्बध्नाति। ह एतस्येति मुखं व्यपदिशत्यभिनयेन। साम्नः सामशब्दवाच्यस्य प्राणस्य यः स्वम्धनं वेद तस्य ह किं स्यात्। भवति हास्य स्वम्। फलेन प्रलोभ्याभिमुखीकृत्य शुश्रूषवे आह। तस्य वै साम्नः स्वर एव स्वम्। स्वर इति कण्ठगतं माधुर्य्यन्तदेवास्य स्वं विभूषणम्। तेन हि भूपितमृद्धिमल्लभ्यते उद्गानम्। यस्मादेवं तस्मादार्त्विज्यं ऋत्विक्कर्म्मोद्गानं करिष्यन्वाचि विषये वाचि वागाश्रितं स्वरमिच्छेत।। साम्नो धनवत्तां स्वरेण चिकीर्षुरुद्गाता। इदन्तु प्रासङ्गिकं विधीयते साम्नः सौस्वर्य्येण स्वरवत्त्वप्रत्यये कर्त्तव्ये इच्छामात्रेण सौस्वर्य्यं न भवतीति दन्तधावनतैलपानादिसामर्थ्यात्कर्त्त-

उद्गीथदेवता प्राण एवेति निर्धार्य्य स्वरसुवर्णप्रतिष्ठागुणविधानार्थमुत्तरकण्डिकात्रयमवतारयति। तस्येत्यादिना। किमित्यादौ फलमभिलष्यते तत्राह। फलेनेति। सौस्वर्य्यं साम्नो भूषणमित्यत्रानुभवमनुकूलयति। तेन हीति। कथन्तर्हि कण्ठगतं माधुर्य्यं सम्पादनीयमित्याशङ्काह। यस्मादिति। प्राणोऽहं ममैव गीतिभावमापन्नस्य सौस्वर्य्यं धनमिति प्रकृते प्राणविज्ञाने गुणनिधिर्विवक्षितश्चेत्किमित्युद्गातुरन्यकर्त्तव्यमुपदिश्यत इत्याशङ्क्य दृष्टफलतयेत्याह। इदन्त्विति। अथेच्छायां कर्त्तव्यत्वेन विहितायां तावन्मात्रे सिद्धेऽपि कथं सौस्वर्य्यं सिध्येन्नहि स्वर्गकामनामात्रेण स्वर्गः सिध्यत्यत आह। साम्न इति। तस्य सुस्वर-

अथो यस्य स्वम्भवति भवति हास्य स्वं य एवमेतत्साम्नः स्वं वेद ॥ २५ ॥

तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य

---

व्यमित्यर्थः । तयैवं संस्कृतया वाचा स्वरसम्पन्नयार्त्विज्यं कुर्य्यात् । तस्माद्यस्मात्साम्नः स्वभूतः स्वरस्तेन स्वेन भूषितं साम । अतो यज्ञे स्वरवन्तमुद्गातारं दिदृक्षन्त एव द्रष्टुमिच्छन्त एव धनिनमिव लौकिकाः । प्रसिद्धं हि लोकेऽथोऽपि यस्य स्वं धनम्भवति तं धनिनं दिदृक्षन्त इति । सिद्धस्य गुणविज्ञानफलसम्बन्धस्योपसंहारः क्रियते । भवति हास्य स्वं य एवमेतत्साम्नः स्वं वेदेति । २५ ॥

अथान्यो गुणः सुवर्णवत्तालक्षणो विधीयते । असावपि सौस्वर्य्यमेव । एतावान्विशेषः । पूर्वं कण्ठगतमाधुर्यजमिदन्तु लाक्षणिकं सुवर्णशब्दवाच्यं तस्य हैतस्य साम्नो यः सुवर्णं

---

त्वेन तच्छब्दितस्य प्राणस्योपासकात्मकस्य स्वरवत्त्वप्राप्तये कार्य्यं इति विहितेच्छामात्रेण साम्नः सौस्वर्यं न भवतीत्यस्मात्सामर्थ्याद्दन्तधावनादिकर्त्तव्यमित्येतदत्र विधित्सितमिति योजना । सौस्वर्यस्य साम्नभूषणत्वे गमकमाह । तस्मादिति । दृष्टान्तमनन्तरवाक्यावष्टम्भेन स्पष्टयति । प्रसिद्धं हीति । भवति हास्य स्वमिति प्रागेवोक्तत्वादनर्थिका पुनरुक्तिरित्याशङ्क्याह । सिद्धस्येति ॥ २५ ॥

साम्नो गुणान्तरमवतारयति । अथेति । तर्हि पुनरुक्तिः स्यात्तत्राह । एतावानिति । लाक्षणिकं कण्ठोऽयं वर्णो दन्त्योऽयमिति लक्षणज्ञानपूर्वकं शुद्ध वर्णोच्चारणं समैव सामशब्दितप्राणभूतस्य धनमिति यावत् । लाक्षणिक-

सुवर्णं तस्य वै स्वर एव सुवर्णं भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेद ॥ २६ ॥

तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति तस्य वै वागेव प्रतिष्ठा वाचि हि

---

वेद भवति हास्य सुवर्णम्। सुवर्णशब्दसामान्यात् स्वरसुवर्णयोर्लौकिकमेव सुवर्णं गुणविज्ञानफलम्भवतीत्यर्थः। तस्य वै स्वर एव सुवर्णम्। भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेदेति पूर्ववत्सर्वम् ॥ २६ ॥

तथा प्रतिष्ठागुणं विधित्सन्नाह। तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद। प्रतितिष्ठत्यस्यामिति प्रतिष्ठा वाक् तां प्रतिष्ठां साम्नो गुणं यो वेद स प्रतिष्ठति ह। तं यथा यथोपासत इति श्रुतेः। तद्गुणत्वं युक्तम्। पूर्ववत् फलेन प्रतिलोभिताय का प्रतिष्ठेति शुश्रूषवे आह। तस्य वै साम्नो वागेव। वागिति जिह्वामूलीयादीनां स्थानानामाख्या। सैव प्रतिष्ठा।

---

सौस्वर्यगुणवत्प्राणविज्ञानवतो यथोक्तफललाभे हेतुमाह। सुवर्णशब्देति। वाक्यार्थमाह। लौकिकमेवेति। फलेन प्रलोभ्याभिमुखीकृत्य किं तत्सुवर्णमिति शुश्रूषवे ब्रूते। तस्येति। गुणविज्ञानफलमुपसंहरति। भवतीति। साम्न-स्तच्छब्दवाच्यस्य प्राणस्य स्वरूपभूतस्येति यावत् ॥ २६ ॥

उपास्यस्य प्रतिष्ठागुणत्वेऽपि कथमुपासकस्य तद्गुणत्वन्तत्राह। तं यथेति। आदिपदादुरःशिरःकण्ठदन्तौष्ठनासिकातालूनि गृह्यन्ते। अष्टौ स्थानानि वर्णानामुरः कण्ठं शिरस्तथा। जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ

खल्वेष एतत्प्राणः प्रतिष्ठितो गीयतेऽन्न इत्यु हैक आहुः ॥ २७ ॥

अथातः पवमानानामेवाभ्यारोहः स वै खलु

---

तदाह वाचि हि जिह्वामूलीयादिषु हि यस्मात्प्रतिष्ठितः सन्नेष प्राण एतद्गानं गीयते गीतिभावमापद्यते। तस्मात्साम्नः प्रतिष्ठा वागन्ने प्रतिष्ठितो गीयत इत्यु ह एकेऽन्ये आहुः इह प्रतितिष्ठतीत्युक्तं अनिन्दितत्वादेकीयपक्षस्य विकल्पेन प्रतिष्ठागुणविज्ञानं कुर्य्यात् वाग्वा प्रतिष्ठान्नं वेति ॥ २७ ॥

एवं प्राणविज्ञानवतो जपकर्म्म विधित्स्यते। यद्विज्ञानवतो जपकर्म्मण्यधिकारस्तद्विज्ञानमुक्तम्। अथानन्तरं यस्माच्चैव विदुषा प्रयुज्यमानं देवभावायाभ्यारोहफलं जपकर्म्म अतस्तस्मात्तद्विधीयते। इह तस्य चोद्गीथसम्बन्धात्सर्वत्र

---

ष्ठ तालु च। किमित्यष्टौ स्थानानि वागित्युच्यन्ते तत्राह। वाचि हीति। पक्षान्तरमाह। अन्न इति। अन्नशब्देन तत्परिणामो देहो गृह्यते। एकीयपक्षे युक्तिमाह। इहेति। कथन्तर्हि प्रतिष्ठागुणस्य प्राणस्य विज्ञानं कर्त्तव्यमत आह। अनिन्द्यत्वादिति ॥ २७ ॥

अथातः पवमानानामित्यादिवाक्यमवतारयति। एवमिति। तत्राथ-शब्दं व्याचष्टे यद्विज्ञानवत इति। अतःशब्दार्थमाह। यस्माच्चेति। इहेति प्राणविदुक्तिः। कदा तर्हि जपकर्म कर्त्तव्यं तत्राह। तस्येति। उद्गीथेनात्ययाम त्वं न उद्गायेति च प्रकरणादुद्गीथेन सम्बन्धाज्जपस्य सर्वत्रोद्गानकाले प्राप्तौ पवमानानामेवेति वचनात्कालनियमसिद्धिरित्यर्थः। स वै खल्वित्यादिवाक्यतात्पर्यमाह। पवमानेष्विति। ननु कर्त्तव्यत्वेनाभ्यारोह

## प्रस्तोता साम प्रस्तौति स यत्र प्रस्तुयात्तदेतानि जपेत्

प्राप्तौ पवमानानामिति वचनात्। पवमानेषु त्रिष्वपि कर्त्तव्यतायां प्राप्तायां पुनः कालसङ्कोचङ्करोति। स वै खलु प्रस्तोता साम प्रस्तौति। स प्रस्तोता यत्र यस्मिन् काले साम प्रस्तुयात् प्रारभेत तस्मिन् काल एतानि जपेत्। अस्य च जपकर्म्मण आख्याऽभ्यारोहः आभिमुख्येनारोहत्यनेन जपकर्म्मणा एवं विद्देवभावमात्मानमित्यभ्यारोहः। एतानीति बहुवचनात्त्रीणि यजूंषि। द्वितीयानिर्द्देशाद् ब्राह्मणोत्पन्नत्वाच्च यथा पठित एव स्वरः प्रयोक्तव्यो न मान्त्रः। याजमानं जपकर्म्म॥

---

श्रूयते। जपकर्म्म विधित्सितमिति चोच्यते। किं केन सङ्गतमित्याशङ्क्याह। अस्य चेति। अभ्यारोहशब्दस्य न तत्र रूढिर्दृष्टप्रयोगाभावादित्याशङ्क्याह। आभिमुख्येनेति। यजुर्मन्त्राक्षराणामनियतपादाक्षरत्वादसतो मासद्गमयेत्यारभ्यैको वा द्वौ वा मन्त्रावित्याशङ्क्याह। एतानीति। यद्यमी याजुषा मन्त्रास्तर्हि मान्त्रेण स्वरेण वैभाषिकमन्योक्तेन भाव्यमित्याशङ्क्याह। द्वितीयेति। यत्र स्वरो विवक्षितस्तत्र तृतीयानिर्द्देशो दृश्यते। उच्चैर्ऋचा क्रियते उच्चैः साम्ना उपांशु यजुषेति। प्रकृते तु द्वितीयानिर्द्देशाज्जपकर्म्ममात्रं प्रतीयते मान्त्रस्तु स्वरो न प्रतिभातीत्यर्थः। केन तर्हि स्वरेण प्रयोगो मन्त्राणामिति चेत्तत्राह। ब्राह्मणेति। भवतु यातपथेन स्वरेण मन्त्राणां प्रयोगस्तथापि किमार्त्विज्यं किंवा याजमानजपकर्म्मेति विवक्षायामाह। याजमानमिति।

असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्माऽमृतं गमयेति स यदाहासतो मा सद्गमयेति मृत्युर्वा असत्सदमृतं मृत्योर्माऽमृतं गमयामृतं मा कुर्वित्येवैतदाह तमसो मा ज्योतिर्ग-

---

एतानि तानि यजूंषि। असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्माऽमृतं गमयेति मन्त्राणामर्थस्तिरोहितो भवतीति स्वयमेव व्याचष्टे ब्राह्मणं मन्त्रार्थम्। स मन्त्रो यदाह यदुक्तवान् कोऽसावर्थ इत्युच्यते। असतो मा सद्गमयेति। मृत्युर्वा असत्स्वाभाविककर्म्मविज्ञाने मृत्युरित्युच्यते। असदत्यन्ताधोभावहेतुत्वात्। सदमृतं सच्छास्त्रीयकर्म्मविज्ञानेऽमरणहेतुत्वादमृतम्। तस्मादसतोऽसत्कर्म्मणोऽज्ञानाच्च मा मां सच्छास्त्रीयकर्म्मविज्ञाने गमय देवभावसाधनात्मभावमापादयेत्यर्थः। तत्र वाक्यार्थमाहामृतं मा कुर्वित्येवैतदाहेति। तथा तमसो मा ज्योतिर्गमयेति। मृत्युर्वै तमः सर्वं ह्यज्ञानमावरणात्मकत्वात्तमस्तदेव च मरणहेतुत्वान्मृत्युः। ज्योतिरमृतं पूर्व्वोक्तविपरीतदैवस्वरूपम्। प्रकाशात्मकत्वाज्ज्ञानं ज्योतिस्तदेवामृतमविनाशात्मकत्वात्तमसो

---

व्याचिख्यासितयजुषां स्वरूपं दर्शयति। एतानीति। मन्त्रार्थशब्देन पदार्थो वाक्यार्थस्तत्फलञ्चेति त्रयमुच्यते। लौकिकन्तमो व्यावर्त्तयति। सर्वं हीति। पूर्व्वोक्तपदेन व्याख्यातन्तमो गृह्यते। वैपरीत्ये हेतुमाह। प्रकाशात्मकत्वादिति। ज्ञानन्तेन साध्यमिति यावत्। पदार्थोक्तिसमाप्ताविति शब्दः। उत्तरवाक्याभ्यां वाक्यार्थस्तत्फलञ्चेति द्वयं

मयेति मृत्युर्वै तमो ज्योतिरमृतं मृत्योर्मा मृत गमयामृतं मा कुर्वित्येवैतदाह मृत्योर्मामृतं गमयेति नात्र तिरोहितमिवास्ति। अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत्तस्मादुतेषु वरं वृणीत यं कामं कामयेत तꣳ स एष

---

मा ज्योतिर्गमयेति। पूर्ववत् मृत्योर्मामृतं गमयेत्यादि। अमृतं मा कुर्वित्येवैतदाह। दैवं प्राजापत्यं फलभावमापादयेत्यर्थः। पूर्व्वो मन्त्रोऽसाधनस्वभावात्साधनभावमापादयेति। द्वितीयस्तु साधनभावादप्यज्ञानरूपात्साध्यभावमापादयेति। मृत्योर्मामृतङ्गमयेति पूर्वयोरेव मन्त्रयोः समुच्चितोऽर्थस्तृतीयेन मन्त्रेणोच्यत इति प्रसिद्धार्थतैव। नात्र तृतीये मन्त्रे तिरोहितमन्तर्हितमिवार्थरूपं पूर्वयोरिव मन्त्रयोरस्ति यथा श्रुत एवार्थः॥

याजमानमुद्गानं कृत्वा पवमानेषु त्रिष्वथानन्तरं यानीतराणि शिष्टानि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत्। प्राणविदुद्गाता प्राणभूतः प्राणवदेव यस्मात्स एष उद्गाता

---

क्रमेणोच्यत इत्याह। पूर्व्ववदिति। फलवाक्यमादाय पूर्व्वस्माद्विशेषं दर्शयति। अमृतमिति। प्रथमद्वितीयमन्त्रयोरर्थभेदाप्रतीतेः पुनरुक्तिमाशङ्क्यावान्तरभेदमाह। पूर्व्वमन्त्र इति। तथापि तृतीये मन्त्रे पुनरुक्तिस्तदवस्थेत्याशङ्क्याह। पूर्व्वयोरिति।

वृत्तमनूद्योत्तरवाक्यमवतार्य्य व्याचष्टे। याजमानमिति। यथा प्राथमिकेषु पवमानेषु साधारण्यागानङ्कृत्वा शिष्टेषु स्तोत्रेषु

एवंविदुद्गाताऽऽत्मने वा यजमानाय वा यं कामं कामयते तमागायति तद्धैतल्लोकजिदेव न हैवालोक्यता-

एवं प्राणं यथोक्तं वेत्त्यतः प्राणवदेव तं कामं साधयितुं समर्थस्तस्माद्यजमानस्तेषु स्तोत्रेषु प्रयुज्यमानेषु वरं वृणीत यं कामं कामयेत तं कामं वरं वृणीत प्रार्थयेत। यस्मात्स एष एवंविदुद्गातेति तस्माच्छब्दात्प्रागेव सम्बध्यते। आत्मने वा यजमानाय वा यं कामं कामयत इच्छत्युद्गाता तमागानेन साधयत्येवं तावज्ज्ञानकर्म्मभ्यां प्राणात्मापत्तिरित्युक्तं। तत्र नास्त्याशङ्कासम्भवः। अतः कर्म्मापाये प्राणापत्तिर्भवति वा न वेत्याशङ्क्यते तदाशङ्कानिवृत्त्यर्थमाह। तद्धैतल्लोकजिदेवेति। तत् ह तदेतत्प्राणदर्शनं कर्म्म वियुक्तं केवलमपि लोकजिदेवेति लोकसाधनमेव। न ह एवालोक्यतायै अलोकार्हत्वायाशा शंसनं प्रार्थनं नैवास्ति ह। न हि

स्वार्थमागानमकरोत्तथेत्याह। प्राणविदिति। तद्विदो तद्वदागाने योग्यतामाह। प्राणभूत इति॥ हेतुवाक्यमादौ योजयति। यस्मादिति॥ प्रतिज्ञावाक्यं व्याचष्टे। तस्मादिति॥ किमिति व्यत्यासेन वाक्यद्वयव्याख्यानमित्याशङ्क्यार्थाच्चेति न्यायेन पाठक्रममनादृत्य परिहरति। यस्मादित्यादिना॥ स एष एवंविदुद्गाताऽऽत्मने यजमानाय वा यत्कामं कामयते तमागानेन साधयति। यस्मादिति हेतुपदव्यस्तस्मादिति प्रतिज्ञापदात्प्रागेव संबध्यत इति योजना॥ वृत्तं कीर्त्तयति। एवं तावदिति॥ तत्र कर्म्मसमुच्चिते ज्ञाने देवताप्तौ शङ्कासम्भवो नास्ति। मिथः सहकृतयोर्ज्ञानकर्म्मणोस्तदाप्तिहेतुत्वादित्याह। तत्रेति॥ समनन्तरं वाक्यमवतारयति। अत इति॥ समुच्चयात्फलाप्तेर्द्दत्यादिति यावत्॥ न हेत्यादिना पदानि छित्त्वाव्या-

या आशास्ति य एवमेतत्साम वेद ॥ २८ ॥ इति तृतीयं ब्राह्मणम् ॥

---

प्राणात्मन्युत्पन्नात्माभिमानस्य तत्राशंसा सम्भवति। न हि ग्रामस्थः कदा ग्रामं प्राप्नुयामित्यरण्यस्थ इवाशास्ते। असन्निकृष्टविषये ह्यनात्मन्याशंसनं न तत्स्वात्मनि सम्भवति। तस्मान्नाशास्ति कदाचित्प्राणात्मभावं न प्रतिपद्येयमिति। कस्यैतद्य एवमेतत्साम प्राणं यथोक्तं निर्धारितमहिमानं वेदाहमस्मि प्राण इन्द्रियविषयासङ्गैरासुरैः पाप्मभिरधर्षणीयो विशुद्धो वागादिपञ्चकस्य मदाश्रयत्वादग्न्याद्यात्मस्वरूपं स्वाभाविकविज्ञानोत्थेन्द्रियविषयासङ्गजनितासुरपाप्मदोषवियुक्तं सर्वभूतेषु च मदाश्रयान्ना-

---

मादाय व्याकरोति। अलोकार्हत्वायेति। तदेव स्फुटयति। न हीति॥ तत्र दृष्टान्तमाह। न हीति॥ दृश्यमानमाशंसनं तर्हि कस्मिन्विषये स्यादित्याशङ्क्याह। असन्निकृष्टेति॥ प्राणात्मना व्यवस्थितस्य विदुषस्तदात्मभावं कदाचिदहं न प्रतिपद्येयमित्याशंसनं नास्तीति निगमयति। तस्मादिति। कर्मसमुच्चितादुपासनात्केवलाच्च प्राणात्मत्वं फलमुक्तं तत्र समुच्चितादुद्गातुर्यजमानस्य वा फलं केवलाच्चोपासनात्तयोरन्यतरस्यान्यस्य वा कस्यचिदिति जिज्ञासमानः शङ्कते। कस्येति॥ ज्ञानकर्मणोरुभयत्र समभावादुभयोरपि वचनात्फलसिद्धिः। आश्रमान्तरविषयन्तु केवलज्ञानस्य लोकजयहेतुत्वमित्यभिप्रेत्याह। य एवमिति॥ एवंशब्दस्य प्रकृतपरामर्शित्वात्पूर्व्वोक्तं सर्व्वं वेद्यस्वरूपं सङ्क्षिपति। अहमस्मीत्यादिना॥ तस्य वागादिभ्यो विशेषं दर्शयति। इन्द्रियेति॥ किमिदानीं प्राणस्यैवोपास्यतया वागा-

आत्मैवेदमग्र आसीत् पुरुषविधः सोऽनुवीक्ष्य-
नान्यदात्मनोऽपश्यत् सोऽहमस्मीत्यग्रे व्याहरत्ततो-

---

र्थोपयोगबन्धनमात्मा चाहं सर्व्वभूतानामाङ्गिरसत्वादृग्य-जुःसामोद्गीथभूतायाश्च वाच आत्मा तद्व्यामेस्तन्निवर्त्तकत्वाच्च मम साम्नो गीतिभावमापद्यमानस्य बाह्यन्धनं भूषणं सौस्वर्य्यं ततोऽप्यन्तरतरं सौवर्ण्यं लाक्षणिकं सौस्वर्य्यं गीतिभाव-मापद्यमानस्य मम कण्ठादिस्थानानि प्रतिष्ठा। एवं गुणोऽहं पुत्तिकादिशरीरेषु कार्त्स्न्येन परिसमाप्तोऽमूर्त्तत्वात्सर्व्वगत-त्वाच्चेति। आ एवमभिमानाभिव्यक्तेर्वेदोपास्त इत्यर्थः। इति बृहदारण्यकभाष्ये तृतीयं ब्राह्मणं। ३॥

आत्मैवेदमग्र आसीद् ज्ञानकर्म्मभ्यां समुच्चिताभ्यां प्रजा-पतित्वप्राप्तिर्व्याख्याता। केवलप्राणदर्शनेन च तद्वैरतल्लोक-

---

दिपञ्चकद्वयपेक्षितमिति नेत्याह। वागादीति॥ तस्य प्राणान्वयत्वेऽपि कुतो देवतात्वमासङ्गपाप्मविद्धत्वादित्याशङ्क्याह। स्वाभाविकेति॥ स्वकृतोपकारं प्राणद्वारा वागादौ स्मारयति। सर्व्वेति॥ रूपात्मके जगति प्राणस्य स्वरूप-मनुसंधत्ते। आत्मा चेति॥ नामात्मके जगति प्राणस्यात्मत्वमुक्तं स्मारयति। ऋगिति॥ सति सामत्वे गीतिभावावस्थायां प्राणस्योक्तं बाह्यमाभ्यन्तरञ्च सौस्वर्य्यं सौवर्ण्यमिति गुणद्वयमनुवदति। ममेति। तस्यैव वैकल्पिकीं प्रति-ष्ठामुक्तामनुस्मारयति। गीतीति॥ तद्वैवेत्यादिनोक्तं परामृशति। एवं गुणोऽहमिति॥ इत्येवमभिमानाभिव्यक्तिपर्य्यन्तं यो ध्यायति तस्येदं फलमि-त्युपसंहरति। इतीति॥ इति तृतीयं ब्राह्मणम्॥०॥३॥

ब्राह्मणान्तरमवतार्य्य पूर्व्वेण सम्बन्धं वक्तुं वृत्तं कीर्त्तयति। आत्मैवे-त्यादिना। केवलप्राणदर्शनेन च प्रजापतित्वप्राप्तिर्व्याख्यातेति सम्बन्धः॥ इदानीमात्मेत्यादेस्तद्वेदमित्यतः प्राक्तनग्रन्थस्यापाततस्तात्पर्य्यमाह। प्रजा-

जिदवेत्यादिना प्रजापतेः फलभूतस्य सृष्टिस्थितिसंहारेषु जगतः स्वातन्त्र्यादिविभूत्युपवर्णनेन ज्ञानकर्म्मणोर्वैदिकयोः फलोत्कर्षो वर्णयितव्य इत्येवमर्थमारभ्यते । तेन च कर्म्मकाण्डविहितज्ञानकर्म्मस्तुतिः कृता भवेत् सामर्थ्याद्विवचितन्त्वेतत् । सर्व्वमप्येतज्ज्ञानकर्म्मफलं संसार एव भयारत्यादियुक्तत्वश्रवणात्कार्य्यकरणलक्षणत्वाच्च स्थूलव्यक्तानित्यविषयत्वाच्चेति ॥ ब्रह्मविद्यायाः केवलाया वक्ष्यमाणाया मोक्षहेतुत्वमित्युत्तरार्थञ्चेति । न हि संसारविषयात्साध्यसाधनादिभेदलक्षणादविरक्तस्यात्मैकत्वज्ञानविषयेऽधिकारोऽस्ति तस्येव पाने । तस्माज्ज्ञानकर्म्मफलोत्कर्षोपवर्णनमुत्तरा-

---

पतेरिति । आदिपदेन सर्व्वात्मत्वादि गृह्यते ॥ फलोत्कर्षोपवर्णनं कुत्रोपयुज्यते तत्राह । तेन चेति । कर्म्मकाण्डपदेन पूर्वग्रन्थोऽपि सङ्गृहीतः । फलातिशयो हेत्वतिशयापेक्षोऽन्यथाऽऽकस्मिकत्वापातादतो ज्ञानकर्म्मफलभूतस्तत्त्वविभूतिरुच्यमाना ज्ञानकर्म्मणोर्महत्त्वन्दर्शयतीत्याह । सामर्थ्यादिति ॥ आपातिकन्तात्पर्य्यमुक्त्वा परमतात्पर्य्यमाह । विवचितन्त्विति ॥ किञ्च । विमतं संसारान्तर्भूतं कार्य्यकरणात्मत्वादस्मदादिकार्य्यकरणवदित्याह । कार्य्येति ॥ प्राजापत्यपदस्य संसारान्तर्भूतत्वे हेत्वन्तरमाह । स्थूलेति ॥ स्थूलत्वं साधयति । व्यक्तेति ॥ अनित्यत्वादद्रश्यत्वाच्च प्रजापतित्वं संसारान्तर्गतमित्याह । अनित्येति । इतिशब्दो विवक्षितार्थसमाप्त्यर्थः ॥ किमित्येतद्विवचितमुपवर्ण्यते तत्राह । ब्रह्मविद्याया इति । तच्चेदं विवचितार्थवचनमेकाकिन्या विद्याया वक्ष्यमाणाया मुक्तिहेतुत्वमित्युत्तरार्थमिति द्रष्टव्यं ॥ यदा हि कर्म्मज्ञानफलं प्रजापतित्वं संसार इत्युच्यते तदा तात्पर्य्यन्तावत् सर्व्वस्मात्तस्माद्विरक्तस्य वक्ष्यमाणविद्यायामधिकारः सेत्स्यतीत्यर्थः अथ यस्य कस्यचिदर्थितामात्रेण तत्राधिकारसम्भवाद्वैराग्यं न मृग्यमित्याशङ्क्याह । न हीति । उभयत्रापि विषयशब्दः पूर्व्वेण समानाधिकरणः ॥ विवचितमर्थमुपसंहरति ।

र्थं। तथाच वक्ष्यति। तदेतत्प्रेयः पुत्रात्प्रेय इत्यादि आत्मैवात्मेति प्रजापतिः प्रथमोऽण्डजः शरीर्य्यभिधीयते। वैदिकज्ञानकर्म्मफलभूतः स एव किमिदं शरीरभेदजातं तेन प्रजापतिशरीरेणाविभक्तमात्मैवासीत् अग्रे प्राक् शरीरान्तरोत्पत्तेः। स च पुरुषविधः पुरुषप्रकारः शिरःपाण्यादिलक्षणो विराट् स एव प्रथमः सम्भूतः। अनुवीक्ष्यान्वालोचनं कृत्वा कोऽहं किं लक्षणो वास्मीति नान्यद्वस्त्वन्तरमात्मनः प्राणपिण्डात्मकात् कार्य्यकरणरूपान्नापश्यन्न ददर्श। केवलन्त्वात्मानमेव सर्व्वात्मनामपश्यत्।

---

तस्मादिति। वैराग्यमन्तरेण ज्ञानानधिकाराज्ज्ञानादिफलस्य प्रजापतित्वस्योत्कर्षवतः संसारत्ववचनं ततो विरक्तस्य वक्ष्यमाणविद्यायामधिकारार्हं। विरक्तस्य विद्याधिकारे मोक्षादपि वैराग्यं स्यादित्याशङ्क्याह। तथा चेति। ननु मोक्षार्थं विद्यायाम्प्रवर्त्तितव्यं मोक्षस्यापुरुषार्थत्वान्न प्रेक्षावता प्रार्थ्यत्वाह। तदेतदिति॥ आपातिकमनादातिकस्य तात्पर्य्यमुक्त्वा प्रतीकमादाय्याक्षराणि व्याकरोति। आत्मैवेति। तस्याश्वमेधाधिकारे प्रकृतत्वं सूचयति। अण्डज इति। पूर्व्वस्मिन्नपि ब्राह्मणे तस्य प्रस्तुतत्वमस्तीत्याह। वैदिकेति। स एवासीदिति सम्बन्धः। स्थित्यवस्थायामपि प्रजापतिरेव समष्टिदेहस्तत्तद्व्यष्ट्यात्मना तिष्ठतीति विशेषासिद्धिरित्याशङ्क्याह। तेनेति। आत्मशब्देन परस्यापि ग्रहसम्भवे किमिति विराडेवोपादीयत इत्याशङ्क्य वाक्यशेषादित्याह। स चेति। वक्ष्यमाणमन्वालोचनादि विराडात्मकर्त्तृकमित्याह। स एवेति। स्वरूपधर्म्मविषयौ द्वौ विमर्शौ नान्यदिति वाक्यमादायाक्षराणि व्याचष्टे वस्त्वन्तरमिति। दर्शनशक्त्यभावादेव वस्त्वन्तरमप्रजापतिर्न दृष्टवानित्याशङ्क्याह। केवलन्त्विति।

ऽहन्नामाभवत् तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाथान्यन्नाम प्रब्रूते यदस्य भवति स यत्पूर्व्वोऽस्मा-

---

तथा पूर्व्वजन्मश्रौतविज्ञानसंस्कृतः सोऽहं प्रजापतिः सर्व्वात्माहमस्मीत्यग्रे व्याहरद् व्याहृतवान्। ततस्तस्माद्यतः पूर्व्वज्ञानसंस्कारादात्मानमेवाहमित्यभ्यधादग्रे तस्मादहन्नामाऽभवत् तस्योपनिषदोऽहमिति श्रुतिप्रदर्शितमेव नाम वक्ष्यति।

तस्माद्यस्मात् कारणे प्रजापतावेवं वृत्तं तस्मात् कार्य्यभूतेषु प्राणिष्वेतर्ह्येतस्मिन्नपि काल आमन्त्रितः कस्त्वमित्युक्तः सन्नहमयमित्येवाग्र उक्त्वा कारणात्माभिधानेनात्मानमभिधायाग्रे पुनर्विशेषनामजिज्ञासवेऽथानन्तरं विशेषपिण्डाभिधानं देवदत्तो यज्ञदत्तो वेति प्रब्रूते कथयति

---

सोऽहमित्यादि व्याचष्टे। तथेति। यथा सर्व्वात्मा प्रजापतिरहमिति पूर्व्वस्मिन् जन्मनि श्रौतेन विज्ञानेन संस्कृतो विराडात्मा तथेदानीमपि फलावस्थः सोऽहं प्रजापतिरस्मीति प्रथमं व्याहृतवानिति योजना। व्याहरणफलमाह। तत इति। किमिति। प्रजापतेरहमिति नामोच्यते। साधारणं हीदं सर्व्वेषामित्याशङ्क्योपासनार्थमित्याह। तस्येति। आध्यात्मिकस्य चाक्षुषस्य पुरुषस्याहमिति रहस्यं नामेति यतो वक्ष्यत्यतः श्रुतिसिद्धमेवैतन्नामास्य ध्यानार्थमिहोक्तमित्यर्थः।

प्रजापतेरहन्नामत्वे लोकप्रसिद्धिं प्रमाणयितुमुत्तरं वाक्यमित्याह। तस्मादिति। उपासनार्थम्प्रजापतेरहन्नामोक्त्वा पुरुषनामनिर्व्वचनङ्करोति। स चेत्यादिना। पूर्व्वस्मिन् जन्मनि साधकावस्थायां कर्म्माद्यनुष्ठानैरहमहमिकया प्रजापतित्वं प्रेप्सूनां मध्ये पूर्व्वो यः सम्यक् कर्म्माद्यनुष्ठानैः सर्व्वं

## त्सर्व्वस्मात्सर्व्वान् पाप्मन औषत्तस्मात्पुरुष औषति ह वै स तं योऽस्मात्पूर्व्वो बुभूषति य एवं वेद ॥ १ ॥

यन्नामास्य विशेषपिण्डस्य मातापितृभ्यां कृतम्भवति तत् कथयति। स च प्रजापति रतिक्रान्तजन्मनि सम्यक् कर्म्मज्ञानभावनानुष्ठानैः साधकावस्थायां यद्यस्मात् कर्म्मज्ञानभावनानुष्ठानैः प्रजापतित्वं प्रतिपित्सूनां पूर्व्वः प्रथमः सन्नस्मात् प्रजापतित्वप्रतिपित्सुसमुदायात्सर्व्वस्मादादावौषददहत् किमासङ्गाज्ञानलक्षणान् सर्व्वान् पाप्मनः प्रजापतित्वप्रतिबन्धकारणभूतान्।

यस्मादेवन्तस्मात् पुरुषः पूर्व्वमौषदिति पुरुषो यथायम्प्रजापतिरोषित्वा प्रतिबन्धकान् पाप्मनः सर्व्वान् स पुरुषः प्रजापतिरभवत्। एवमन्योऽपि ज्ञानकर्म्मभावना-

---

प्रतिबन्धकं यस्माददहत्तस्मात् स प्रजापतिपुरुष इति योजना। उक्तमेव स्फुटयति। प्रथमः सन्निति। सर्व्वस्मादस्मात् प्रजापतित्वप्रतिपित्सुसमुदायात् प्रथमः सन्नौषदिति सम्बन्धः। व्याकाङ्क्षापूर्व्वकन्दाहन्दर्शयति। किमित्यादिना।

पूर्व्वम्प्रजापतित्वप्रतिबन्धकप्रध्वंसित्वे सिद्धमर्थमाह। यस्मादिति। पुरुषगुणोपासकस्य फलमाह। यथेति। अयम्प्रजापतिरिति भविष्यद्वृत्त्या साधकोक्तिः पुरुषः प्रजापतिरिति फलावस्थः स कथ्यते। कोऽसावोषतीत्यपेक्षायामाह। तन्दर्शयतीति। पुरुषगुणः प्रजापतिरहमस्मीति यो विद्या-

सोऽबिभेत्तस्मादेकाकी बिभेति सहायमीत्ताञ्च-क्रे यन्मदन्यन्नास्ति कस्मान्नुबिभेमीति तत एवास्य भ-

नुष्ठानवह्निना केवलं ज्ञानबलाद्दोषति भस्मीकरोति ह वै सः तंक यो ऽस्मादिदुषः पूर्वं प्रथमः प्रजापतित्वम्बुभूषति भवितुमिच्छति तमित्यर्थः। तन्दर्शयति य एवं वेदेति सामर्थ्याज्ज्ञानभावनाप्रकर्षवान्। नन्वनर्थाय प्राजापत्यप्रतिपित्सैवंविदा चेद्दह्यते। नैष दोषः। ज्ञानभावनोत्कर्षाभावात् प्रथमम्प्रजापतित्वप्रतिपत्त्यभावमात्रत्वाद्दाहस्य। उत्कृष्टसाधनः प्रथमम्प्रजापतित्वम्प्राप्नुवन् न्यूनसाधनो न प्राप्नोतीति स तन्दहतीत्युच्यते न पुनः प्रत्यक्षमुत्कृष्टसाधनेनेतरो दह्यते। यथा लोके आजिसृतां यः प्रथममाजिमुपसर्पति तेनेतरे दग्धा इवापहृतसामर्थ्या भवन्ति तद्वत्॥१॥

यदिदं तुष्टूषितं कर्म्मकाण्डविहितज्ञानकर्म्मफलं प्राजापत्यलक्षणं नैव तत्संसारविषयमत्यक्रामदितीममर्थम्प्रद-

त्वोऽन्यानोषतोत्यर्थः। विद्यासाम्ये कथमेषा व्यवस्थेत्याशङ्क्याह। सामर्थ्यादिति। हेतुसाम्ये दाहकत्वानुपपत्तेस्तत्प्रकर्षवान्दितरान्दहतीत्यर्थः। प्रसिद्धन्दाहमादाय चोदयति। नन्विति। तथा च तत्प्रेप्सायोगात्तदुपास्त्यसिद्धिरित्यर्थः। निर्वाचितन्दाहन्दर्शयन्नुत्तरमाह। नैष इति। तदेव स्फुटयति। उत्कृष्टेति। प्राप्नुवन् भवतीति शेषः। औपचारिकन्दाहन्दृष्टान्तेन साधयति। यथेति। आजिर्मर्य्यादा तां सरन्ति धावन्तीत्याजिसृतस्तेषामिति यावत्॥१॥

ज्ञानकर्म्मफलं चेत्सम्प्रदमुत्कृष्टत्वात्तद्धुक्तिस्तदन्तस्तुत्यभावात्तद्धेतु सम्यग्धीसिद्धये प्रवृत्तिरनर्थिकेत्याशङ्क्य सोऽबिभेदित्यस्य तात्पर्य्यमाह। यदिदमिति।

यं वीयाय कस्माद्ध्यभेष्यत् द्वितीयाद्वै भयम्भवति ॥ २ ॥

---

शयिष्यन्नाह सोऽविभेत्। स प्रजापतिर्योऽयम्प्रथमः शरीरी पुरुषविधो व्याख्यातः सोऽविभेद्भीतवान् अस्मदादिवदेवेत्याह यस्मादयम्पुरुषविधः शरीरकरणवान् आत्मनाशविपरीतदर्शनवत्त्वादविभेत्तस्मात्तत्सामान्यादद्यत्वेऽप्येकाकी बिभेति। किञ्चास्मदादिवदेव भयहेतुविपरीतदर्शनापनोदकारणं यथाभूतात्मदर्शनं सोऽयम्प्रजापतिरिक्षामीचक्रे कृतवान् स्म ह। कथमित्याह। यद्यस्मान्मत्तोऽन्यदात्मव्यतिरेकेण वस्त्वन्तरम्प्रतिद्वन्द्वीभूतं नास्ति तस्मिन्नात्मविनाशहेत्वभावे कस्मान्नु बिभेमीति। तत एव यथाभूतात्मदर्शनादस्य प्रजापतेर्भयं वीयाय विस्पष्टमपगत-

---

तुष्टूषितं स्तोतुमभिप्रेतमिति यावत्। आह विवक्षितार्थसिद्धार्थं हेतुमाय-भात्तमिति शेषः। ज्ञानकर्म्मफलं त्रैलोक्यात्मकत्वलक्षणमपि संसारान्तर्भूतमेव न कैवल्यमिति वक्तुमुक्तवाक्यमित्यर्थः। अहमेकाकी कोऽपि मां हनिष्यतीत्यात्मनाशविषयविपरीतज्ञानवत्त्वात् प्रजापतिर्भीतवान् इत्यत्र किम्प्रमाणमित्याशङ्क्य कार्य्यगतेन लिङ्गेन कारणे प्रजापतौ तदनुमेयमित्याह। यस्मादिति। तत्सामान्यादेकाकित्वाविशेषादिति यावत्। प्रजापतेः संसारान्तर्भूतत्वे हेत्वन्तरमाह। किञ्चेति। यथास्मदादिभीरज्ज्वाद्यादौ सर्व्वपुरुषादिभ्रमजनितभयनिवृत्तये विचारेण तत्त्वज्ञानं सम्पाद्यते तथा प्रजापतिरपि भयस्य तद्धेतोश्च विपरीतधियो ध्वस्तिहेतु तत्त्वज्ञानं विचार्य्य सम्पादितवानित्यर्थः। परमार्थदर्शनमेव प्रश्नपूर्व्वकं विशदयति। कथमित्यादिना। तस्मिन्नित्यत्र तस्मादित्यादौ पठितव्यं मच्छब्दोपलक्षितं प्रत्यक्चैत-

यत् तस्य प्रजापतेर्यद्भयन्तत् केवलाविद्यानिमित्तमेव परमार्थदर्शनेऽनुपपन्नमित्याह कस्माद्ध्यभेष्यत् किमित्यसौ भीतवान् परमार्थनिरूपणायां भयमनुपपन्नमेवेत्यभिप्रायः। यस्माद् द्वितीयाद्वस्त्वन्तराद्वै भयम्भवति द्वितीयञ्च वस्त्वन्तरमविद्याप्रत्युपस्थापितमेव। न ह्यदृश्यमानन्द्वितीयम्भयजन्मनो हेतुः। तत्र को मोहः कः शोक एकत्वमनुपश्यत इति मन्त्रवर्णात्। यच्चैकत्वदर्शनेन भयमपनुनोद अपनोदितन्तद्युक्तम्। कस्माद् द्वितीयाद्वस्त्वन्तराद्वै भयम्भवति तदेकत्वदर्शनेन द्वितीयदर्शनमपनीतमिति नास्ति यतः अत्र चोदयन्ति। कुतः प्रजा-

---

न्यमद्वितीयब्रह्मरूपेण ज्ञात्वा सहेतुभीतिम्प्रजापतिराक्षिपतीत्युक्तं इदानीन्तत्त्वज्ञानफलमाह। तत इति। कस्माद्धीत्यादेरुत्तरस्य पूर्व्वेण पौनरुक्त्यमित्याशङ्क्य विदुषो हेत्वभावाच्च भयमित्युक्तसमर्थनार्थत्वादुत्तरस्य नैवमित्याह। तस्येत्यादिना। अनुपपत्तौ हेतुमाह। यस्मादिति। परमार्थदर्शनेऽपि वस्त्वन्तरात् किमिति भयं न भवति इत्याशङ्क्याह। द्वितीयञ्चेति। अन्वयव्यतिरेकाभ्यां द्वैतस्याविद्याप्रत्युपस्थापितत्वेऽपि कुतस्तदुत्थद्वैतदर्शनम्भयकारणं न भवतीत्याशङ्क्याह। न हीति। तत्त्वज्ञाने सत्यज्ञानायोगात्तदुत्थं द्वैतं तद्दर्शनञ्चायुक्तमित्यतो हेत्वभावाद्भयानुपपत्तिरित्यर्थः। अद्वैतज्ञाने भयनिवृत्तिरित्यत्र मन्त्रं संवादयति। तत्रेति। विराडैक्यदर्शनेनैव प्रजापतेर्भयमपनीतं नाद्वैतदर्शनेनेत्यस्मिन्नर्थेऽपि यन्मदन्यन्नास्तीत्यादिवाक्यं व्याख्यातमित्याशङ्क्याङ्गीकुर्व्वन्नाह। यच्चेति। तदेव प्रश्नद्वारा प्रकटयति। कस्मादित्यादिना। प्रथमव्याख्यानानुसारेण चोद्यमुत्थापयति। अत्रेति। प्रजापतेर्ब्रह्मात्मैक्यज्ञानाद्भीतिध्वस्तिरुक्ता न च तस्य तज्ज्ञानं युक्तं हेत्वभावादित्याह। कुत इति। यस्मादस्माकमैक्यधीस्तस्मादेव तस्यापि स्यादित्याशङ्क्याह। को वेति।

पतेरेकत्वदर्शनज्ञातं को वा अस्मा उपदिदेश। अथानुपदिष्टमेव प्रादुरभूत्। अस्मदादेरपि तथा प्रसङ्गः। अथ जन्मान्तरकृतसंस्कारहेतुकम्। एकत्वदर्शनानर्थक्यप्रसङ्गः। यथा प्रजापतेरतिक्रान्तजन्मावस्थस्यैकत्वदर्शनं विद्यमानमप्यविद्याबन्धकारणं नापनिन्ये। यतोऽविद्यासंयुक्त एवायञ्जातो ऽबिभेदेवं सर्वेषामेकत्वदर्शनानर्थक्यं प्राप्नोति। अन्त्यमेव निवर्त्तकमिति चेत्। न। पूर्ववत्पुनः प्रसङ्गेनानैकान्त्यात्। तस्मादनर्थकमेवैकत्वदर्शनमिति नैष दोषः। उत्कृष्टहेतूद्भवत्वाल्लोकवद्यथापुण्यकर्म्मोद्भवैर्विविक्तैः कार्य्यकरणैः संयुक्ते जन्मनि सति प्रज्ञामेधास्मृतिवैशारद्यं दृष्टम्। तथा प्रजा-

---

न हि तस्य शास्त्रश्रवणमाचार्य्याभावाद्वापि सम्प्रदायस्य वैदिकविषयत्वाद्वापि प्रमाद्यैश्वर्य्यासक्तत्वादतोऽस्मात्सिद्धश्रवणादिविद्याहेत्वभावाच्च प्रजापतेरैक्यधीर्युक्तेत्यर्थः। उपदेशानपेक्षमेव प्रजापतेरैक्यज्ञानं प्रादुर्भूतमिति शङ्कते। अथेति। अतिप्रसक्त्या प्रत्याह। अस्मदादेरिति। प्रजापतेर्जन्मान्तरस्थायामाचार्य्यस्य सत्त्वाच्छ्रवणाद्यनुष्ठानात्तैक्यज्ञानोदयात् तत्संस्कारोत्थं तथाविधमेव तज्ज्ञानं फलावस्थायामपि स्यादिति चोदयति। अथेति। दूषयति। एकत्वेति। अज्ञानध्वंसित्वे नार्थवत्त्वमित्याशङ्क्याह। यथेति। तत्र गमकमाह। यत इति। दार्ष्टान्तिकमाह। एवमिति। अन्त्यस्मिन्नेव जन्मनि प्रजापतेरैक्यधीरनपेक्षा जायते। ज्ञानमप्रतिघं यस्येति स्मृतेः। न च तदुत्पत्त्यनन्तरमेव सहेतुबन्धं निरुणद्धि भयारत्यादिफलेन प्रारब्धकर्म्मणा प्रतिबन्धादतो मरणकालीनं तदज्ञानध्वंसीति शङ्कते। अन्त्यमेवेति। प्रवृत्तफलस्य कर्म्मणः स्वोपपादकाज्ञानलेशाद्विज्ञानशक्तिप्रतिबन्धकत्वेऽपि जन्मान्तरादिषु संस्कारहेत्वज्ञानध्वंसिज्ञानसामर्थ्यप्रतिबन्धकत्वे मानाभावान्मध्ये जातं ज्ञानमनिवर्त्तकमित्याशङ्क्य वस्तुमन्त्यस्य च ज्ञानस्य निवर्त्तकत्वे नान्तरं

पतेर्धर्म्मज्ञानवैराग्यैश्वर्य्यविपरीतहेतुसर्वपाप्मदाहाद्विशुद्धैः कार्य्यकरणैः संयुक्तमुत्कृष्टञ्जन्म तदुक्तवत्त्वानुपदिष्टमेव युक्तमेकत्वदर्शनम्प्रजापतेः। तथा च स्मृतिः। ज्ञानमप्रतिघं यस्य वैराग्यञ्च प्रजापतेः। ऐश्वर्य्यञ्चैव धर्म्मश्च सहसिद्धञ्चतुष्टयमिति। सहसिद्धत्वे भयानुपपत्तिरिति चेत्। न ह्यादित्येन सह तम उदेति। नान्यानुपदिष्टार्थत्वात् सहसिद्धवाक्यस्य। श्रद्धातात्पर्य्यप्रणिपातादीनामहेतुत्वमिति चेत्। स्यान्मतम्। श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः। तद्विद्धि प्रणिपातेनेत्येवमादीनां श्रुतिस्मृतिविहितानां ज्ञानहेतूनामहेतुत्वम्। प्रजापतेरिव जन्मा-

---

हेतुः। यजमानान्तरस्थान्ते ज्ञाने तद्धंसित्वादृष्टेरन्यत्वस्याज्ञानध्वंसित्वेनानियमात्। न च यजमानान्तरे प्रजापतौ चान्त्यं ज्ञानं ज्ञानत्वादज्ञानध्वंसिसर्व्वज्ञानेषु बन्धहेत्वज्ञानध्वंसित्वादृष्टेर्ज्ञानहेतोरनैकान्त्यात्। न चान्त्यमेकज्ञानत्वादज्ञानध्वंसीति युक्तं। उपान्त्यतादृग्ज्ञानवदन्त्येऽपि तदयोगात्। उपान्त्ये हेतोरनैकान्त्यादित्यभिप्रेत्य दूषयति। नेत्यादिना।

कृत्प्रकारणाभावात्तदन्तरेण चोत्पत्तावतिप्रसङ्गात् संस्काराधीनत्वेऽपि विशेषाभावादन्त्यस्य च ज्ञानस्य चाज्ञानध्वंसित्वासिद्धेरयुक्तं प्रजापतेरेकत्वदर्शनमित्युपसंहरति। तस्मादिति। प्रजापतेः सुप्तप्रतिबुद्धवत्सदृष्टादृष्टोत्थकार्य्यकरणवत्त्वात् पूर्व्वकल्पीयपदपदार्थवाक्यस्मरणवतः स्मृतिविपरिवर्त्तिनो वाक्याद्विचार्य्यमाणाद्दृष्टसहकृतात्तत्त्वज्ञानं स्यात्। लोके विशिष्टादृष्टोत्थकार्य्यकरणानां प्रज्ञाद्यतिशयदर्शनात्तेन च ज्ञानेन जन्मान्तरहेत्वविद्याक्षयेऽप्यारब्धकर्म्मतज्जञ्च भयारत्वाद्यविद्यालेशतो भविष्यतीति परिहरति। नैष दोष इति। सङ्गृहीतमर्थं समर्थयते। यथेत्यादिना धर्म्मादिचतुष्टयाद्विपरीतमधर्म्मा-

न्तरकृतधर्म्महेतुत्वे ज्ञानस्येति चेत्। न। निमित्तसमुच्चयविकल्पगुणवदगुणवत्त्वभेदोपपत्तेः। लोके हि नैमित्तिकानां कार्य्याणां निमित्तभेदोऽनेकधा विकल्प्यते। तथा निमित्तसमुच्चयः। तेषाञ्च विकल्पितानां समुच्चितानाञ्च पुनर्गुणवदगुणवत्त्वकृतो भेदो भवति। तद्यथा रूपज्ञान एव तावन्नैमित्तिके कार्य्ये तमसि विनालोकेन चक्षूरूपसन्निकर्षो नक्तञ्चराणां रूपज्ञाने निमित्तं भवति। मन एव केवलं रूपज्ञाननिमित्तं योगि-

---

दि चतुष्टयं तत्र हेतोः सर्व्वस्य पाप्मनो ज्ञानाद्यतिशयेन नाशादिति यावत्। उत्कृष्टत्वं प्रकृष्टज्ञानादियोगित्वम्। उक्तमन्त्रकमाह। तदुक्तश्चेति। तस्य ज्ञानादिवैशारद्ये पौराणिकीं स्मृतिमुदाहरति। तथा चेति। अप्रतिघमप्रतिबद्धं निरङ्कुशमित्येतत् प्रत्येकं सम्बध्यते। तस्यैतच्चतुष्टयं सहसिद्धं सह निर्वर्त्ततेति सम्बन्धः। सहसिद्धत्वश्रुतेः सोऽबिभेदिति श्रुतिविरुद्धत्वादप्रामाण्यमिति विरोधाधिकरणन्यायेन शङ्कते। सहसिद्धत्व इति। सत्येव सहजे ज्ञाने सहेतोर्भयमपि स्यादिति चेत् नेत्याह। नहीति। अन्येनाचार्य्येणानुपदिष्टमेव प्रजापतेर्ज्ञानमुदेति इत्येवमर्थं परमात्मसहसिद्धवाक्यस्य तज्ज्ञानात् प्राक् तस्य भयमविरुद्धम्। जन्मज्ञानभेदादतो न विरोधः श्रुतिस्मृत्योरिति समाधत्ते। नेत्यादिना। ज्ञानोत्पत्तेराचार्य्याद्यनपेक्षत्वे श्रद्धादिविधानानर्थक्यादनेकश्रुतिस्मृतिविरोधः स्यादिति शङ्कते। श्रद्धेति। आदिपदेन शमादिग्रहः। अस्मदादिषु तेषां हेतुत्वमिति चेन्नेत्याह। प्रजापतेरिमेति। चोदितं विरोधं निराकरोति। नेत्यादिना। निमित्तानां विकल्पः समुच्चयो गुणवत्त्वमगुणवत्त्वमित्यनेन प्रकारेण कार्य्योत्पत्तौ विशेषसम्भवान्न श्रद्धादिविध्यानर्थक्यमित्यर्थः। सङ्क्षेपवाक्यं विवृणोति। लोके हीति। तद्धि सर्व्वं विकल्पादि यथा ज्ञातुं शक्यं तथैकैकस्येव

नामस्माकन्तु सन्निकर्षालोकाभ्यां सह तथादित्यचन्द्राद्यालोकभेदैः समुच्चिता निमित्तभेदा भवन्ति । तथाऽऽलोकविशेषणवद्गुणवत्त्वेन भेदाः स्युः । एवमेवात्मैकत्वज्ञानेऽपि क्वचिज्जन्मान्तरकृतं कर्म निमित्तम्भवति । यथा प्रजापतेः क्वचित्तपोनिमित्तं । तपसा ब्रह्म विजिज्ञासस्वेति श्रुतेः । क्वचिदाचार्य्यवान् पुरुषो वेद । श्रद्धावाँल्लभते ज्ञानं । तद्विद्धि प्रणिपातेन । आचार्य्याद्धैव ज्ञातव्यो द्रष्टव्यः श्रोतव्यः इतिश्रुतिस्मृतिभ्यः । एकान्तज्ञानलाभनिमित्तत्वं श्रद्धाप्रभृतीनां । अधर्म्मादिनिमित्तवियो-

---

नैमित्तिके रूपज्ञानाख्ये कार्य्ये दर्शयामीत्याह । तद्यथेति । तत्र विकल्पमुदाहरति । तमसीत्यादिना । समुच्चयन्दर्शयति । अस्माकन्त्विति । विकल्पितानां समुच्चितानाञ्च निमित्तानां गुणवद्गुणत्वप्रयुक्तम्भेदन्दर्शयति । तथेति । आलोकविशेषस्य गुणवत्त्वं बहुलत्वमगुणवत्त्वं मन्दप्रभत्वं चक्षुरादेर्गुणवत्त्वं निर्मलत्वादि तिमिरोपहतत्वादि चागुणवत्त्वमिति भेदः । दृष्टान्तम्प्रतिपाद्य दार्ष्टान्तिकमाह । एवमिति । तथान्यस्यापि प्रजापतितुल्यस्य वामदेवादेर्जन्मान्तरीयसाधनवशादीश्वरानुग्रहादस्मिन् जन्मनि श्रुतवाक्यादैक्यज्ञानमुदेतीति शेषः । भृगुस्तत्तुल्यो वाधिकारी क्वचिदित्युच्यते । ततोऽन्वयव्यतिरेकाख्यमालोचनं श्वेतकेतुप्रभृतिषु ज्ञाननिमित्तानां समुच्चयन्दर्शयति । क्वचिदित्यादिना । एकान्तं नियतमावश्यकं ज्ञानोदयलाभे निमित्तत्वमिति यावत् । अथ प्रणिपाताद्व्यतिरेकेण न प्रजापतेरपि ज्ञानं सम्भवति सामग्र्यभावादत आह । अधर्म्मादीति । प्रणिपातादेर्ज्ञानोदयप्रतिबन्धकनिवर्त्तकत्वात् प्रजापतेश्च तन्निवृत्तेर्जन्मान्तरीयसाधनायतत्वादाधुनिक प्रणिपातादिना विना श्रुतवाक्यादैक्याधीः सम्भवतीत्यर्थः । तर्हि श्रवणादिव्यतिरेकेणापि प्रजापतेर्ज्ञानं स्यादित्याशङ्क्याह । वेदान्तेति । न तैर्विना ज्ञानं कस्य-

स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत् ।

---

गहेतुत्वात् । वेदान्तश्रवणमनननिदिध्यासनानाञ्च साक्षाज्ज्ञेयविषयत्वात् । पापादिप्रतिबन्धक्षये चात्ममनसोर्भूतार्थज्ञाननिमित्तस्वाभाव्यात् । तस्मादहेतुत्वं न ज्ञानस्य श्रद्धाप्रणिपातादीनामिति ॥ २ ॥

इतश्च संसारविषय एव प्रजापतित्वं यतः स प्रजापतिर्वै नैव रेमे रतिं नान्वभवत् अरत्याविष्टोऽभूदित्यर्थोऽस्मदादिवदेव यत इदानीमपि । तस्मादेकाकित्वादिधर्म्मवत्त्वादेकाकी न

---

चिदपि स्यात् प्रजापतेस्तु जन्मान्तरीयश्रवणादिदानीमनुस्मृतवाक्यात्तदुत्पत्तिरिति शेषः । तर्हि श्रद्धादिकमपि प्रतिबन्धनिवर्त्तकत्वेन प्रजापतेरादरणीयं तद्विहितमन्तरेण ज्ञानोत्पत्त्यनुपपत्तेरित्याशङ्क्याह । पापादीति । आत्ममनसोर्मिथःसंयुक्तयोः सम्बन्धि यत् पापं तत्कार्य्यञ्च रागादि । तेन ज्ञानोत्पत्तौ प्रतिबन्धस्य पूर्व्वोक्तेन न्यायेन क्षये सति प्रजापतेरीश्वरानुग्रहात् स्मृतवाक्यस्य परमार्थज्ञानोत्पत्तौ केवलस्य निमित्तत्वात्तस्याधुनिकश्रद्धाद्यतिरेकेण ज्ञानोदयेऽपि न तद्विधिर्वैयर्थ्यम् । अस्माकन्तु श्रवणादेव तदुत्पत्तेर्वाक्यतात्पर्य्यादि ज्ञानं सर्व्वेषामेव ज्ञानसाधनमाचार्य्यादिषु पुनर्विकल्पसमुच्चयावित्यर्थः । अधिकारिभेदेन ज्ञानहेतुषु विकल्पेऽपि तेषामन्यात्तु समुच्चयान्न श्रुतिस्मृतिविरोधोऽस्तीत्युपसंहरति । तस्मादिति ॥ २ ॥

प्रजापतेर्भयाविष्टत्वेन संसारान्तर्भूतत्वमुक्तमिदानीन्तत्रैव हेत्वन्तरमाह । इतश्चेति । अरत्याविष्टत्वे प्रजापतेरेकाकित्वं हेतूकरोति । यत इति । कार्य्यस्या रतिः कारणस्याऽरतेर्लिङ्गमित्यनुमानं सूचयति । इदानीमपीति । आदिपदेन भयाविष्टत्वादिग्रहः । अरतिस्मृतियोगिनि

स हैतावानास यथा स्त्री पुमाᳪंसौ सम्परिष्वक्तौ

रमते रतिं नानुभवति। रतिर्नामेष्टार्थसंयोगजा क्रीडा। तत्प्रसङ्गिन इष्टवियोगाम्मनस्याकुलीभावोऽरतिरित्युच्यते। स तस्या अरतेरपनोदाय द्वितीयमरत्यपघातसमर्थं स्त्रीवस्त्वैच्छद् गृद्धिमकरोत्। तस्य चैवं स्त्रीविषयं गृध्यतः स्त्रिया परिष्वक्तस्येवात्मनो भावो बभूव॥

तेन सत्येप्सुत्वात् ह एतावानेतत्परिमाण आस बभूव ह। किम्परिमाण इत्याह। यथा लोके स्त्रीपुमांसावरत्यपनोदाय सम्परिष्वक्तौ यत्परिमाणौ स्यातां तदा तत्परिमाणो बभूवेत्यर्थः। स तथा तत्परिमाणमेवेममात्मानं द्वेधा द्विःप्रकारमपातयत्पातितवानिममेवेत्यवधारणं मूलकारणाद्विराजो विशेषणार्थं। न चीरस्य सर्व्वोपमर्द्देन दधिभावापत्तिवद्विराड्भावोपमर्द्देनैतावानास। किन्तर्हि आत्मना व्यवस्थितस्यैव

---

रक्तिद्वारा निर्वक्ति। रतिर्नामेति। कथन्तर्हि यथोक्ताऽरतिनिरसनमित्याशङ्क्य स द्वितीयमैच्छदित्येतदव्याचष्टे। स तस्या इति। स हेत्यस्य वाक्यस्य पातनिकां करोति। तस्येति। तेन भावेनेति यावत्।

कथमभिमानमात्रेण यथोक्तपरिमाणत्वम्। तत्राह। सत्येति। निपातोऽवधारणे। तस्यैव पुनरनुवादोऽन्वयार्थः। परिमाणमेव प्रश्नपूर्व्वकं विवृणोति। किमित्यादिना। सम्प्रति स्त्रीपुंसयोरुत्पत्तिमाह। स तथेति। ननु द्वेधाभावो विराजो वा संसक्तस्त्रीपुम्मानस्य पिण्डस्य वा नाद्यः। सशब्देन विराड्ग्रहणायोगात् तस्य कर्म्मत्वात् द्वितीये त्वात्मशब्दानुपपत्तिस्तत्राह। इममिति। तथा च सशब्देन कर्त्तृतया विराड्ग्रहणमविरुद्धमित्यर्थः। तदेव स्फुटयति। नेत्यादिना। कस्य तर्हि द्विधाकरणमि-

**स इममेवात्मानं द्वेधा पातयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्द्धबृगलमिव स्व इति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाशः ।**

---

विराजः सत्यसङ्कल्पत्वादात्मव्यतिरिक्तं स्त्रीपुंसपरिष्वक्तपरिमाणं शरीरान्तरं बभूव । स एव च विराट् तथा भूतः स हैतावानासेति सामानाधिकरण्यात्ततस्तस्मात्पातनात्पतिश्च पत्नी चाभवतामिति दम्पत्योर्निर्वचनं लौकिकयोरत एव तस्माद्यस्मादात्मन एवार्द्धः पृथग्भूता येयं स्त्री तस्मादिदं शरीरमात्मनोऽर्द्धं बृगलमर्द्धस्य तद्बृगलश्च तदर्द्धबृगलं विदलमर्द्धविदलमिवेत्यर्थः । प्राक्स्त्र्युद्वहनात्कस्यार्द्धबृगलमित्युच्यते । स्व आत्मन इति ।

एवमाह स्म उक्तवान्किल याज्ञवल्क्यः यज्ञस्य वल्को वक्ता यज्ञवल्कः तस्यापत्यं याज्ञवल्क्यो देवरातिरित्यर्थः । ब्रह्मणो

---

त्याशङ्क्याह । किन्तर्हीति । तत्र द्विधाकरणकर्मेति शेषः । कथन्तर्हि तत्रात्मशब्दः सम्भवतीत्याशङ्क्याह । स एव चेति । तथा भूतः संश्लिष्टजायापुंपरिमाणोऽभूदिति यावत् । न केवलं मनुः शतरूपेत्यनयोरेव दम्पत्योरिदं निर्वचनं । किन्तु लोकप्रसिद्धयोः सर्व्वयोरेव तयोरेतद्द्रष्टव्यं । सर्व्वत्रास्य सम्भवादित्याह । लौकिकयोरिति । उक्ते निर्वचने लोकानुभवमनुकूलयति । तस्मादिति । प्रागिति सहधर्म्मचारिणीसम्बन्धात्पूर्व्वमित्यर्थः । आकाङ्क्षाद्वारा षष्ठीमादायानुभवमवलम्ब्य व्याचष्टे । कस्येत्यादिना । बृगलशब्दो विकारार्थः ।

अनुभवसिद्धेऽर्थे प्रामाणिकसम्मतिमाह । एवमिति । द्वेधापातने सत्येको भागः पुरुषोऽपरस्तु स्त्रीत्यत्रैव हेत्वन्तरमाह । यस्मादिति । उद्वहना-

स्त्रिया पूर्य्यत एव ताꣳ समभवत्ततो मनुष्या अजायन्त
सो हेयमीचाञ्चक्रे कथं नु मात्मन एव जनयित्वा
सम्भवति हन्त तिरोसानीति सा गौरभवदृषभ

---

वाऽपत्यं यस्मादयं पुरुषार्द्ध आकाशः स्त्र्यर्द्धशून्यःपुनरुद्वहनात्त-
स्मात्पूर्य्यते स्त्र्यर्द्धेन पुनः सम्पुटीकरणेनैव विदलार्द्धः । तां स
प्रजापतिर्मन्वाख्यः शतरूपाख्यामात्मनो दुहितरं पत्नीत्वेन
कल्पितां समभवन्मैथुनमुपगतवान् ततस्तस्मात्तदुपगमनान्मनु-
ष्या अजायन्तोत्पन्नाः ॥ ३ ॥

सा शतरूपा उह इयं सेयं दुहितृगमने स्मार्त्तं प्रतिषेध-
मनुस्मरन्तीचाञ्चक्रे । कथन्विदमकृत्यं यन्मा मामात्मन एव
जनयित्वोत्पाद्य सम्भवत्युपगच्छति । यद्यप्ययं निर्घृणोऽयं ह-
न्तेदानीं तिरोसानि जात्यन्तरेण तिरस्कृता भवानीत्येवमी-

---

आगमस्यायामाकाशः पुरुषार्द्धस्त्र्यर्द्धशून्यो यस्मादसम्पूर्णो वर्त्तते तस्मादुद्वह-
नेन प्राप्तस्त्र्यर्द्धेन पुनरितरो भागः पूर्य्यते । यथा विदलार्द्धोऽसम्पूर्णः
संपुटीकरणेन पुनः सम्पूर्णः क्रियते तद्वदिति योजना । पूर्व्वमपि स्वा-
भाविकयोग्यतावशेन संसर्गोऽभूदनादित्वात्संसारस्येति सूचयितुं पुनरि-
त्युक्तं पुरुषार्द्धस्येतरार्द्धस्य च मिथःसम्बन्धान्मनुष्यादिसृष्टिरित्याह । ता-
मित्यादिना । स्मार्त्तं प्रतिषेधमिति न सगोत्रां समानप्रवरां भार्य्यां विन्देते-
त्यादिकमिति यावत् ॥ ३ ॥

अकृत्यं हीदं यद्दुहितृगमनं मातृतश्चापञ्चमात्पुरुषात्पितृतश्चा-
सप्तमादिति स्मृतेरिति मत्वाह । कथमिति । तयोर्जात्यन्तरगमनं क-

इतरस्ताꣳ समेवाभवत्ततो गावोऽजायन्त वडवेतराभवदश्ववृष इतरो गर्द्दभीतरा गर्द्दभ इतरस्ताꣳ समेवाभवत्तत एकशफमजायताऽजेतरा भवद्वस्त इतरोऽविरितरा मेष इतरस्ताꣳसमेवा भवत्ततोऽजावयोऽजायन्तैवमेव यदिदं किञ्च मिथुनमापिपीलिकाभ्यस्तत्सर्व्वमसृजत ॥ ४ ॥

---

चित्वाऽसौ गौरभवदुत्पाद्य प्राणिकर्म्मभिर्नोद्यमानायाः पुनः पुनः सैव मतिः शतरूपायाः मनोश्चाभवत्ततश्च ऋषभ इतरस्तां समेवाभवदित्यादिपूर्व्ववत्। ततो गावोऽजायन्त। तथा वडवेतराभवदश्ववृष इतरस्तथा गर्द्दभीतरा गर्द्दभ इतरस्तत्र वडवाश्ववृषादीनां सङ्गमात्तत एकशफं एकखुरमश्वाश्वतरगर्द्दभाख्यं त्रयमजायत। तथा ऽजेतराभवद्वस्तश्छाग इतरस्तथाविरितरामेष इतरः सतां समेवाभवत्तां तामिति वीप्सा। तामजां तामविञ्चेति समभवदेवेत्यर्थः। तत अजाश्चावयश्चाजावयोऽजायन्त। एवमेव यदिदं किञ्च यत्किञ्चेदं मिथुनं स्त्रीपुंसल-

---

षमित्याशङ्क्याह। यद्यपीति। शतरूपायां गोभावमापन्नायामृषभादिभावो मनोर्भवतु तावता यथोक्तदोषपरिहारस्तयोर्वडवादिभावे तु न कारणमस्तीत्याशङ्क्याह। उत्पाद्येति। ततस्तस्या गोभावादनन्तरमिति यावत्। गवां जन्मार्थं मिथःसम्भवनं ततःशब्दार्थः। तत्र तेषामुत्पत्तौ सत्यामिति यावत्। वाक्यद्वये वीप्सा विवक्षितेत्याह। तामिति। तां तामेवाभिनयति। तामजामिति। तां वडवां तां गर्द्दभीं चेत्यपि द्रष्टव्यम्।

सोऽवेदहं वाऽव सृष्टिरस्म्यहꣳ हीदꣳ सर्व्वम सृ-
क्षीति ततः सृष्टिरभवत्सृष्टयाꣳ हास्यैतस्याम्भवति य
एवं वेद ॥ ५ ॥

यणं द्वन्द्वमापिपीलिकाभ्यः पिपीलिकाभिः सहानेनैव न्यायेन
तत्सर्व्वमसृजत जगत्सृष्टवान् ॥ ४ ॥

स प्रजापतिः सर्व्वमिदं जगत्सृष्ट्वा ऽवैत्कथमहं वाऽव
अहमेव सृष्टिः सृज्यत इति सृष्टं जगदुच्यते सृष्टिरिति। य-
न्मया सृष्टं जगन्मदभेदत्वादहमेवास्मि न मत्तो व्यतिरिच्यते।
कुत एतदहं हि यस्मादिदं सर्व्वं जगदसृक्षि सृष्टवानस्मि
तस्मादित्यर्थः। यस्मात्सृष्टिशब्देनात्मानमेवाभ्यधात्प्रजापतिस्त-
तस्तस्मात्सृष्टिरभवत्सृष्टिनामाभवत्सृष्ट्यां जगति ह अस्य प्र-
जापतेरेतस्यामेतस्मिन् जगति स प्रजापतिवत् स्रष्टा भवति
स्वात्मनोऽनन्यभूतस्य जगतः। को य एवं प्रजापतिवद्यथोक्तं

ततो मिथःसम्भवनाद्यथोक्तादिति यावत्। विशेषणानामानन्त्यात् प्रत्येक-
मुपदेशासम्भवं मन्वानः सङ्क्षिप्योपसंहरति। एवमेवेति। तद्विभजते।
इदं मिथुनमिति ॥ ४ ॥

पशुकर्म्म प्रयोगो न्यायः। यद्यपि मन्वादिसृष्टिरेवोक्ता तथापि
सर्व्वा सृष्टिरुक्तैवेति सिद्धवत्कृत्याह। स प्रजापतिरिति। अवगतिं प्रश्न-
पूर्व्वकं विशदयति। कथमित्यादिना। कथं सृष्टिरस्मीत्यवधार्य्यते कर्तृ-
क्रिययोरेकत्वायोगादित्याशङ्क्याह। सृज्यत इतीति। पदार्थमुक्त्वा वाक्यार्थ-
माह। यन्मयेति। जगच्छब्दादुपरि तच्छब्दमध्याहृत्याहमेव तदस्मीति
तत्र हेतुमाह। मदभेदत्वादिति। एवकारार्थमाह। नेति। मदभेदत्वा-
दित्युक्तमाक्षिप्य समाधत्ते। कुत इत्यादिना। न हि सृष्टं स्रष्टुरर्था-
न्तरं तस्यैव तेन मायाविवदस्यानादित्यर्थः। ततः सृष्टिरित्यादि व्याचष्टे।

शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येष्वेताभ्याꣳ हि रूपाभ्यां ब्रह्माभवत्

शूद्रः। यस्मात् क्षत्त्रादिषु विकारापन्नमग्नौ ब्राह्मण एव चाविकृतं स्रष्टृ ब्रह्म तस्मादग्नावेव देवेषु देवानां मध्ये लोकं कर्म्मफलमिच्छन्त्यग्निसम्बद्धं कर्म्म कृत्वेत्यर्थः। तदर्थमेव हि तद्ब्रह्म कर्म्माधिकरणत्वेनाग्निरूपेण व्यवस्थितं। तस्मात्तस्मिन्नग्नौ कर्म्म कृत्वा तत्फलं प्रार्थयत इत्येतदुपपन्नं ब्राह्मणे मनुष्येषु। मनुष्याणां मध्ये कर्म्मफलेच्छायां नाग्न्यादिनिमित्तक्रियापेक्षा किं तर्हि जातिमात्रस्वरूपप्रतिलम्भेनैव पुरुषार्थसिद्धिः। यत्र तु दैवाधीना पुरुषार्थसिद्धिस्तत्रैवाग्न्यादिसम्बन्धक्रियापेक्षा। स्मृतेश्च जप्येनैव तु संसिध्ये

विकारमन्तरेणेति यावत्। विकारान्तरमग्निब्राह्मणलक्षणं। क्षत्त्रियेणेत्यत्र विवक्षितमर्थमाह। इन्द्रादिदेवताधिष्ठित इति। वैश्येनेति वस्वाद्यधिष्ठितत्वं। शूद्रेणेति पूषाधिष्ठितत्वं। अग्न्यादिभावमापन्नस्य क्षत्त्रादिभावो न तु क्षत्त्रादिभावमापन्नस्याग्न्यादिभाव इत्येतावन्मात्रेण ब्रह्मणो विकृतत्वाविकृतत्वमग्निब्राह्मणस्तुत्यर्थमुक्तमित्यभिप्रेत्य तस्मादित्यादि व्याचष्टे। यस्मादिति। यथोक्तमर्थं नया न्यायत्वं साधयति। तदर्थमेवेति। कर्म्मफलदानार्थमिति यावत्। मनुष्याणां मध्ये कर्म्मापि मनुष्यमवलम्ब्य कर्म्मफलभोगापेक्षायामधिकरणसम्प्रदानभावेनावस्थिताग्नीन्द्रादिनिमित्तक्रियापेक्षा नास्ति किन्तु ब्राह्मणजातिप्राप्तिमात्रेण तत्सम्बद्धं जपादि कर्म्मावश्यम्भावीति तन्मात्रेण पुरुषार्थः सिध्यतीति प्रतीकग्रहणपूर्वकमाह। मनुष्याणामिति। कुत्र तर्हि यथोक्तक्रियापेक्षेति तत्राह। यत्र त्विति। देवानां मध्येऽग्निसम्बन्धमेव कर्म्म कृत्वा पुरुषार्थलाभो मनुष्याणां मध्ये तु

द्ब्राह्मणो नात्र संशयः। कुर्य्यादन्यत्र वा कुर्य्यान्मैत्रो ब्राह्मण उच्यत इति। पारिव्राज्यदर्शनाच्च। तस्माद्ब्राह्मणत्व एव मनुष्येषु लोकं कर्म्मफलमिच्छन्ति। यस्मादेताभ्यां हि ब्राह्मणाग्निरूपाभ्यां कर्म्मकर्त्रधिकरणरूपाभ्यां यत्स्रष्टृ ब्रह्म साक्षादभवत्।

अत्र तु परमात्मलोकमग्नौ ब्राह्मणे चेच्छन्तीति केचित्। तदसत्। अविद्याधिकारे कर्म्माधिकारार्थं वर्णविभागस्य प्रस्तुतत्वात्परेण च विशेषणात्। यदि ह्यत्र लोकशब्देन पर एवात्मोच्येत परेण विशेषणमनर्थकं स्यात् स्वं लोकमदृष्ट्वेति। स्वलोकव्यतिरिक्तश्चेदग्न्यधीनतया प्रार्थ्यमानः प्रकृतो लोकस्ततः स्वमिति युक्तं विशेषणं प्रकृतपरलोकनिवृत्त्य-

---

ब्राह्मण्यप्रयुक्तजप्यादिमात्रेण तत्प्राप्तिरित्यत्र प्रमाणमाह। स्मृतेश्चेति। जप्यग्रहणं जातिमात्रप्रयुक्तकर्मोपलक्षणार्थं। अन्यदग्निसम्बन्धं कर्म। कोऽयं ब्राह्मणो नाम तत्राह। मैत्र इति। सर्वेषु भूतेष्वभयप्रदो विशिष्टज्ञानिमानिति यावत्। ननु यथोक्तस्मृतेर्ब्राह्मण्यप्रतिलम्भमात्रादभ्युदयलाभेऽपि कुतस्ततो निःश्रेयससिद्धिस्तत्राह। पारिव्राज्येति। ब्राह्मणो व्युत्थायाथ भिक्षाचर्य्यं चरन्तीति ब्राह्मणस्य पारिव्राज्यं श्रूयते। तच्च सन्न्यासाद्ब्रह्मणः स्थानमिति ब्रह्मलोकसाधनं गम्यते। अतश्च ब्राह्मणजातिनिमित्तं लोकमिच्छन्तीति युक्तमित्यर्थः। ब्रह्मणो मनुष्येष्वित्यस्यार्थमुपसंहरति। तस्मादिति। हेतुवाक्यमादाय व्याचष्टे। यस्मादिति।

हिशब्दार्थो यस्मादित्युक्तो यत्स्रष्टृ ब्रह्म तदेताभ्यां यस्मात्साक्षादभवत्तस्मादग्नावेवेत्यादि युक्तमिति योजना। अग्नौ हुत्वा ब्राह्मणे च दत्वा परमात्मलक्षणं लोकमाप्तुमिच्छन्तीति भर्तृप्रपञ्चव्याख्यानमनुवदति। अत्रेति। सप्तमी तस्मादित्यादिवाक्यविषया। प्रकृतालोचनायां

र्थत्वात् स्वत्वेन चाव्यभिचारात्परमात्मलोकस्य । अविद्याकृतानाञ्च स्वत्वव्यभिचारात् । ब्रवीति च कर्म्मकृतानां व्यभिचारं चीयत एवेति । ब्रह्मणा सृष्टा वर्णाः कर्म्मार्थं । तच्च कर्म्म धर्म्माख्यं । सर्व्वानेव कर्त्तव्यतया नियन्तृपुरुषार्थसाधनं च । तस्मात्तेनैव चेत्कर्म्मणा स्वो लोकः परमात्माख्योऽविदितोऽपि प्राप्यते किं तस्यैव पदनीयत्वेन क्रियत इत्यत आह ॥

---

कर्मफलमिह लोकशब्दार्थो न परमात्मा प्रक्रमभङ्गप्रसङ्गादिति दूषयति । तदसदिति । कर्माधिकारार्थं कर्म तु प्रवृत्तिसिद्ध्यर्थमिति यावत् । वाक्यशेषगतविशेषणवशादपि कर्मफलस्यैवात्र लोकशब्दवाच्यत्वमित्याह । परेण चेति । तदेव प्रपञ्चयति । यदि हीति । परपक्षे स्वमिति विशेषणं व्यावर्त्याभावान्न घटते चेत्त्वत्पक्षेऽपि कथं तदुपपत्तिरित्याशङ्क्याह । स्वलोकेति । परशब्दोऽनात्मविषयः । ननु प्रकृते वाक्ये लोकशब्देन परमात्मा नोच्यते चेदुत्तरवाक्येऽपि तेन नासावुच्येत विशेषाभावादित्याशङ्क्य विशेषणसामर्थ्यान्नैवमित्याह । स्वत्वेन चेति । कर्मफलविषयत्वेनापि विशेषणस्य नेतुं शक्यत्वान्न विशेषसिद्धिरित्याशङ्क्याह । अविद्येति । तेषां स्वरूपव्यभिचारे वाक्यशेषं प्रमाणयति । ब्रवीति चेति । उत्तरवाक्यं व्यावर्त्य पूर्वपक्षमाह । ब्रह्मणेति । तत्पुनरचेतनमकिञ्चित्करमित्याशङ्क्याह । तच्चेति । सर्वैरेव वर्णैः स्वस्वकर्त्तव्यतया तान् प्रति नियन्तृभूत्वेति योजना । तस्य पुमर्थोपायत्वप्रसिद्धिमादाय फलितमाह । तस्मादिति । अविदितोऽपीति छेदः । देवतागुणकर्म स्तुतिहेतुरिति पक्षं प्रतिक्षेप्तुमुत्तरवाक्यमुत्थापयति । अत आहेति ।

अथ यो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो वाऽननूक्तो

---

अथेति पूर्व्वपक्षविनिवृत्त्यर्थः। यः कश्चित् ह वै अस्मात्सांसारिकात् पिण्डग्रहणलक्षणादविद्याकामकर्म्महेतुकादन्यथोनकर्म्माभिमानतया वा ब्राह्मणजातिमात्रकर्म्माभिमानितया वा आगन्तुकादस्वरूपभूताल्लोकात् स्वं लोकमात्माख्यमात्मत्वेनाव्यभिचारित्वाददृष्ट्वाऽहं ब्रह्मास्मीति प्रैति म्रियते। स यद्यपि स्वो लोकोऽविदितोऽविद्यया व्यवहितोऽस्व इवाज्ञात एनं सङ्ख्यापूरण इव लौकिक आत्मानं न भुनक्ति न पालयति शोकमोहभयादिदोषापनयेन। यथा च लोके वेदोऽननूक्तोऽनधीतः कर्म्माद्यवबोधकत्वेन न भुनक्त्यन्यद्वा लौकिकं कृष्यादि कर्म्माकृतं स्वात्मनान-

---

ज्ञानादेव मुक्तिर्न कर्मणेत्यागमप्रसिद्धमिति निपातयोरर्थः। तत्र निमित्तमुपादानञ्चेति द्वयं सङ्क्षिपति। अविद्येति। निमित्तं विवृणोति अन्यथानेति। आत्माख्यस्य लोकस्य स्वत्वे हेतुमाह। आत्मत्वेनेति। अहं ब्रह्मास्मीत्यदृष्ट्वेति सम्बन्धः। यः परमात्मानमविदित्वैव म्रियते तमेनं परमात्मानं पालयतीति योजना। परमात्मनः स्वरूपत्वादविदितस्यापि पालयितृत्वं स्यादित्याशङ्क्याह। स यद्यपीति। लोकशब्दादुपरिष्टात्तथापीति द्रष्टव्यं। अविदित इत्यस्य व्याख्यानमविद्येत्यादि। परमात्माख्यो लोको नाज्ञातो भुनक्तीत्यत्र कर्मफलभूतलोकवैधर्म्यं दृष्टान्ततया दर्शयति। अस्य इति। अज्ञातस्यापालयितृत्वे साधर्म्यदृष्टान्तमाह। यद्वेति। तथा लौकिको दशमो दशमोऽस्मीत्यज्ञातो न शोकादिनिवर्त्तनेनात्मानं भुनक्ति तथा परमात्मापीत्यर्थः। तत्रैव श्रुत्युक्तं दृष्टान्तद्वयं व्याचष्टे। यथाचेत्यादिना। अवि-

ऽन्यद्वा कर्म्मकृतं यदिह वा अप्यनैवंविद् महत्पुण्यं कर्म्म करोति तद्धास्यां ततः क्षीयत

---

भिव्यञ्जितमात्मीयफलप्रदानेन भुनक्त्येवमात्मा स्वो लोकः स्वेनैव नित्यात्मस्वरूपेणानभिव्यञ्जितोऽविद्यादिप्रहाणेन न भुनक्त्येव। ननु किं स्वलोकदर्शननिमित्तपरिपालनेन कर्म्मणः फलप्राप्तिध्रौव्यादिष्टफलनिमित्तस्य च कर्म्मणो बाहुल्यात्तन्निमित्तं पालनमक्षयं भविष्यति। तन्न। कृतस्य क्षयवत्त्वादित्येतदाह। यदि ह वै संसारेऽद्भुतवत्कश्चिन्म- हात्माप्यनेवंवित् स्वं लोकं यथोक्तेन विधिना विद्वान्मह- द्बह्वश्वमेधादि पुण्यं कर्म्मेष्टफलमेव नैरन्तर्य्येण करोत्य- नेनैवानन्त्यं मम भविष्यतीति। तत्कर्म्म ह अस्याविद्याव- तोऽविद्याजनितकामहेतुत्वात् स्वप्नदर्शनविभ्रमोद्भूतविभूतिव- दन्ततोऽन्ते फलोपभोगस्य क्षीयत एव। तत्कारणयोर-

---

द्यादीत्यादिशब्देन तत्तुल्यं सर्वं सङ्गृह्यते। यदिहेत्यादिवाक्यापोद्यं चो- द्यमुत्थापयति। न चेति। नन्वनिष्टफलनिमित्तस्यापि कर्म्मणः प्राप्तिध्रौ- व्यात्कथं कर्मणो मोक्षः सेत्स्यति तत्राह। इष्टेति। बाहुल्यमश्व- मेधादिकर्मणो महत्तरत्वं तद्धि दुरितमभिभूय मोक्षमेव सम्पादयिष्यती- त्यर्थः। यत्कृतकं तदनित्यमिति न्यायमाश्रित्य परिहरति। तन्ने- त्यादिना। सप्तम्यर्थः संसार इति निपातार्थं सूचयति। अद्भुत- वदिति।

अनेवंवित्तं व्याकरोति। स्वं लोकमिति। यथोक्तो विधिरन्वय- व्यतिरेकादिः। पुण्यकर्म्मच्छिद्रेषु दुरितप्रसक्तिं निवारयति। नैरन्त- र्य्येणेति। तथा पुण्यं वध्निन्वतोऽभिप्रायमाह। अनेनेति। प्रकान्त;

एवात्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म्म क्षीयते

---

विद्याकामयोश्चलत्वात् तत्क्षयध्रौव्योपपत्तिस्तस्मान्न पुण्यकर्म्मफलपालनानन्त्याशास्त्येव। अत आत्मानमेव स्वं लोकं। आत्मानमिति स्वं लोकमित्यस्मिन्नर्थे स्वं लोकमिति प्रकृतत्वादिह च स्वशब्दस्याप्रयोगादुपासीत। स य आत्मानमेव लोकमुपास्ते। तस्य किमित्युच्यते। न हास्य कर्म्म क्षीयते। कर्म्माभावादेवेति नित्यानुवादः। यथाऽविदुषः कर्म्मक्षयलक्षणं संसारदुःखं सन्ततमेव। न तथा तदस्य विद्यत इत्यर्थः। मिथिलायां प्रदीप्तायां न मे दह्यति किञ्चनेति यद्वत्। स्वात्मलोकोपासकस्य विदुषोऽविद्यासंयोगात्कर्म्मैव न क्षीयत इत्यपरे वर्णयन्ति। लोकशब्दार्थञ्च कर्म्म-

---

यच्छब्दापेक्षितं कथयति। तत्कर्म्मेति। प्रागुक्तन्यायाद्योतो निपातः। कारणरूपेण कार्य्यस्य ध्रुवत्वमाशङ्क्याह। तत्कारणयोरिति। मुक्तेरनित्यत्वदोषसमाधिस्तर्हि केन प्रकारेण स्यादित्याशङ्क्याह। अत इति। आत्मशब्दार्थमाह। स्वं लोकमिति। तदेव स्फुटयति। आत्मानमिति। आत्मशब्दस्य प्रकृतस्वलोकविषयत्वे हेत्वन्तरमाह। इह चेति। प्रयोगे तु पुनरुक्तिभयादर्थान्तरविषयत्वमपि स्यादित्यर्थः। विद्याफलमाकाङ्क्षाद्वारा निक्षिपति। स य इति। कर्म्मफलस्य क्षयित्वमुक्त्वा कर्म्मणोऽक्षयत्वं वदतो व्याहतिमाशङ्क्याह। कर्म्मेति। वाक्यस्य विवक्षितमर्थं वैधर्म्म्यदृष्टान्तेन व्याचष्टे। यथेति। अविदुष इति छेदः। कर्म्मक्षयेऽपि वा विदुषो दुःखाभावे दृष्टान्तमाह। मिथिलायामिति। आत्मानमित्यादि केवलज्ञानान्मुक्तिरित्येवंपरतया व्याख्यातम्। सम्प्रति भर्तृप्रपञ्चव्याख्यामुत्था-

समवायिनं द्विधा परिकल्पयन्ति किलैको व्याकृतावस्थः कर्म्माश्रयो लोको हिरण्यगर्भाख्यस्तं कर्म्मसमवायिनं लोकं व्याकृतं परिच्छिन्नं य उपास्ते तस्य किल परिच्छिन्नकर्म्मात्मदर्शिनः कर्म्म क्षीयते । तमेव कर्म्मसमवायिनं लोकमव्याकृतावस्थं कारणरूपमापाद्य यस्तूपास्ते तस्यापरिच्छिन्नकर्म्मात्मदर्शित्वात्तस्य च कर्म्म न क्षीयत इति । भवतीयं शोभना कल्पना न तु श्रौती । स्वलोकशब्देन प्रकृतस्य परमात्मनोऽभिहितत्वात् ॥

---

पश्यति । स्वात्मेति । आत्मलोकोपासकस्य कर्म्माभावे कथं तदक्षयवाचो युक्तिरित्याशङ्क्य कर्म्माभावस्यासिद्धिमभिसन्धाय कर्म्मसाध्यं लोकं व्याकृताव्याकृतरूपेण भिनत्ति । लोकशब्दार्थमिति । श्रौतमेचिकी कल्पना न तु श्रौतीति वक्तुं किलेत्युक्तम् । तत्राद्यं लोकशब्दार्थमनूद्य तदुपासकस्य दोषमाह । एक इति । परिच्छिन्नः कर्म्मात्मा तत्साध्यो व्याकृतावस्थो लोकस्तस्मिन्नहङ्ग्रहोपासकस्येति यावत् । किलशब्दस्तु पूर्ववत् । द्वितीयं लोकशब्दार्थमनूद्य तदुपासकस्य लाभं दर्शयति । तमेवेति । यथा कुण्डलादेरन्तर्बहिरन्वेषणे सुवर्णातिरिक्तरूपानुपलम्भात्तद्रूपेणास्य नित्यत्वम् । तथा कर्म्मसाध्यं हिरण्यगर्भादिलोकं कार्य्यत्वादव्याकृतं कारणमेवेत्यङ्गीकृत्य यस्तस्मिन्नहंबुद्ध्योपास्ते तस्यापरिच्छिन्नकर्म्मसाध्यलोकात्मोपासकत्वाद्ब्रह्मवित्त्वं कल्पितत्वञ्च घटते । तस्य स्वरूपात्मैव कर्म्म । तेन तस्य तन्न क्षीयते । यः पुनरद्वैतावस्थामुपास्ते तस्यात्मैव कर्म्म भवतीति हि सर्वप्रपञ्चैकत्वमित्यर्थः । आत्मानमित्यादि वस्तुद्वयपरमिति प्राप्तं पक्षं प्रत्याह । भवतीति । श्रौतत्वाभावे हेतुमाह । स्वंलोकेति । स्वं लोकमद्वेत्यत्र स्वलोकशब्देन परस्य प्रकृतस्यात्मान एवेतरत्र प्रकृतहानाप्रकृतप्रक्रियापरिहारार्थमुक्तत्वात्तत्र लोकद्वैविध्यकल्पना युक्तेत्यर्थः ।

अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत् सृजते ॥ १५ ॥

स्वं लोकमिति प्रस्तुत्य स्वशब्दं विहायाकशब्दप्रक्षेपेण पुनस्तस्यैव प्रतिनिर्देशादात्मानमेव लोकमुपासीतेति । तत्र कर्म्मसमवायिलोककल्पनाया अनवसर एव । परेण च केवलविद्याविषयेण विशेषणाद्येषां नोऽयमात्मा नं लोक इति पुत्रकर्म्मापरविद्याकृतेभ्यो हि लोकेभ्यो विशिनष्टि अय-मात्मा नो लोक इति । न हास्य केन च न कर्म्मणा लोको मीयते एषोऽस्य परमलोक इति च । तैः सविशेषणैरस्यैकवा-क्यता युक्ता । इहापि स्वं लोकमिति विशेषणदर्शनादस्मात्का-मयत इत्ययुक्तमिति चेदिह स्वो लोकः परमात्मा तदुपास-नात् स एव भवतीति स्थिते यद्यत्कामयते तत्तदस्मादात्मनः

लोकशब्देनात्र परमात्मपरिग्रहे हेत्वन्तरमाह । स्वं लोकमितीति । यथा लोकस्य स्वशब्दार्थो विशेषणं तथात्मानमित्यत्र स्वशब्दपर्य्यायात्म-शब्दार्थस्तस्य विशेषणं दृश्यते न च कर्म्मफलस्य मुख्यमात्मत्वमतो लोक-शब्दोऽत्र परमात्मैवेत्यर्थः । प्रकरणाद्विशेषणाच्च सिद्धमर्थं दर्शयति । तत्रेति । परस्यैव लोकशब्दार्थत्वे हेत्वन्तरमाह । परेणेति । उत्तरमेव प्रपञ्चयति । पुत्रेति । अथ परेषु वाक्येषु परमात्मा लोकशब्दार्थः । प्रकृते तु कर्म्मफलमिति व्यवस्थेति देवैवमेकवाक्यत्वसम्भवे तद्भेदस्यान्या-य्यत्वादित्याह । तैरिति । एकवाक्यत्वसम्भावनामेव दर्शयति । इहापीति । यथोत्तरत्रात्मादिशब्देन लोको विशेषितस्तथात्मानमित्यत्राप्यात्मशब्देन वि-शिष्यते । पूर्व्ववाक्ये च स्वं लोकमदृष्ट्वेति स्वशब्देनात्मवाचिना तस्य वि-शेषणं दृश्यते । तथा च पूर्व्वापरालोचनायामेकवाक्यत्वसिद्धिरित्यर्थः । प्रकरणेन परस्य लोकशब्दार्थत्वमयुक्तं लिङ्गविरोधादिति चोदयति । अ-स्मादिति । तदेव विवृणोति । इहेत्यादिना । अर्थवादस्यं लिङ्गं न

सृजत इति तदात्मप्राप्तिव्यतिरेकेण फलवचनमयुक्तमिति चेन्न। स्वलोकोपासनस्तुतिपरत्वात्तस्मादेव लोकात्सर्व्वमिष्टं सम्पद्यत इत्यर्थो नान्यदतः प्रार्थनीयमाप्तकामत्वात्। आत्मतः प्राण आत्मत आशा इत्यादि श्रुत्यन्तरेण। यथा सर्व्वात्मभावप्रदर्शनार्थो वा पूर्व्ववद्यदि हि पर एवात्मा सम्पद्यते तदा युक्तोऽस्माद्ध्येवात्मन इत्यात्मशब्दप्रयोगः स्वस्मादेवप्रकृतात्मनो लोकादित्येवमर्थः। अन्यथाऽव्याकृतावस्थात्कर्म्मणो लोकादिति सविशेषणमवक्ष्यत्। प्रकृतपरमात्मलोकव्यावृत्तये व्याकृतावस्थाव्यावृत्तये च। न ह्यस्मिन् प्रकृते विशेषितेऽश्रुतान्तरालावस्था प्रतिपत्तुं शक्यते ॥ १५ ॥

---

प्रकरणाद्बलवदिति मत्वा समाधत्ते। नेत्यादिना। स्तुतिमेव स्पष्टयति। तस्मादेवेति। लोकाज्ज्ञातादिति शेषः। यथाछान्दोग्ये स्तुत्यर्थमात्मनः स्रष्टृत्वमुच्यते तथात्राप्यात्मलोकं स्तोतुमेतत्फलवचनमित्याह। आत्मत इति। भवतु वा माभूदस्माद्ध्येवेत्यादिरर्थवादस्तथापि तस्य सर्व्वात्मत्वप्रदर्शनार्थत्वाद्युक्तमत्रलोकशब्देन परमात्मग्रहणमित्याह। सर्व्वात्मेति। तस्मात्तत्सर्व्वमभवदिति वाक्यं दृष्टान्तयति। पूर्व्वदिति किञ्चात्मशब्दस्य त्रिधा परिच्छेदशून्यार्थवाचितया यच्चाप्नोतीत्यादिन्यायेन सिद्धत्वात्तत्सामानाधिकरण्यलोकशब्दस्यापि तदर्थत्वात्परस्यैवात्र लोकत्वमित्याह। यदि हीति। किञ्च यदि लोकशब्देन परं हित्वार्थान्तरमुच्यते तदा सविशेषणं वाक्यं स्यादन्यथा स्वं लोकमिति प्रकृतपरमात्मलोकस्य त्वत्पक्षेऽनन्तरोक्तब्रह्मलोकस्य व्यावृत्त्ययोगात्। न चात्र सविशेषणं वाक्यं दृष्टमतः स्वलोकमिति प्रकृतः परमात्मैवात्मात्रापि लोक इत्याह। अन्यथेति। विशेषणं विनैवास्मादित्यत्र परापराभ्यामर्थान्तरं किं न स्यादित्याशङ्क्याह। न हीति। स्वं लोकमिति प्रकृते परमात्मन्यात्मानमेवेति विशेषिते चाव्याकृताख्यापरापराभ्यामन्तरावस्था न प्रतिपत्तुं शक्यते तस्याः श्रुतत्वाभावादित्यर्थः ॥१५॥

अथो अयं वा आत्मा सर्व्वेषां भूतानां लोकः स
यज्जुहोति यद्यजते तेन देवानां लोकोऽथ यद-
नुब्रूते तेन ऋषीणामथ यत्पितृभ्यो निपृणाति

अथो अयं वा आत्मा अत्राविद्वान्वर्णाश्रमाद्यभिमानो धर्म्मेण नियम्यमानो देवादिकर्म्मकर्त्तव्यतया पशुवत्परतन्त्र इत्युक्तम्। कानि पुनस्तानि कर्म्माणि यत्कर्त्तव्यतया पशुवत्परतन्त्रो भवति। के वा ते देवादयो येषां कर्म्मभिः पशुवदुपकरोतीति तदुभयं प्रपञ्चयति। अथो इत्ययं वाक्योपन्यासार्थः। अयं यः प्रकृतो गृही कर्म्माधिकृतो ऽविद्वाञ्छरीरेन्द्रियसङ्घातादिविशिष्टः पिण्ड आत्मेत्युच्यते। सर्व्वेषां देवादीनां पिपीलिकान्तानां भूतानां लोको भोग्य आत्मेत्यर्थः। सर्व्वेषां वर्णाश्रमादिविहितैः कर्म्मभिरुपकारित्वात्। कैः पुनः कर्म्मविशेषैरुपकुर्व्वन् केषां भूतविशेषाणां लोक इत्युच्यते। स गृही यज्जुहोति यद्यजते। यागो देवतामुद्दिश्य स्वत्वपरित्यागः। स एवासेचनावधिको होमस्तेन होमयागलक्षणेन कर्म्मणावश्यकर्त्तव्यत्वेन देवानां पशुवत्परतन्त्रत्वेन प्रतिबद्ध इति लोकोऽथ यदनु-

कण्डिकान्तरमवतार्य्य वृत्तमनूद्याकाङ्क्षापूर्व्वकं तात्पर्य्यमाह। अथो इत्यादिना। अत्रेत्यविद्यावस्थापूर्व्वमन्यो वा गृह्यते। अपिपर्य्यायत्वाथोशब्दस्याकृतिमाशङ्क्य व्याकरोति। अथो इतीति। परस्यापि प्रकृतत्वात्ततो विशिनष्टि। गृहीति। गृहित्वे हेतुरविद्वानित्यादिरितरपर्य्युदासार्थं कर्म्माधिकृत इत्युक्तम्। कथमुक्तस्यात्मनः सर्व्वभोग्यतेत्याशङ्क्याह। सर्व्वेषामिति। तदेव मन्त्रद्वारा प्रकटयति। कैः पुनरिति।

प्रजामिच्छते तेन पितॄणामथ यन्मनुष्यान्वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणां अथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदावयांस्यापिपीलिकाभ्य उपजी-

ब्रूते स्वाध्यायमधीतेऽहरहस्तेन ऋषीणां लोकोऽथ यत्पितृभ्यो निपृणाति प्रयच्छति पिण्डोदकादि। यच्च प्रजामिच्छते प्रजार्थमुद्यमं करोतीच्छा चोत्पद्य पत्न्याणार्थां प्रजापतिश्चोत्पादयतीत्यर्थः। तेन कर्म्मणावश्यकर्त्तव्यत्वेन पितृणां लोकः पितॄणां भोग्यत्वेन परतन्त्रो लोकः। अथ यन्मनुष्यान् वासयते भूम्युदकादिदानेन गृहे यच्च तेभ्यो वसद्भ्योऽवसद्भ्यो वार्थिभ्योऽशनं ददाति तेन मनुष्याणाम्। अथ यत्पशुभ्यस्तृणोदकं विन्दति लम्भयति तेन पशूनां यदस्य गृहेषु श्वापदावयांसि च पिपीलिकाभिः सह कणबलिभाण्डक्षालनाद्युपजीवन्ति तेन तेषां लोको यस्मादयमेतानि कर्म्माणि कुर्व्वन्नुपकरोति देवादिभ्यस्तस्माद्यथाह

यजतिजुहोत्योरस्यागार्थत्वे नाविशेषात्पुनरुक्तिमाशङ्क्य यजतिश्चोदना द्रव्यदेवताक्रियासमुदाये कृतार्थत्वादिति न्यायेनाह। य.ग इति। आसेचनं प्रक्षेपः। उक्तञ्च। जुहोतिरासेचनाधिकः स्यादिति। यथोक्तहोमादिभिर्देवादीन् प्रत्युपकुर्व्वतो गृहिणोऽविद्यया प्रतिबन्धसम्भवात्तदुपकारित्वव्याहत्तिरित्याशङ्क्याह। यस्मादिति। पूर्व्वमामयशब्दानामभिप्रेतमर्थमनूद्य समनन्तरवाक्यमवतार्य्य तदर्थमाह। तस्मादिति। देवादीनां कर्म्माधिकारिणि कर्त्तृत्वादिपरिपालन-

वन्ति तेन तेषां लोको यथाह वै स्वाय लोकायारिष्टिमिच्छेदेवꣳ हैवंविदे सर्व्वाणि भूतान्यरिष्टिमिच्छन्ति तद्वा एतद्विदितं मीमाꣳसितम् ॥ १६ ॥

---

वै लोके स्वाय लोकाय स्वस्य देहायारिष्टिमविनाशं स्वभावात्प्रच्युतिमिच्छेत् स्वस्वभावप्रच्युतिभयात्पोषणरक्षणादिभिः सर्वतः परिपालयेदेवं ह एवंविदे सर्वभूतभोग्योऽहमनेन प्रकारेण मयाऽवश्यमृणिवत्प्रतिकर्त्तव्यमित्येवमात्मानं परिकल्पितवते सर्वाणि भूतानि देवादीनि यथोक्तान्यरिष्टिमविनाशमिच्छन्ति स्वत्वाऽप्रच्युत्यै सर्वतः संरक्षन्ति कुटुम्बिन इव पशूंस्तस्मादेषां तन्न प्रियमित्युक्तम् । तद्वै एतत्तदेतद्यथोक्तानां कर्म्मणामृणवदवश्यकर्त्तव्यत्वं पञ्च महायज्ञप्रकरणे विदितं कर्त्तव्यतया मीमांसितं विचारितञ्चावदानप्रकरणे ॥ १६ ॥

---

मेव परिरक्षणमिति विवक्षित्वा पूर्व्वोक्तं स्मारयति । तस्मादिति । यथोक्तं कर्म कुर्व्वन् यद्यपि देवादीन् महदुपकरोति तथापि न तत्कर्त्तृत्वमावश्यकं मानाभावादित्याशङ्क्याह । तद्वा इति । भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञश्चेत्येवं पञ्च महायज्ञाः । ननु श्रुतमपि विचारं विना नानुष्ठेयम् । न हि रुद्ररोदनादि श्रुतमित्यनुष्ठीयते तत्राह । मीमांसितमिति । तदेतदत्रोच्यते यद्यजते च यदग्नौ जुहोतीत्याद्यवदानप्रकरणम् । ऋणं ह वावजायते जायमानो योऽस्तीत्यादिनार्थवादेनेति शेषः ॥ १६ ॥

आत्मैवेदमग्र आसीत्। ब्रह्मविद्यायैत्तस्मात्पशुभावात्कर्त्तव्यताबन्धनरूपात्प्रतिमुच्यते। केनायं कारितः कर्म्मबन्धनाधिकारेऽयम् इव प्रवर्त्तते न पुनस्तद्विमोचणोपाये विद्याधिकार इति। ननूक्तं देवा रचन्तीति। वाढम्। कर्म्माधिकारे स्वगोचरारूढानेव तेऽपि रचन्ति। अन्यथा कृताभ्यामागमकृतनाशप्रसङ्गात्। न तु सामान्यपुरुषमात्रं विशिष्टाधिकारानारूढं तस्माद्भवितव्यम्। तेन येन प्रेरितोऽवश एव वहिर्मुखीभवति स्वस्माल्लोकात्। नन्वविद्या साऽविद्यावान् हि बहिर्मुखीभूतः प्रवर्त्तते। सापि नैव प्रवर्त्तिका। वस्तुस्वरूपावरणात्मिका हि सा। प्रवर्त्तकवीजत्वन्तु

---

वाक्यान्तरमादाय व्याख्यातुं पातनिकां करोति आत्मैवेत्यादिना कर्मैव बन्धनं तत्राधिकारोऽनुष्ठानं तस्मिन्निति यावत्। विद्याधिकारस्तदुपाये श्रवणादौ प्रवृत्तिस्तत्रेत्यर्थः। यथोक्ताधिकारिणो देवादिभीरक्षणं प्रवृत्तिमार्गे नियमेन प्रवर्त्तकमिति शङ्कते। नन्विति। उक्तमङ्गीकरोति। वाढमिति। तर्हि प्रवर्त्तकान्तरं न वक्तव्यं तत्राह। कर्माधिकारेति। कर्मस्वधिकारेषु स्वगोचरत्वं प्राप्तानेव देवादयोऽपि रचन्ति न सर्वान्यमसाधारणं ब्रह्मचारिणमतोऽस्य कर्ममार्गे प्रवृत्तौ देवादिरक्षणस्याहेतुत्वाद्ब्रह्मचारिणो निवृत्तिं त्यक्त्वा प्रवृत्तिपरत्वपक्षपाते कारणं वाच्यमित्यर्थः। मनुष्यमात्रकर्मस्वेव ते बलात्प्रवर्त्तयन्ति तेषामचिन्त्यशक्तित्वादित्याशङ्क्याह। अन्यथेति। स्वगोचररूढानेवेत्येवकारस्य व्यावर्त्त्यं कीर्त्तयति। न त्विति। विशिष्टाधिकारो गृहस्थानुष्ठेयकर्मसु गृहस्थत्वेन स्वामित्वं तेन देवगोचरतामप्राप्तमित्यर्थः। देवादिरक्षणस्याकारणत्वे फलितमाह। तस्मादिति। प्रतरगविद्या यथोक्ताधिकारिणो नियमेन प्रवृत्त्यनुरागे हेतुरिति शङ्कते।

**आत्मैवेदमग्र आसीदेक एव सोऽकामयत**

प्रतिपद्यतेऽन्धत्वमिव गर्त्तादिपतनप्रवृत्तिहेतुः। एवं तर्हि उच्यतां किं यत्प्रवृत्तिहेतुरिति। तदिहाभिधीयते। एषणा कामः सः स्वाभाविक्यामविद्यायाञ्च वर्त्तमाना बालाः प्रवर्त्तन्ते। पराचः कामाननुयन्तीति काठकश्रुतौ। स्मृतौ च काम एष इत्यादि। मानवे च सर्वा प्रवृत्तिः कामहेतुक्यैवेति। स एषोऽर्थः सविस्तरः प्रदर्श्यते इहाध्यायपरिसमाप्तेः।

आत्मैवेदमग्र आसीत्। आत्मैव स्वाभाविकोऽविद्वान् कार्य्यकरणसंघातलक्षणो वर्णी अग्रे प्राग्दारसम्बन्धाद्दात्मेत्यभिधीयते तस्मादात्मनः पृथग्भूतं काम्यमानं

---

नन्विति। तदेव स्फुटयति। अविद्यावानिति। तस्याः स्वरूपेण प्रवर्त्तकत्वं दूषयति। सापीति। अविद्यायास्तर्हि प्रवृत्त्यन्वयव्यतिरेकौ कथमित्याशङ्क्य कारणकारणत्वेनेत्याह। प्रवर्त्तकेति। ननु अन्यस्मिन् कारणे कारणमेवाविद्या प्रवृत्तेरिति चेत्तत्राह। एवं तर्हीति। उत्तरवाक्यमुत्तरत्वेनावतार्य्य तस्मिन् विवक्षितं प्रवर्त्तकं सङ्क्षिपति। तदिहाभिधीयत इति तत्रार्थतः श्रुत्यन्तरं संवादयति। स्वाभाविक्यामिति। तत्रैव भगवतः सम्मतिमाह। स्मृतौ चेति। अथ केन प्रयुक्तोऽयमित्यादिप्रश्नस्योत्तरं काम एष क्रोध एष रजोगुणसमुद्भव इत्यादि। अकामतः क्रिया काचिद्दृश्यते नेह कस्यचित्। यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितमिति वाक्यमाश्रित्याह। मानवे चेति। दर्शितमिति शेषः। उक्तेऽर्थे तृतीयाध्यायशेषमपि प्रमाणयति। स एषोऽर्थ इति।

एवं तात्पर्य्यमुक्त्वा प्रतीकमादाय पदानि व्याकरोति। आत्मैवेत्यादिना वर्णी द्विजत्वद्योतको ब्रह्मचारीति यावत्। कथं तर्हि हेत्वभावे तस्य कामित्वमपि स्यादित्याशङ्क्याह। जायादीति। सपद्यं व्याकुर्वन्नुत्तर-

जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म्म कुर्वीयेत्येतावान् वै कामो नेच्छंश्च

जायादिभेदरूपं नासीत् स एवैक आसीज्जायाद्येषणा बीजभूताविद्यावानेक एवासीत् स्वाभाविक्या स्वात्मनि कर्त्रादिकारकक्रियाफलात्मकताध्यारोपलक्षणयाऽविद्यावासनया वासितः। सोऽकामयत कामितवान्। कथं जाया कर्म्माधिकारहेतुभूता मे मम कर्त्तुः स्यात्तया विनाऽहमनधिकृत एव कर्म्मण्यतः कर्म्माधिकारसम्पत्तये भवेज्जाया। अथाहं प्रजायेय प्रजारूपेणाहमेवोत्पद्येय। अथ वित्तं मे स्यात्कर्म्मसाधनं गव्यादिलक्षणमथाहमभ्युदयनिःश्रेयससाधनं कर्म्म कुर्वीय येनाहमनृणो भूत्वा देवादीनां लोकान् प्राप्नुयां तत्कर्म्म कुर्वीय। काम्यानि च पुत्त्रवित्तस्वर्गादिसाधनान्येतावान् वै काम एतावद्विषयपरिच्छिन्न इत्यर्थः एतावानेव हि कामयितव्यो विषयो यदु जायापुत्त्रवित्तकर्म्माणि। साधनलक्षणैषणा। लोकाश्च तयो

---

वाक्यमादायावशिष्टं व्याचष्टे। स्वाभाविक्येति। कामनाप्रकारं प्रश्नपूर्वकं प्रकटयति। कथमिति। कर्माधिकारहेतुत्वं तस्याः साधयति। तयेति। प्रजां प्रति जायाया हेतुत्वद्योतकोऽथशब्दः। प्रजाया मानुषवित्तान्तर्भावमभ्युपेत्य द्वितीयोऽथशब्दः। तृतीयवस्तुवित्तस्य कर्मानुष्ठाने हेतुत्वविवक्षयेति विभागः। कर्मानुष्ठानफलमाह। येनेति। तत्किं नित्यनैमित्तिककर्मणामेवानुष्ठानं नेत्याह। काम्यानि चेति। क्रिया पदमनुकृष्टं च शब्दः। कामशब्दस्य यथाश्रुतमर्थं व्यहर्त्तुमेतावानित्यादिवाक्यस्याभिप्राय-

## नातो भूयो विन्देतस्मादप्येतर्ह्येकाकी कामयते

मनुष्यलोकः पितृलोको देवलोक इति फलभूता साधनैषणायास्याः । एतदर्था हि जायापुत्रवित्तकर्म्मलक्षणा साधनैषणा । तस्मात् सैकैवैषणा या लोकैषणा सैव सत्यैषणा साधनापेक्षेति द्विधाऽतोऽवधारयिष्यत्युभे ह्येते एषणे एवेति । फलार्थत्वात्सर्व्वारम्भस्य । लोकैषणार्थप्राप्तौक्तैवेत्येतावान् वै एतावानेव काम इत्यवध्रियते । भोजनेऽभिहिते तृप्तिर्न हि पृथगभिधेया । तदर्थत्वाद्भोजनस्य । ते एते एषणे साध्यसाधनलक्षणे कामो येन प्रयुक्तो विद्वानवश एव कोशकारवदात्मानं वेष्टयति कर्म्ममार्ग एवात्मानं न प्रणिदधद्बहिर्मुखीभूतो न स्वं लोकं प्रतिजानाति । तथा च तैत्तिरीयके अग्निमुग्धो हैव धूमतान्तः स्वं लोकं न प्रतिजानातीति । क-

माह । साधनलक्षणेति । अस्या साधनैषणायाः फलभूता इति सम्बन्धः । द्वयोरेषणयोरनुक्ता लोकैषणा दर्शयितुमिष्टा । एतदर्था हीति । कथन्तर्हि साधनैषणोक्तिरित्याशङ्क्याह । सैवेति । एतेन वाक्यशेषोऽप्यनुगुणो भवतीत्याह । अत इति । साधनवत्फलमपि काममात्रञ्चेत्कथन्तर्हि श्रुत्या साधनमात्रमभिधायैतावानवध्रियते तत्राह । फलार्थत्वादिति । उक्तसाधने साध्यमार्थिकमित्यत्र दृष्टान्तमाह । भोजन इति । साधनोक्तौ साध्यस्यार्थादुक्तेरेतावानिति द्वयोरनुवादेऽपि कथमेषणात्वे कामशब्दस्तत्र प्रयुज्यते । नहि तौ पर्य्यायौ । न च तदवाच्यत्वे तयोरनर्थकतेत्याशङ्क्यापर्य्यायत्वमेषणाकामशब्दयोरुपेत्याह । त एत इति । वेष्टनमेव स्पष्टयति । कर्म्ममार्ग इति । अग्निमुग्धोऽग्निरेव होमादिद्वारेण मम श्रेयः-

जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म्म कुर्वीयेति स यावदप्येतेषामेकैकं न प्राप्नो-

---

य पुनरेतावत्त्वमवधार्य्यते । कामानामनन्तत्वादनन्ता हि कामा इत्येतदाशङ्क्य हेतुमाह । यस्मान्नेच्छंश्च न इच्छन्नपि अतोऽस्मात्फलसाधनत्वलक्षणाद्भूयोऽधिकतरं न विन्देत् । न हि लोके फलसाधनव्यतिरिक्तं दृष्टमदृष्टं वा लब्धव्यमस्ति । लब्धव्यविषयो हि कामस्तस्य चैतद्व्यतिरेकेणाभावाद्युक्तं वक्तुमेतावान् वै काम इति । एतदुक्तं भवति दृष्टार्थमदृष्टार्थं वा साध्यसाधनलक्षणमविद्यावत् पुरुषाधिकारविषयमेषणाद्वयं कामोऽतोऽस्माद्विदुषा व्युत्थातव्यमिति । यस्मादेवमविद्वानात्मा कामो पूर्व्वं कामयामास तथा पूर्व्वतरोऽपि । एषा लोकस्थितिः प्रजापतेश्चैवमेव सर्ग आसीत् सोऽबिभेदविद्यया । ततः कामप्रयुक्त एकाक्यरममाणो ऽरत्युपघाताय स्त्रियमैच्छत्तां समभवत्ततः सर्गोऽयमा-

---

साधनं नात्मज्ञानमित्यभिमानवान् धूमतान्तो धूमेन ग्लानिमापन्नः । धूमतां वा ममान्ते देहावसाने भवतीति मन्यमानस्ते धूमनभिसम्भवन्तीति श्रुतेः । स्वं लोकमात्मानं वाक्यान्तरमुत्थाप्य व्याचष्टे । कथमित्यादिना । तस्मादेतावत्त्वमवधार्य्यते । तेषामिति शेषः । उक्तमेवार्थं लोकदृष्टिमवष्टभ्य स्पष्टयति । न हीति । लब्धव्यान्तराभावेऽपि कामयितव्यान्तरं स्यादित्याशङ्क्याह । लब्धव्येति । एतद्व्यतिरेकेण साध्यसाधनातिरेकेणेति यावत् । तयोर्द्वयोरपि कामत्वविधायिश्रुतेरभिप्रायमाह एतदुक्तमिति । कामस्यानर्थत्वात् साध्यसाधनयोश्च तावन्मात्रत्वात्सर्गादौ पुमर्थताभिधानं तत्त्वा

त्यकृत्स्न एव तावन्मन्यते तस्यो कृत्स्नता मन एवास्यात्मा वाग्जाया।

---

सोर्दित ह्युक्तम्। तस्मात्तत्स्वद्वाऽवेत्तर्ह्येतस्मिन्नपि काल एका-की सन् प्राग्दारक्रियातः कामयते जाया मे स्यादथ प्रजायेय अथ वित्तं मे स्यादथ कर्म्म कुर्व्वीयेत्युक्तार्थं वाक्यम्। स एवं कामयमानः सम्पादयंश्च जायादीन् यावत्सम-स्तान् स एतेषां यथोक्तानां जायादीनां एकैकमपि न प्राप्नोत्यकृत्स्नोऽसम्पूर्णोऽहमित्येतावदात्मानं मन्यते। पारि-शेष्यात्समस्तानेवैतान् सम्पादयति यदा तदा तस्य कृ-त्स्नता। यदा तु न शक्नोति कृत्स्नतां सम्पादयितुं तदा-स्याकृत्स्नत्वं तदास्य कृत्स्नत्वसम्पादनायाहतस्योक्तस्याकृ-त्स्नत्वाभिमानिनः कृत्स्नतेयमेवं भवति। कथमयं कार्य्य-करणसङ्घातः प्रविभज्यते तत्र मनोऽनुवृत्ति हीतरत्सर्व्वं कार्य्यकरणजातमिति। मनः प्रधानत्वादात्मेवात्मा। यथा

---

स्वप्नलाभतुल्याभ्यामिष्टाभ्योऽप्येषणाभ्यां व्युत्थानं कर्त्तव्यात्मकं कृत्वा काङ्क्षि-तमोक्षहेतुं ज्ञानमुद्दिश्य श्रवणाद्यावर्त्तयेदित्यर्थः। तस्मादेवेत्यादि व्या-चष्टे। यस्मादिति। प्राकृतस्थितिरेषा न बुद्धिपूर्वकारिणामिदं वृत्तमि-त्याशङ्क्याह। प्रजापतेश्चेति। तत्र हेतुत्वेन पूर्वोक्तं स्मारयति। सोऽबि-भेदित्यादिना। तत्रैव कार्य्यलिङ्गकानुमानं सूचयति। तस्मादिति। स यावदित्यादिवाक्यमादाय व्याचष्टे स एवमिति। पूर्वभागो वाक्य-प्रदर्शनार्थः। द्वितीयस्तु व्याख्यानमध्यपातीत्यविरोधः। कथंचिदनर्थ-माह। पारिशेष्यादिति। तस्याकृत्स्नतेत्येतदवतार्य्य व्याकरोति। यदेत्या-दिना। अकृत्स्नत्वाभिमानिनो विरुद्धं कृत्स्नत्वमित्याशङ्क्याह। कथमिति।

प्राणः प्रजा चक्षुर्मानुषं वित्तं चक्षुषा हि तद्विन्द-
ते श्रोत्रं दैवᳬ श्रोत्रेण हि तच्छृणोत्यात्मैवास्य

जायादीनां कुटुम्बपतिरात्मेव। तदनुकारित्वाज्जायादिचतुष्टयस्य। एवमिहापि मन आत्मा परिकल्प्यते कृत्स्नतायै। तथा वाग्जाया मनोऽनुवृत्तित्वसामान्याद्वाचो वागिति शब्दचोदनादिलक्षणा मनसा श्रोत्रादिद्वारेण गृह्यते ऽवधार्य्यते प्रयुज्यते चेति मनसो जायेव वाक्॥

ताभ्यञ्च वाङ्मनसाभ्यां जायापतिस्थानीयाभ्यां प्रसूयते प्राण. कर्म्मार्थमिति प्राणः प्रजेव। तत्र प्राणचेष्टादिलक्षणं कर्म्म चक्षुर्दृष्टवित्तसाध्यं भवतीति चक्षुर्मानुषं वित्तम्। तद्द्विविधं वित्तं मानुषमितरच्चातो विशिनष्टि इतरवित्तनिवृत्त्यर्थं मानुषमिति। गवादि हि मनुष्यसम्बन्धि वित्तं चक्षुर्ग्राह्यं कर्म्मसाधनं तस्मात्तत्स्थानीयम्। तेन सम्ब-

विरोधमन्तरेण कात्स्न्यार्थं विभागं दर्शयति। अयमिति। विभागे प्रस्तुते मनसो यजमानत्वकल्पनाया निमित्तमाह। तत्रेति। उक्तमेव व्यनक्ति। यथेति। तथा मनसो यजमानत्वकल्पनावदित्यर्थः। वाचि जायात्वकल्पनायां निमित्तमाह। मन इति। वाचो मनोऽनुवृत्तित्वे स्वरूपकथनपुरःसरं स्फोरयति। वागिति।

प्राणस्य प्रजात्वकल्पनां साधयति। ताभ्याञ्चेति। कथं पुनश्चक्षुर्मानुषं वित्तमित्युच्यते पश्वादिरूपत्वादि तद्वित्याशङ्क्याह। तत्रेति। प्राणादिलये सिद्धे सतीति यावत्। आदिपदेन कायचेष्टा गृह्यते। मानुषमिति विशेषणसार्थक्यं समर्थयते। तद्द्विविधमिति। सम्प्रति चक्षुषो मानुषवित्तत्वं प्रपञ्चयति। गवादीति। तत्पदपरामृष्टमेवार्थं व्याचष्टे।

कर्म्मात्मना हि कर्म्म करोति स एष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिदꣳ सर्व्वं य-

न्धाच्चक्षुर्मानुषं वित्तं। चक्षुषा हि यस्मात्तन्मानुषं वित्तं विन्दते गवाद्युपलभत इत्यर्थः। किं पुनरितरद्वित्तं श्रोत्रं दैवं देवविषयत्वाद्विज्ञानस्य। विज्ञानं दैवं वित्तं तदिह श्रोत्रमेव सम्पत्तिविषयं। कस्माच्छ्रोत्रेण हि यस्मात्तद्दैवं वित्तं विज्ञानं शृणोति। अतः श्रोत्राधीनत्वाद्विज्ञानस्य श्रोत्रमेव तदिति किं पुनरेतैरात्मादिवित्तान्तैरिह नि-र्वर्त्त्यं कर्म्मेत्युच्यते। आत्मैव आत्मेति शरीरमुच्यते। कथं पुनरात्मा कर्म्मस्थानीयोऽस्य कर्म्महेतुत्वात्। कथं कर्म्म-हेतुत्वं आत्मना हि शरीरेण यतः कर्म्म करोति तस्मा-त्कृत्स्नत्वाभिमानिनः। एवं कृत्स्नता सम्पन्ना। यथा वाह्य-जायादिलक्षणा। एवं तस्मात् स एष पाङ्क्तः पञ्चभिर्निर्वृत्तः पाङ्क्तो यज्ञो दर्शनमात्रनिर्वृत्तोऽकर्म्मिणोऽपि कथं पुनरस्य

तेन सम्बन्धादिति। तत्स्थानीयं मानुषवित्तस्थानीयं तेन मानुषेण वित्ते-नेत्येतत्। सम्बन्धमेव साधयति। चक्षुषा हीति। तस्माच्चक्षुर्मानुषं वित्त-मिति शेषः। आकाङ्क्षापूर्व्वमुत्तरवाक्यमुपादत्ते। किं पुनरिति। तद्व्याचष्टे। दैवेति। तत्र हेतुमाह। कस्मादित्यादिना। यजमाना-दिनिर्व्वर्त्त्यं कर्म्म प्रश्नपूर्व्वकं विशदयति। किं पुनरित्यादिना। इहेति सम्पत्तिपक्षोक्तिः। शरीरस्य कर्म्मत्वमप्रसिद्धमिति शङ्कित्वा परिहरति। कथं पुनरिति। अस्येति यजमानोक्तिः हिशब्दार्थो यत इत्यनूद्यते। तस्मात्कृत्स्नतेत्युक्तमुपसंहरति। तस्येति। उक्तरीत्या कृत्स्नत्वे सिद्धे फलितमाह। तस्मादिति। अस्येति दर्शनोक्तिः। पशोः पुरुषस्य च

दिदं किञ्च तदिदꣳसर्व्वमाप्नोति यएवं वेद । ७ ।४।
चतुर्थं ब्राह्मणम् ॥

यत्सप्तान्नानि मेधया तपसाऽजनयत्पिता एक-मस्य साधारणं द्वे देवानभाजयत्त्रीण्यात्मनेऽकुरुत

पञ्चत्वसम्पत्तिमात्रेण यज्ञत्वमुच्यते । यस्माद्दार्ह्योऽपि यज्ञः पशुपुरुषसाध्यः स च पशुः पुरुषश्च पाङ्क्त एव । यथोक्तमनआदिपञ्चत्वयोगात् । तदाह पाङ्क्तः पशुर्गवादिः पङ्क्तः पुरुषः पशुत्वेनास्य विशेषः । पुरुषस्येति पृथक्पुरुष-ग्रहणम् । किं बहुना पाङ्क्तमिदं सर्व्वं कर्मसाधनं फलञ्च यदिदं किञ्च सर्व्वमेवं पाङ्क्तं यज्ञमात्मानं यः सम्पादयति स तदिदं सर्वं जगदात्मत्वेनाप्नोति य एवं वेद ॥ १७ ॥

इति बृहदारण्यके तृतीये प्रपाठके चतुर्थं ब्राह्मणम् । ४ ।

यत्सप्तान्नानि मेधया । अविद्या प्रस्तुता । तत्राविद्वा-नन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति सवस्याश्रमा-पाङ्क्तत्वं तच्छब्दार्थः । पुरुषस्य पशुत्वाविशेषात्पृथग्ग्रहणमयुक्तमित्या-शङ्क्याह । पशुत्वेऽपीति । न केवलं पशुपुरुषयोरेव पाङ्क्तत्वम् किन्तु सर्व-स्येत्याह । किं बहुनेति । तस्मादाध्यात्मिकस्य दर्शनस्य यज्ञत्वं पञ्चत्व-योगादविरुद्धमिति शेषः । सम्पत्तिफलं व्याकरोति सर्वमिति । व्याख्या-तार्थवाक्यमनुवदन् ब्राह्मणमुपसंहरति । य एवं वेदेति । साध्यं साध-नञ्च पाङ्क्तस्तदात्मना ज्ञात्वा तज्ज्ञात्मत्वेनानुसन्दधानस्य तदाप्तिरेव फलं तत्-क्रतुन्यायादित्यर्थः ॥ १७ ॥ तृतीयाध्यायस्य चतुर्थब्राह्मणम् ।

ब्राह्मणान्तरमवतार्य सङ्गतिं वक्तुं वृत्तं कीर्त्तयति । यत्सप्तान्नानी-त्यादिना । तत्र व्यतिक्रान्तब्राह्मणोक्तिः । उपास्तिशब्दितं भेददर्शनम-विद्याकार्य्यमनेनानूद्य न स वेदेति तद्धेतुरविद्या पूर्व्वत्र प्रस्तुतेति यो-

पशुभ्य एकं प्रायच्छत्तस्मिन्सर्व्वं प्रतिष्ठितं यच्च प्राणिति यच्च न कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्व्वदा यो वै तामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन

---

भिमानः कर्म्मकर्त्तव्यतया नियतो जुहोत्यादिकर्म्मभिः कामप्रयुक्तो देवादीनामुपकुर्वन् सर्वेषां भूतानां लोक इत्युक्तम्। यथा च स्वकर्म्मभिरेकैकेन सर्वैर्भूतैरसौ लोको भोज्यत्वेन सृष्टः। एवमसावपि जुहोत्यादिपाङ्क्तकर्मभिः सर्वाणि भूतानि सर्वञ्च जगदात्मभोज्यत्वेनासृजत। एवमेकैकः स्वकर्मविद्यानुरूप्येण सर्वस्य जगतो भोक्ता भोज्यश्च सर्वस्य सर्वः कर्त्ता कार्य्यञ्चेत्यर्थः। एतदेव च विद्याप्रकरणे मधुविद्यायां वक्ष्यामः। सर्वं सर्वस्य कार्य्यमध्वित्यात्मैकत्वविज्ञानार्थम्। यदसौ जुहोतीत्यादिना पाङ्क्तेन काम्येन कर्मणात्मभोज्यत्वेन जगदसृजत विज्ञानेन च

---

जना। स्थायोऽयमित्यत्रोक्तमनुवदति। वर्णाश्रमाभिमान इति। आत्मेदमग्र आसीदित्यादावुक्तं स्मारयति। कामप्रयुक्त इति। वृत्तमनूद्योत्तरग्रन्थमवतारयितुमपेक्षितं पूरयति यथा चेति। स्रष्टृणो जगतश्च परस्परं स्वकर्मोपार्जितत्वमेष्टव्यमन्यथाऽन्योन्यमुपकारकत्वायोगादित्यर्थः। ननु स्रष्टुरेव जगत्कर्तृत्वं ज्ञानक्रियातिशयवत्त्वान्नेतरेषां तदभावादत आह। एवमिति। पूर्वकल्पीयविहितप्रतिषिद्धज्ञानकर्मानुष्ठाता सर्वो जन्तुरुत्तरसर्गस्य पितृत्वेनात्र विवक्षितो न तु प्रजापतिरेवेत्युक्तमर्थं संक्षिप्याह। सर्वस्येति। सर्वस्य मिथो हेतुहेतुमत्त्वे प्रमाणमाह। एतदेवेति। सर्वस्यान्योन्यकार्यकारणत्वोक्त्या कात्स्न्यतत्त्ववचनं कुत्रोपयुज्यते तत्राह।

स देवानपि गच्छति स ऊर्ज्जमुपजीवतीति श्लोकाः ॥ १ ॥

तज्जगत्सर्वं सप्तधा प्रविभज्यमानं कार्य्यकारणत्वेन सप्तान्नान्युच्यन्ते भोज्यत्वात् तेनासौ पिता तेषामन्नानाम्। एतेषामन्नानां स विनियोगानां सूत्रभूताः सङ्क्षेपतः प्रकाशकत्वादिमे मन्त्राः यत्सप्तान्नानि यदजनयदिति क्रियाविशेषणं मेधया प्रज्ञया विज्ञानेन तपसा च कर्मणा ज्ञानकर्मणी एव हि मेधातपःशब्दवाच्ये। तयोः प्रकृतत्वान्नेतरे मेधातपसी अप्रकरणात्। पाङ्क्तं हि कर्म जायादिसाधनं य एवं वेदेति चानन्तरमेव ज्ञानं प्रकृतम्। तस्मान्न प्रसिद्धयोर्मेधातपसोराशङ्का कार्य्या। अतो यानि सप्तान्नानि ज्ञानकर्मभ्यां जनितवान् पिता तानि प्रकाशयिष्याम इति वाक्यशेषः ॥ १ ॥

---

ज्ञात्वैकत्वेति। एवं भूमिकां कृत्वोत्तरब्राह्मणतात्पर्य्यमाह। यदघार्विति। उच्यन्ते। ध्यानार्थमिति शेषः। अन्नत्वे हेतुः। भोज्यत्वादिति। तेन ज्ञानकर्मभ्यां जनकत्वेनेति यावत्। ब्राह्मणमवतार्य्य मन्त्रमवतारयति। तेषामिति। तत्राद्यं मन्त्रभागमादाय व्याचष्टे। यत्सप्तान्नानीति। अजनयदिति क्रियाया विशेषणं यदिति पदम्। तथा च तद्युक्तं पितृत्वादिति शेषः। ग्रन्थार्थधारणशक्तिर्मेधा। कृच्छ्रचान्द्रायणादि तपः। ते कस्मादत्र न गृह्यन्ते तत्राह। ज्ञानकर्म्मणीति। तयोः प्रकृतत्वं प्रकटयति। पाङ्क्तं हीति। इतरयोरप्रकृतत्वं हेतूकृतमनूद्य फलितमाह। तस्मादिति। ज्ञानकर्म्मणोः प्रकृतत्वमुक्तं हेतुमादाय वाक्यं पूरयति। अत इति ॥ १ ॥

यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति-
मेधया हि तपसाऽजनयत्पितैकमस्य साधारण-

---

तत्र मन्त्राणामर्थस्तिरोहितत्वात् प्रायेण दुर्विज्ञेयो भवतीति तदर्थव्याख्यानाय ब्राह्मणं प्रवर्त्तते। तत्र यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति। अस्य कोऽर्थ उच्यत इति। हिशब्देनैव व्याचष्टे प्रसिद्धार्थावद्योतकेन। प्रसिद्धो ह्यस्य मन्त्रस्यार्थ इत्यर्थो यदजनयदिति चानुवादस्वरूपेण मन्त्रेण प्रसिद्धार्थतैव प्रकाशिता। अतो ब्राह्मणमविशङ्कयैवाह। मेधया हि तपसाऽजनयत्पितेति॥ ननु कथं प्रसिद्धतास्यार्थस्येत्युच्यते जायादिकर्मान्तानां लोकफलसाधनानां पितृत्वं तावत् प्रत्यक्षमेवाभिहितञ्च जाया मे

---

यत्सप्तान्नानीत्यादि मन्त्रभागं व्याख्याय ब्राह्मणवाक्यं समुपादाय तात्पर्य्यमाह। तत्रेति। मन्त्रब्राह्मणात्मको ग्रन्थः सप्तम्यर्थः। मेधया हीत्यादि ब्राह्मणमाकाङ्क्षापूर्वकमुत्थापयति। तत्र यदिति। प्रकृतमन्त्रसमुदायः सप्तम्या परामृश्यते। व्याख्यानमेव सङ्गृह्णाति। प्रसिद्धो हीति। न केवलं हिशब्दान्मन्त्रस्य प्रसिद्धार्थत्वं किन्तु मन्त्रस्वरूपालोचनायामपि तत्सिध्यतीत्याह। यदिति। मन्त्रार्थस्य प्रसिद्धत्वे मन्त्रस्यानुगुण्यं हेतूकृत्य फलितमाह। अत इति। तत्प्रसिद्धमुपपादयितुं पृच्छति। नन्विति। साध्यसाधनात्मके जगति यत्पितृत्वमविद्यावतो भाति तत्प्रत्यक्षत्वात्प्रसिद्धमनुभूयते हि जायादि सम्पादयन्नविद्वानित्याह। उच्यत इति। श्रुत्या च प्रागुक्तत्वात्प्रसिद्धमेतदित्याह। अभिहितञ्चेति। यच्च मेधातपोभ्यां स्रष्टृत्वं मन्त्रब्राह्मणयोरुक्तं तदपि प्रसिद्धमेव विद्याकर्म्मणोः पुत्त्राणामभावे लोकत्रयोत्पत्त्यनुपपत्तेरित्याह। तत्र चेति। पूर्व्वोत्तरग्रन्थः सप्तम्यर्थः। पुत्रेणैवायं लोको जय्य इत्यादौ वक्ष्यमाणत्वाच्छास्त्रार्थस्य प्रसि-

[प्र]तीदमेवास्य तत्साधारणमन्नं यदिदमद्यते ।

स्यादित्यादिना । तत्र च दैवं वित्तं विद्या कर्म पुत्रश्च फलभूतानां लोकानां साधनं स्रष्टृत्वं प्रतीत्यभिहितं । वक्ष्यमाणञ्च प्रसिद्धमेव । तस्माद्युक्तं वक्तुं मेधयेत्यादि । एषणा हि फलविषया प्रसिद्धैव च लोके । एषणा च जायादीत्युक्तमेतावान्वै काम इत्यनेन । ब्रह्मविद्याविषये च सर्वैकत्वात्कामानुपपत्तेः । एतेनाशास्त्रीयप्रज्ञातपोभ्यां स्वाभाविकाभ्यां जगत्स्रष्टृत्वमुक्तमेव भवति । स्थावरान्तस्य चानिष्टफलस्य कर्मविज्ञाननिमित्तत्वात् । विवक्षितस्तु शास्त्रीय एव साध्यसाधनभावः । ब्रह्मविद्याविधित्सया तद्वैराग्यस्य विवक्षितत्वात्सर्वो ह्ययं व्यक्ताव्यक्तलक्षणः संसारोऽशुद्धोऽनित्यः

---

ऽतेत्याह । वक्ष्यमाणश्चेति । मन्त्रार्थस्येत्यं प्रसिद्धत्वे मन्त्रस्य प्रसिद्धार्थविषयं ब्राह्मणमुपपन्नमित्युपसंहरति । तस्मादिति । प्रकारान्तरेण मन्त्रार्थस्य प्रसिद्धार्थत्वमाह । एषणा हीति । फलविषयत्वं तस्याः स्वानुभवसिद्धमिति वक्तुं हिशब्दः । तस्या लोकप्रसिद्धत्वेऽपि कथं मन्त्रार्थस्य प्रसिद्धत्वमत आह । एषणा चेति । जायाद्यात्मकस्य कामस्य संसारारम्भकत्ववन्मोक्षेऽपि कामः संसारमारभेत कामत्वाविशेषादित्यतिप्रसङ्गमाशङ्क्याह । ब्रह्मविद्येति । तस्या विषयो मोक्षः । तस्मिन्नद्वितीयत्वाद्रागादिपरिपन्थिनि कामापरपर्यायो रागो नावकल्पते । न हि मिथ्याज्ञाननिदानो रागः सम्यग्ज्ञानाधिगम्ये मोक्षे सम्भवति । श्रद्धा तु तत्र भवति तत्त्वबोधाधीनतया संसारविरोधिनी तन्न संसारानुपपत्तिर्मुक्तावित्यर्थः शास्त्रीयस्य जायादेः संसारहेतुत्वे कर्मादेरशास्त्रीयस्य कथं तद्धेतुत्वमित्याशङ्क्याह । एतेनेति । अविद्योत्थस्य कामस्य संसारहेतुत्वोपदर्शनेनेति

स य एतदुपास्ते न स पाप्मनो व्यावर्त्तते मिश्रꣳह्येतद् ।

---

साध्यसाधनरूपो दुःखोऽविद्याविषय इत्येतस्माद्विरक्तस्य ब्रह्मविद्यारब्धव्येति । तत्रान्नानां विभागेन विनियोग उच्यते । एकमस्य साधारणमिति मन्त्रपदं तस्य व्याख्यानमिदमेवास्य तत्साधारणमन्नमित्युक्तमस्य भोक्तृसमुदायस्य । किं तद्यदिदमद्यते भुज्यते सर्व्वैः प्राणिभिरहन्यहनि तत्साधारणं सर्वभोक्त्रर्थमकल्पयत् पिता सृष्टान्नं ।

स य एतत्साधारणं सर्वप्राणभृत्स्थितिकरं भुज्यमानमन्नमुपास्ते तत्परो भवतीत्यर्थः । उपासनं हि नाम तात्पर्य्यं ॥ दृष्टं लोके गुरुमुपास्ते राजानमुपास्त इत्यादौ ।

---

यावत् । स्वाभाविकाभ्यामविद्याधीनकामप्रयुक्ताभ्यामित्यर्थः । इतश्च तयोर्जगत्सृष्टिप्रयोजकत्वमेष्टव्यमित्याह । स्थावरान्तस्येति । यत्सप्तान्नानीत्यादिमन्त्रपदस्य मेधया हीत्यादि ब्राह्मणस्य चाक्षरोत्थमर्थमुक्त्वा तात्पर्यार्थमाह । विवक्षितस्त्विति । शास्त्रपरवशस्य शास्त्रवशादेव साध्यसाधनभावादशास्त्रीयाद्वै मुख्यसम्भवान्न तस्यात्र विवक्षितत्वमित्यर्थः । शास्त्रीयस्य साध्यसाधनभावस्य विवक्षितत्वे हेतुमाह । ब्रह्मेति । तदेव प्रपञ्चयति । सर्वो हीति । दुःखयतीति दुःखस्तद्धेतुरिति यावत् । प्रकृतमन्त्रब्राह्मणव्याख्यासमाप्ताविति शब्दो निर्विवक्षितार्थप्रदर्शनसमाप्तौ वा । मन्त्रब्राह्मणयोः श्रुत्यर्थाभ्यामर्थमुक्त्वा समनन्तरमन्यमवतारयति । तत्रेति । सप्तविधेऽन्ने सृष्टे सतीति यावत् । व्याख्यानमेव विवृणोति । अस्येत्यादिना ।

साधारणमन्नमसाधारणीकुर्वतो दोषं दर्शयति । तत्परो भवतीति । उक्तं विवृणोति । उपासनं हीति । ब्राह्मणोक्तेऽर्थे मन्त्रं प्रमाणयति ।

तस्माच्छरीरस्थित्यर्थान्नोपभोगप्रधानो नादृष्टार्थकर्म्मप्रधान इत्यर्थः। स एवम्भूतो न पाप्मनोऽधर्म्माद्व्यावर्त्तते न किमुच्यत इत्येतत्। तथाच मन्त्रवर्णो मोघमन्नं विन्दत इत्यादिः। स्मृतिरपि नात्मार्थं पाचयेदन्नं। अतिथिभ्योऽप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः। अन्नादेर्भ्रूणहा मार्ष्टीत्यादिः। कस्मात्पुनः पाप्मनो न व्यावर्त्तते मिश्रं ह्येतत्सर्व्वेषां हि स्वं तदप्रविभक्तं यत्प्राणिभिर्भुज्यते सर्वभोज्यत्वादेव यो मुखे प्रक्षिप्यमाणोऽपि ग्रासः परस्य पीडाकरो दृश्यते ममेदं स्यादिति हि सर्वेषां तत्राशा प्रतिबद्धा। तस्मान्न परमपीडयित्वा ग्रसितुमपि शक्यते। दुष्कृतं हि मनुष्याणामित्यादि। स्मरणाच्च। गृहिणा वैश्वदेवाख्यमन्न-

---

तथा चेति। मोघं विफलं देवाद्यनुपभोग्यमन्नं यदि ज्ञानदुर्बलो लभते तदा सर्वथैव तस्येति साधारणान्नस्यासाधारणीकरणं निन्दितमित्यर्थः। तत्रैव स्मृतीरुदाहरति। स्मृतिरपीति। न वृथा घातयेत्पशुं न चैकःस्वयमश्नीयाद्विधिवर्जं न निर्वपेदिति पादत्रयं द्रष्टव्यम्। इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः। तैर्दत्तानिति शेषः। अनेनाभिशंसितस्तेन प्रयुक्ते राजनि तावन्नान्ततसङ्कर इत्युत्तरपादत्रयं द्रष्टव्यम्। तत्राद्यपादस्यार्थो भ्रूणहा श्रेष्ठब्राह्मणघातकः। यदाहुः। वरिष्ठब्रह्महा चैव भ्रूणहेत्यभिधीयत इति। स्वस्यान्नभक्षणे स्वपापं मार्ष्टि शोधयतीत्यन्नदातुः पापक्षयोक्तिरितरस्यासाधारणीकृतान्नं भुञ्जानस्य पापितेति। अदत्वात्त य एतेभ्यः पूर्वं भुङ्क्तेऽविचक्षणः। स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मन इत्याद्यादिवाक्यमादिशब्दार्थः। आकाङ्क्षापूर्व्वकं हेतुमवतार्य्य व्याकरोति। कस्मादित्यादिना। सर्वं भोज्यत्वं साधयति। यो

महन्यहनि निरूप्यत इति केचित्। तन्न सर्वभोक्तृसाधारणत्वं वैश्वदेवाख्यस्यान्नस्य। तत्र सर्वप्राणभृद्भुज्यमानान्नवत् प्रत्यक्षं नापि यदिदमद्यत इति तद्विषयं वचनमनुकूलं। सर्वप्राणभृद्भुज्यमानान्नान्तःपातित्वाच्च वैश्वदेवाख्यस्य युक्तं श्वचाण्डालाद्यद्यस्यान्नस्य ग्रहणं वैश्वदेवव्यतिरेकेणापि श्वचाण्डालाद्यद्यान्नदर्शनात्तत्र युक्तं यदिदमद्यत इति वचनं। यदि हि तत्र गृह्येत साधारणशब्देन पितां स्रष्टत्वाविनियुक्तत्वे तस्य प्रसज्येयातां। इष्यते हि तत्स्रष्टृत्वं तद्विनियुक्तत्वञ्च सर्वस्यान्नजातस्य। न च वैश्वदेवाख्यं शास्त्रोक्तं कर्म कुर्वतः पाप्मनोऽविनिवृत्तिर्युक्ता॥

---

सुख इति। परस्य स्वमार्जारादेरिति यावत्। पीडाकरत्वे हेतुमाह। ममेदमिति। प्रागुक्तादृष्टफलमाचष्टे। तस्मादिति। साधारणमन्नमसाधारणीकुर्वाणस्य पापानिवृत्तिरित्यत्र हेत्वन्तरमाह। दुष्कृतं हीति। यदा हि मनुष्याणां दुष्कृतमन्नमाश्रित्य तिष्ठति तदा तदसाधारणीकुर्वतो महत्तरं पापं भवतीत्यर्थः। एकमस्येत्यादिमन्त्रब्राह्मणयोः स्वपक्षमुक्त्वा भर्तृप्रपञ्चपक्षमाह। गृहिणेति। यदन्नं गृहिणा प्रत्यहमग्नौ वैश्वदेवाख्यं निर्वर्त्यते तत्साधारणमिति भर्तृप्रपञ्चैरुक्तमित्यर्थः। साधारणपदानुपपत्तेर्न युक्तमिदं व्याख्यानमिति दूषयति।। तन्नेति। वैश्वदेवस्य साधारणान्नं प्राह्यमित्याह। सर्वेति। वैश्वदेवपक्षेऽपीतरपक्षदृष्टिः स्यादिति चेन्नेत्याह। वैश्वदेवेति। यत्तु परपक्षे यदिदमद्यत इति वचो नानुकूलमिति तन्नास्मत्पक्षेऽस्तीत्याह। तत्रेति। प्रत्यक्षं साधारणान्नं सप्तम्यर्थः। विपक्षे दोषमाह। यदि हीति। प्रसङ्गस्येष्टत्वं निराचष्टे। इष्यते हीति। परपक्षे वाक्यशेषविरोधं दोषान्तरमाह। न चेति।

देवानभाजयदिति हुतञ्च प्रहुतञ्च तद्देवेभ्यो जुह्वति च प्रजुह्वत्यथो आहुर्दर्शपौर्णमासाविति।

न च तस्य प्रतिषेधोऽस्ति। न च मत्स्यबन्धनादिकर्मवत् स्वभावजुगुप्सितमेतच्छिष्टनिर्वर्त्यत्वादकरणे च प्रत्यवायश्रवणादितरत्र च प्रत्यवायोपपत्तेः। अहमन्नमन्नमदन्तमद्मीति मन्त्रवर्णात्। द्वे देवानभाजयदिति मन्त्रपदं। ये द्वे अन्ने सृष्ट्वा देवानभाजयत्के ते द्वे इत्युच्येते। हुतञ्च प्रहुतञ्च। हुत-मित्यग्नौ हवनं। प्रहुतं हुत्वा बलिहरणं। यस्माद्द्वे एतेऽन्ने हुतप्रहुते देवानभाजयत्पिता। तस्मादेतर्ह्यपि गृहिणः काले देवेभ्यो जुह्वति देवेभ्य इदमन्नमस्माभिर्दीयमान-मिति मन्वानाः प्र च जुह्वति प्रजुह्वति च हुत्वा च बलिहर-णञ्च कुर्वत इत्यर्थः। अथोऽप्यन्ये आहुर्द्वेऽन्ने पित्रा देवेभ्यः

श्येनादितुल्यत्वं तस्य व्यावर्त्तयति। न च तस्येति। अनिषिद्ध-स्यापि तस्य स्वभावजुगुप्सितत्वात्तदनुष्ठायिनः पापानिवृत्तिरित्याशङ्क्याह। न चेति। अवश्यं याति तिर्य्यक्त्वं जग्ध्वा चैवाहुतं हविरित्यकरणे वैश्व-देवस्य प्रत्यवायश्रवणाच्च तदनुष्ठायिनो न पाप्मलेशोऽस्तीत्याह। अकरणे चेति। सर्व्वसाधारणान्नपक्षे तु तत्परस्य निन्दावचनमुपपद्यते तेन तदेव ग्राह्यमित्याह। इतरत्रेति। तत्रैव श्रुत्यन्तरं संवादयति। अहमिति। अर्थिभ्योऽविभज्यान्नमदत्वा स्वयमेव भुञ्जानं नरमहमन्नमेव भक्षयामि तम-नर्थभाजं करोमीत्यर्थः। मन्त्रान्तरमादायाकाङ्क्षाद्वारा ब्राह्मणमुत्थाप्य व्या-चष्टे द्वे देवानित्यादिना। हुतप्रहुतयोर्देवान्नत्वे सम्प्रति तमनुष्ठानमनु-कूलयति। यस्मादिति। पक्षान्तरमुपन्यस्य व्याकरोति। अथो इति। यदि दर्शपूर्णमासौ देवान्ने कथं तर्हि हुतप्रहुते इति पक्षस्य प्राप्तिस्त-त्राह। द्वित्वेति। तर्हि द्वे देवानिति। श्रुतद्वित्वस्य हुतप्रहुतयोरपि सम्भ-

प्रत्ते न हुतप्रहुते। किं तर्हि दर्शपूर्णमासाविति। द्वित्वश्रवणाविशेषादन्यत्र प्रसिद्धत्वाच्च हुतप्रहुते इति प्रथमः पक्षः। यद्यपि द्वित्वं हुतप्रहूतयोः सम्भवति तथापि श्रौतयोरेव तु दर्शपूर्णमासयोर्दैवान्नत्वं प्रसिद्धतरं मन्त्रप्रकाशितत्वात्। गुणप्रधानप्राप्तौ च प्रधाने प्रथमतरावगतिः। दर्शपूर्णमासयोश्च प्राधान्यं हुतप्रहुतापेक्षया। तस्मात्तयोरेव ग्रहणं युक्तं द्वे देवानभाजयदिति। यस्माद्देवाथमेते पित्रा क्लृप्ते दर्शपूर्णमासाख्ये ऽन्ने तस्मात्तयोर्दैवार्थत्वाविघाताया न्तीत्युच्यते। मनुष्याश्च पशवश्च यस्मात्ते नैवान्नेन वर्त्तन्ते

---

मकम्। तत्र कश्चिच्छब्दस्तूचितां पाठकप्रसिद्धिमाह। शातपथीति। काम्येवान्न प्रथमपक्षस्य पूर्वपक्षत्वमत आह। यद्यपीति। प्रसिद्धतरत्वे हेतुमाह। मन्त्रेति। अग्नये जुष्टं निर्वपाम्यग्निरिदं हविरजुषतेत्यादिमन्त्रेषु दर्शपूर्णमासयोर्दैवान्नत्वस्य प्रतिपन्नत्वादिति यावत्। इतश्च दर्शपूर्णमासयोरेव देवान्नत्वमिति वक्तुं सामान्यन्यायमाह। गुणेति। गुणप्रधानयोरेकत्र साधारणशब्दात्प्राप्तौ सत्यां प्रथमतरं प्रधाने भवत्यवगतिर्गौणमुख्ययोर्मुख्ये कार्य्यसम्प्रत्यय इति न्यायादित्यर्थः। अस्त्वेवं प्रस्तुते किं जातं तदाह। दर्शपूर्णमासयोश्चेति। तयोर्निरपेक्षश्रुतिदृष्टतया सापेक्षस्मृतिसिद्धहुतादपेक्षया प्राधान्यं सिद्धम्। तथा च प्रधानयोस्तयोरितरयोश्च गुणयोरेकत्र प्राप्तौ प्रधानयोरेव द्वे देवानिति मन्त्रपदं युक्तिमानित्यर्थः। दर्शपूर्णमासयोर्दैवान्नत्वे समनन्तरनिषेधवाक्यमनुकूलयति। यस्मादिति। इष्टियजनशीलो न स्यादिति सम्बन्धः। ननु तत्तदयजनशीलत्वाभावे कुतो दर्शपूर्णमासयोर्दैवार्थत्वम्। न हि तावन्निष्पन्नौ तदर्थावित्याशङ्क्याह। इष्टिशब्देनेति। किं पुनरस्मिन्वाक्ये काम्येष्टिविषयत्वमितीष्टिशब्दस्येत्यत्र निया-

तस्मान्नेष्टियाजुकः स्यात्पशुभ्य एकं प्रायच्छ-दिति तत्पयः । पयो ह्येवाग्रे मनुष्याश्च पश-

---

नेष्टियाजुक इष्टियजनशीलः । इष्टिशब्देन किल काम्या इष्टयः शातपथीयं प्रसिद्धिस्ताच्छील्यप्रत्ययप्रयोगात्काम्ये-ष्टियजनप्रधानो न स्यादित्यर्थः ।

पशुभ्य एकं प्रायच्छदिति यत् पशुभ्य एकं प्रायच्छ-त्पिता किं पुनस्तदन्नं तत्पयः । कथं पुनरवगम्यते पशवो-ऽस्यान्नस्य स्वामिन इत्यत आह पयो ह्यग्रे प्रथमं यस्मान्मनुष्या-श्च पशवश्च पय एवोपजीवन्तीत्युचितं हि तेषां तदन्नमन्यथा कथं तदेवाग्रे नियमेनोपजीवेयुः । कथमग्रे तदेवोपजीव-

---

ष्टीनामनुष्ठानन्निषेधे स्वर्गकामवाक्यविरोधः स्यादितयाशङ्क्याह । ताच्छी-ल्येति । तत्र विहितस्योकञ्प्रत्ययस्यात्र प्रयोगात्काम्येष्टियजनप्रधानत्वमिह निषिध्यते । तच्च देवप्रधानयोर्दर्शपूर्णमासयोरवश्यानुष्ठेयत्वसिद्ध्यर्थं न तु ताः स्वतो निषिध्यन्ते तन्न स्वर्गकामवाक्यविरोधोऽस्तीत्यर्थः ।

पश्वन्नविषयमन्त्रपदमादाय प्रश्नपूर्वकं तदर्थं कथयति । पशुभ्य इति । पशूनां पयोऽन्नमित्येतदुपपादयितुं पृच्छति । कथं पुनरिति । पयो हीति प्रतीकमुपादाय व्याकरोति । अग्र इति । पशवो द्विपा-दश्चतुष्पादश्चेति श्रुतिमाश्रित्य मनुष्याश्चेत्युक्तम् । उचितं हीत्यत्र हि-शब्दस्तस्मादर्थे । यस्मादित्युपक्रमादौचित्यं व्यतिरेकद्वारा साधयति । अन्य-थेति । नियमेन प्रथमं पशूनां तदुपजीवनमसम्प्रतिपन्नमिति शङ्कते । कथ-मिति मनुष्यविषये वा प्रश्नस्तदितरपशुविषये वेति पृच्छति । उच्यत इति । तत्रा-द्यमनुभूयावष्टम्भेन प्रत्याचष्टे । मनुष्याश्चेति । चकारो मनुष्यमात्रसङ्ग्रहार्थः ।

यश्चोपजीवन्ति तस्मात् कुमारं जातं घृतं वै वाग्रे
प्रतिलेहयन्ति स्तनं वानुधापयन्त्यथ वत्सं जात-

---

ऽयत्वेऽपि यथा पित्राऽऽदौ विनियोगः कृतस्तस्मात्कुमारं
बालं जातं घृतं वा त्रैवर्णिका जातकर्मणि जातरूपसंयुक्तं
प्रतिलेहयन्ति प्राशयन्ति। स्तनं वानुधापयन्ति पश्चात्पा-
ययन्ति। यथासम्भवमन्येषां स्तनमेवाग्रे धापयन्ति मनु-
ष्येभ्योऽन्येषां पशूनां। अथ वत्सं जातमाहुः। कियत्प्रमाणो
वत्स इत्येवं पृष्टाः सन्तोऽतृणाद इति नाद्यापि तृणम-
त्त्यतीव बालः पयसैवाद्यापि वर्त्तत इत्यर्थः। यच्चाग्रे जात-
कर्मादौ घृतमुपजीवन्ति यच्चेतरे पय एव तत्सर्व्वथापि
पय एवोपजीवन्ति घृतस्यापि पयोविकारत्वात्पयस्त्वमेव

तेनैव पयसैवेति यावत्। घृतं वेतिवाशब्दो वक्ष्यमाणविकल्पद्योतकः।
जातरूपं हेमं त्रैवर्णिकेभ्यो ऽन्येषां जातकर्म्माभावाद्योग्यतामनतिक्रम्य
स्तनमेव जातं कुमारं प्रथमं पाययन्तीत्याह। यथासम्भवमिति। यद्वा
तेषां जातकर्म्मानधिकृतानां जातं कुमारं यथासम्भवं घृतं वा स्तनं वा
प्रथमं पाययन्तीति यावत्। पशुविषयं प्रश्नं पश्वश्चेति सूचितं समा-
धानं प्रत्याह। स्तनमेवेति। पशूनां जातवत्समिति सम्बन्धः। पशूनां
पयोऽन्नमित्यत्र लोकप्रसिद्धं प्रमाणयति। अथेति। द्विपात्सम्बधिकार-
विच्छेदार्थो शब्दः प्रतिवचनं व्याचष्टे। नाद्यापीति। नन्वेषामपि घृतोप-
जीवित्वमुपलभ्यते पयस्तेनोपजीवन्ति घृतपयसोर्भेदादतः पश्वन्नत्वं पयसो
भागाविद्धमत आह। यच्चेति। ननु घृतमुपजीवन्तोऽपि पय एवोपजीव-
न्तीत्ययुक्तं तद्भेदस्योक्तत्वात्तत्राह। घृतस्यापीति। मन्त्रपाठक्रममतिक्रम्य
पश्वन्ने व्याख्याते प्रत्यवतिष्ठते। कस्मादिति। हे देवानभाजयदिति व्याख्या-

मांद्दुरन्तृणाद् इति तस्मिन् सर्व्वं प्रतिष्ठितं। यच्च

कस्मात्पुरः सप्तमं सत् पञ्चमं चतुर्थत्वेन व्याख्यायते कर्म्म-साधनत्वात्कर्म हि पयः साधनाश्रयमग्निहोत्रादि तच्च कर्मसाधनं वित्तसाध्यं वक्ष्यमाणस्यान्नत्रयस्य साध्यस्य। यथा दर्शपूर्णमासौ पूर्व्वोक्तावन्ने। अतः कर्मपक्षत्वात्कर्मणा सह पिण्डीकृत्योपदेशः। साधनत्वाविशेषादर्थसम्बन्धादानन्तर्य्यमकारणमिति च। व्याख्यानप्रतिपत्तिसौकर्य्याच्च। सुखं हि नैरन्तर्य्येण व्याख्यातुं शक्यन्तेऽन्नानि व्याख्यातानि च सुखं प्रतीयन्ते तस्मिन् सर्व्वं प्रतिष्ठितं। यच्च प्राणिति यच्च नेत्यस्य कोऽर्थ इत्युच्यते। तस्मिन्पश्वन्ने पयसि सर्वमध्यात्माधिभूता-

न्ने साधिते साधनत्वाविशेषात्तयोऽपि बुद्धिस्थमित्यर्थमाश्रित्य परिहरति। कर्म्मेति। तदेव स्फुटयति। कर्म्महीति। यद्यपि पयोरूपं साधनमाश्रित्य कर्म्म प्रवृत्तं तथापि दर्शपूर्णमासानन्तर्य्यं कथं पयसा सिध्यति तत्राह। तच्चेति। वित्तेन पयसा साध्यं कर्म्मान्नत्रयस्य साधनमिति। अत्र दृष्टान्तमाह। यथेति। पूर्व्वोक्तौ दर्शपूर्णमासौ द्वे देवान्ने वक्ष्यमाणस्यान्नत्रयस्य यथा साधनं तथा पयसोऽप्यग्निहोत्रादिद्वारा तत्साधनत्वात्कर्मकोटिनिविष्टत्वाद्द्वाख्यामानन्तर्य्यं पयोव्याख्यानस्य युक्तमित्यर्थः। पाठक्रमस्तर्हि कथमित्याशङ्क्यार्थक्रमेण तद्बाधमभिप्रेत्याह। साधनत्वेति। आनन्तर्य्यं पाठक्रमः। अकारणत्वमविवक्षितम्। पाठक्रमादर्थक्रमस्य बलीयस्त्वात्तेनेतरस्य बाध्यत्वमित्येतत्प्रथमे तन्त्रे स्थितमित्यभिप्रेत्याह। इति चेति। पश्वन्नस्य चतुर्थत्वेन व्याख्याने हेत्वन्तरमाह। व्याख्यान इति। व्याख्यानसौकर्य्यं साधयति। सुखं हीति। प्रतिपत्तिसौकर्य्यं प्रकटयति। व्याख्यातानीति। चत्वारि साधनानि त्रीणि साध्यानीति विभज्योक्तौ वक्तृश्रोत्रोः सौकर्य्येण धीर्भवति ततश्च

प्राणिति यच्च नेति पयसि ह्येदꣳ सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न।

धिदैवलक्षणं कृत्स्नं जगत्प्रतिष्ठितं। यच्च प्राणिति प्राणचेष्टावद्यच्च न स्थावरं शैलादि। तत्र च हिशब्देनैव प्रसिद्धत्वद्योतकेन व्याख्यातं। कथं पयो द्रव्यस्य सर्वप्रतिष्ठात्वं कारणत्वोपपत्तेः। कारणत्वञ्चाग्निहोत्रादिकर्मसमवायित्वमग्निहोत्राद्याहुतिविपरिणामात्मकञ्च। जगत्कृत्स्नमिति श्रुतिस्मृतिवादाः शतशो व्यवस्थिताः। अतो युक्तमेव हिशब्देन व्याख्यातुं॥

पाठक्रमातिक्रमः श्रेयानित्यर्थः। पञ्चमस्य सर्व्वाधिष्ठानत्वियं मन्त्रमन्तार्थं प्रश्नपूर्व्वकं तदीयं ब्राह्मणं व्याचष्टे। तस्मिन्नित्यादिना। मन्त्राद्भेदो ब्राह्मणेन प्रतिभातीत्याशङ्क्याह। तत्रेति। पयसि हीति ब्राह्मणे हिशब्दस्य प्रसिद्धत्वद्योतकमस्ति। तेन च हेतुना हिशब्देन तस्मिन्नित्यादिकं मन्त्रपदं व्याख्यातमिति योजना। मन्त्रार्थस्य लोकप्रसिद्धभावात्र प्रसिद्धत्वद्योतिना हिशब्देन व्याख्यातुं न युक्तमिति शङ्कते। कथमिति। कार्य्यं कारणे प्रतिष्ठितमिति न्यायेन वैदिकीं प्रसिद्धिमादाय समाधत्ते। कारणत्वेति। पयसो द्रवद्रव्यमात्रस्य कुतः सर्व्वजगत्कारणत्वमित्याशङ्क्याह। कारणत्वञ्चेति। तत्समवायित्वेऽपि कुतो जगतः कारणतेत्याशङ्क्याह। अग्निहोत्रादिति। ते वा एते आहुती हुते उत्क्रामतस्तेऽन्तरिक्षमाविशत इत्यादयः श्रुतिवादा ह्युपरिजन्यव्रीह्यादिक्रमेणाग्निहोत्राहुत्योर्गर्भाकारप्राप्तिन्दर्शयति। अग्नौ प्रास्ता हुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इत्यादिस्मृतिवादाः। पयसि हीत्यादि ब्राह्मणमुपसंहरति। अत इति। पयसः सर्व्वजगदाधारत्वस्य श्रुतिस्मृतिप्रसिद्धत्वादिति यावत्।

तद्यदिदमाहुः संवत्सरं पयसा जुह्वदप पुनर्मृत्युं जयतीति न तथा विद्याद्यदहरेव जुहोति

यत्तद्ब्राह्मणान्तरेष्विदमाहुः संवत्सरं पयसा जुह्वदपपुनर्मृत्युं जयतीति संवत्सरेण किल त्रीणि षष्टिशतान्यह्नां तेषु च आहुतीनां सप्त च शतानि विंशतिश्चेति याजुष्मतीरिष्टका अभिसम्पद्यमानाः संवत्सरस्य चाहोरात्राणि संवत्सरमग्निं प्रजापतिमाप्नुवन्त्येवं कृत्वा संवत्सरं जुह्वदपजयति पुनर्मृत्युमितः प्रेत्य देवेषु सम्भूतः पुनर्न म्रियत इत्यर्थ इत्येवं ब्राह्मणवादा आहुर्न तथा विद्यान्न तथा द्रष्टव्यं यदहरेव जुहोति तदहः पुनर्मृत्युमपजयति न संवत्सराभ्यासमपेक्षत एवं विद्वान् सन् यदुक्तं पयसि हीदं सर्वं प्रतिष्ठितं पय आहुतिविपरिणामात्मकत्वात्सर्वस्येति। तदेकेनैवाह्ना जगदात्मत्वं प्रतिपद्यते

सर्वं पयसि प्रतिष्ठितमिति विधित्सितदर्शनस्तुतये शाखान्तरीयमतं निन्दितुमुद्भावयति। यत्तदिति। न केवलं कर्मणा मृत्युजयः किन्तु दर्शनसहितेनेति दर्शयितुमग्निहोत्राहुतिषु सङ्ख्यां कथयति। संवत्सरेणेति। उक्ताहुतिसङ्ख्यायां संवत्सरावच्छिन्नायामग्निहोत्रविदां सम्प्रतिपत्त्यर्थं किलेत्युक्तम्। ननु प्रत्यहं सायं प्रातश्चेत्याहुती द्वे विद्येते तत्कथमाहुतीनां षष्ठ्यधिकानि त्रीणि शतानि संवत्सरेण भवन्ति तत्राह। सप्त चेति। प्रत्येकमहोरात्रावच्छिन्नाहुतिप्रयोगाणामेकस्मिन् संवत्सरे पूर्व्वोक्ता सङ्ख्या तत्रैव प्रयोगाङ्गानां विंशत्यधिका सप्तशतरूपा सङ्ख्येति सिद्धमित्यर्थः। आहुतीनां सङ्ख्यामुक्त्वा तासु याजुष्मतीनामिष्टकानां दृष्टिमाह। याजुष्मतीरिति। तासामपि षष्ठ्यधिकानि त्रीणि शतानि सङ्ख्या

**स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत नाहास्योद्ग्रहणायेव स्यात् ।**

---

तु जात्यन्तरम् । विषयस्यैव स्वात्मग्राहकत्वेन संस्थानान्तरं करणं नाम । यथा रूपविशेषस्यैव संस्थानं प्रदीपः करणं सर्व्वरूपप्रकाशने । एवं सर्वविषयविशेषाणामेव स्वात्मविशेषप्रकाशकत्वेन संस्थानान्तराणि करणानि प्रदीपवत् । तस्मान्न करणानां पृथक्प्रलये यत्नः कार्यो विषयसामान्यात्मकत्वाद्विषयप्रलयेनैव प्रलयः सिद्धो भवति करणानामिति ॥ ११ ॥

तत्रेदं सर्वं यदयमात्मेति प्रतिज्ञातं तत्र हेतुरभिहित आत्मसामान्यत्वमात्मजत्वमात्मप्रलयत्वञ्च । तस्मादुत्पत्तिस्थितिप्रलयकालेषु प्रज्ञानव्यतिरेकेणाभावात्प्रज्ञानं ब्रह्मैवात्मैवेदं सर्वमिति । प्रतिज्ञातं यत्तत्तर्कतः साधितं स्वाभाविकोऽयं प्रलय

---

प्रकटयति । किन्त्विति । करणस्य विषयसाजात्यं विवृणोति । विषयस्यैवेति । किमत्र प्रमाणमित्याशङ्क्यानुमानं सूचयति । प्रदीपवदिति । चक्षुस्तैजसं रूपादिषु मध्ये रूपस्यैव व्यञ्जकत्वात्सम्प्रतिपन्नवदित्यादीन्यनुमानानि शास्त्रप्रकाशिकायामधिगन्तव्यानि । करणानां विषयसाजात्ये फलितमाह । तस्मादिति । पृथग्विषयप्रलयादिति शेषः । एकायनप्रक्रियासमाप्ताविति शब्दः ॥ ११ ॥

स यथा सैन्धवखिल्यादेः सम्बन्धं वक्तुं वृत्तं कीर्त्तयति । तत्रेत्यादिना । पूर्व्वः सन्दर्भस्तत्रेत्युच्यते । प्रतिज्ञातेऽर्थे पूर्व्वोक्तं हेतुमनूद्य साध्यसिद्धिं फलं दर्शयति । तस्मादिति । उक्तहेतुयोक्तं ब्रह्मैव सर्व्वमिदं जगदिति यत्प्रतिज्ञातमिदं सर्व्वं यदयमात्मेति तत्पूर्व्वोक्तदृष्टान्तप्रबन्धरूप-

इति पौराणिका वदन्ति। यस्तु बुद्धिपूर्व्वकः प्रलयो ब्रह्मविदां ब्रह्मविद्यानिमित्तोऽयमात्यन्तिक इत्याचक्षते अविद्यानिरोधद्वारेण यो भवति तदर्थोऽयं विशेषारम्भः। तत्र दृष्टान्त उपादीयते स यथेति। सैन्धवखिल्यः सिन्धोर्विकारः सैन्धवः सिन्धुशब्देनोदकमभिधीयते स्यन्दनात्सिन्धुरुदकं तद्विकारस्तत्र भवो वा सैन्धवश्चासौ खिल्यश्चेति सैन्धवखिल्यः खिल एव खिल्यः स्वार्थे यत्प्रत्ययः स्वार्थे उदके सिन्धौ स्वयोनौ प्रास्तः प्रक्षिप्तः उदकमेव विलीयमानमनुविलीयेत। यत्तद्भौमतेजसः सम्पर्कात्काठिन्यप्राप्तिः। खिल्यस्य स्वयोनिसम्पर्कादपगच्छति। तदुदकस्य विलयनं तदनु सैन्धवखिल्यो विलीयत इत्युच्यते तदेतदाह उदकमेवानुविलीयेतेति। न ह नैवास्य खिल्यस्योद्ग्रहणायोद्धृत्य पूर्व्ववद्ग्रहणाय ग्रहीतुं नैव समर्थः कश्चित्स्यात्सुनिपुणोऽपि। इव शब्दोऽनर्थकः। ग्रहणाय नैव समर्थः।

---

तर्कवशात्साधितमिति योजना। उत्तरवाक्यस्य विषयपरिशेषार्थमुक्तप्रलये पौराणिकसम्मतिमाह। स्वाभाविक इति। कार्य्याणां प्रकृतावस्थितत्वं स्वाभाविकत्वम्। प्रलयान्तरेऽपि तेषां सम्मतिं सङ्गिरते। यस्त्विति। द्वितीयप्रलयमधिकृत्यानन्तरग्रन्थमवतारयति। अविद्येति। तत्रेत्यात्यन्तिकप्रलयोक्तिः। उदकं विलीयमानमित्युक्तम्। काठिन्यविलयेऽपि तद्भावादर्शनादित्याशङ्क्याह। यत इति। न हेति प्रतीकमादाय व्याचष्टे। नैवेति।

यतो यतस्त्वाददीत लवणमेवैवं वा अर इदं महद्भूतमनन्तमपारं विज्ञानघन एव ।

---

कस्माद्यतो यतो यस्माद्यस्माद्देशात्तदुदकमाददीत गृहीत्वा स्वादयेल्लवणास्वादमेव तदुदकं न तु खिल्यभावो यथायं दृष्टान्त एवमेव तु अरे मैत्रेयि इदं परमात्माख्यं महद्भूतं यस्मान्महतो भूतादविद्यया परिच्छिन्ना सती कार्य्यकरणोपाधिसम्बन्धात् खिल्यभावमापन्नासि मर्त्त्या जन्ममरणाशनायापिपासादिसंसारधर्म्मवत्यसि नामरूपकार्य्यात्मिकामुष्यान्वयाहमिति । स खिल्यभावस्तवकार्य्यकरणभूतोपाधिसम्पर्कभ्रान्तिजनितो महति भूते स्वयोनौ महासमुद्रस्थानीये परमात्मन्यजरेऽमरेऽभये शुद्धे सैन्धवघनवदेकरसे प्रज्ञानघनेऽनन्तेऽपारे निरन्तरेऽविद्याजनितभ्रान्तिभेदवर्जिते प्रवेशितः । तस्मिन् प्रविष्टे

---

अन्वयप्रदर्शनार्थं नैवेति पुनरुक्तम् । महद्भूतमेकमद्वैतमित्युत्तरत्र सम्बन्धः । अस्यार्थस्य सर्व्वोपनिषत्प्रसिद्धत्वप्रदर्शनार्थो वैशब्दः । इदं महद्भूतमित्यत्रेदंशब्दार्थं विशदयति । यस्मादित्यादिना । तदिदं परमात्माख्यं महद्भूतमिति पूर्व्वेण सम्बन्धः । खिल्यभावापत्तिं कार्य्यं कथयति । मर्त्त्येत्यादिना । कोऽसौ खिल्यभावोऽभिप्रेतस्तत्राह । नामरूपेति । कार्य्यकरणसङ्घाते तादात्म्याभिमानद्वारा जात्यभिमानोऽत्र खिल्यभाव इति । इति शब्देनाभिमानो लक्ष्यते । यथोक्ते खिल्यभावे सति कुतो भूतस्य महत्त्वमित्याशङ्क्याह । स खिल्यभाव इति । खिल्यभावः स्वपदार्थः । परस्य परिशुद्धत्वार्थमजरादिविशेषणानि । केन रूपेणैकरसत्वं तदाह । प्रज्ञा-

स्वयोनिग्रस्ते खिल्यभावेऽविद्याकृते भेदभावे प्रणाशिते इदमेकमद्वैतं महद्भूतं महच्च तद्भूतञ्च महद्भूतं सर्व्वमहत्तरत्वात्तदाकाशादिकारणत्वाच्च भूतं त्रिष्वपि कालेषु स्वरूपाव्यभिचारात्सर्वदैव परं निष्पन्नमिति। त्रैकालिको निष्ठाप्रत्ययः। अथवा भूतशब्दः परमार्थवाची महच्च पारमार्थिकञ्चेत्यर्थः। लौकिकन्तु यद्यपि महद्भवति स्वप्नमायाकृतं हि महदादि पर्व्वतोपमं न परमार्थवस्तु। अतो विशिनष्टि इदञ्च महच्च तद्भूतञ्चेति। अनन्तं नास्यान्तो विद्यत इत्यनन्तम्। कदाचिदापेक्षिकं स्यादित्यतो विशिनष्ट्यपारमिति। विज्ञप्तिर्विज्ञानं विज्ञानञ्च तद्घनश्चेति विज्ञानघनः। घनशब्दो जात्यन्तरप्रतिषेधार्थः। यथा सुवर्णघनोऽयोघन इति। एव शब्दोऽवधारणार्थः। नान्यज्जात्यन्तरमन्तराले विद्यत इत्यर्थः।

---

नेति। तस्यापरिच्छिन्नत्वमाह। अनन्त इति। तस्य सापेक्षत्वं वारयति। अपार इति। प्रतिभासस्थाने भेदे कथं यथोक्तं तत्त्वमित्याशङ्क्याह। अविद्येति भवतु यथोक्ते तत्त्वे खिल्यभावस्य प्रवेशस्तथापि किं स्यादित्यत आह। तस्मिन्निति। महत्त्वं साधयति। सर्व्वेति। भूतत्वमुपपादयति। त्रिष्वपीति। महदित्युक्ते पारमार्थिकञ्चेति विशेषणं किमर्थमित्याशङ्क्याह। लौकिकमिति। जाग्रत्कालीनं परिदृश्यमानं हि महदादि महद्यद्यपि भवति तथापि स्वप्नमायादिसमत्वान्न तत्परमार्थवस्तु। न हि दृश्यं जडं इन्द्रजालादेर्विशिष्यतेऽतो लौकिकान्महतो ब्रह्म व्यावर्त्तयितुं विशेषणमित्यर्थः। आपेक्षिकं स्यादानन्त्यमिति शेषः।

एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति

---

यदीदमेकमद्वैतं परमार्थतः स्वच्छं संसारदुःखासम्पृक्तम्। किं निमित्तोऽयं खिल्यभावः। आत्मनो जातो मृतः सुखी दुःखाहं ममेत्येवमादिलक्षणोऽनेकसंसारधर्म्मोपद्रुत इत्युच्यते। एतेभ्यो भूतेभ्यो यान्येतानि कार्य्यकरणविषयाकारपरिणतानि नामरूपात्मकानि सलिलफेनबुद्बुदोपमानि स्वच्छस्य परमात्मनः सलिलोपमस्य येषां विषयपर्य्यन्तानां प्रज्ञानघने ब्रह्मणि परमार्थविवेकज्ञानेन प्रविलापनमुक्तं नदीसमुद्रवत्। एतेभ्यो हेतुभूतेभ्यो भूतेभ्यः सत्यशब्दवाच्येभ्यः समुत्थाय सैन्धवखिल्यवद्यथाऽद्भ्यः सूर्य्यचन्द्रादिप्रतिबिम्बो यथा वा स्वच्छस्य स्फटिकस्यालक्तकाद्युपाधिभ्यो रक्तादिभावः एवम्। कार्य्यकरणभूतभूतोपाधिभ्यो विशेषात्मखिल्यभावेन सम्यगुत्थाय

---

अवधारणरूपमर्थमेव स्फोरयति। नान्यदिति। एतेभ्यो भूतेभ्यः समुत्थायेत्यादि समनन्तरवाक्यव्यावर्त्त्यामाशङ्कामाह। यदिदमिति। वस्तुतः सिद्धत्वे किं सिध्यन्ति तदाह। संसारेति। तर्हि तस्मिंश्छिन्नत्वाभावान्न तस्य खिल्यत्वमिति मत्वाह। किं निमित्त इति। खिल्यभावमेव विशिनष्टि। जात इति। अनेकः संसाररूपो धर्म्मोऽशनायापिपासादिस्तेनोपद्रुतो दूषित इति यावत्। खिल्यभावे निमित्तं दर्शयन्नुत्तरमाह। उच्यत इति। एतच्छब्दार्थं व्याकरोति। यानीति। स्वच्छस्य परमात्मनः कार्य्यकरणविषयाकारेण परिणतानीति यावत्। तानि व्यवहारसिद्ध्यर्थं विशिनष्टि। नामरूपात्मकानीति। तेषामतिदुर्ब्बलत्वं सूचयति। सलिलेति। स्वच्छत्वे दृष्टान्तमाह। सलिलोपमस्येति।

**न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १२ ॥**

---

येभ्यो भूतेभ्यो उत्थितस्तानि यदा कार्य्यकरणविषयाकारपरिणतानि भूतान्यात्मनो विशेषात्मखिल्यहेतुभूतानि शास्त्राचार्य्योपदेशेन ब्रह्मविद्यया नदीसमुद्रवत्प्रविलापितानि विनश्यन्ति सलिलफेनबुद्बुदादिवत्। तेषु विनश्यत्सु स एव विशेषात्मखिल्यभावो विनश्यति। यथोदकालक्तकादिहेत्वपनये सूर्य्यचन्द्रस्फटिकादिप्रतिबिम्बो विनश्यति चन्द्रादिस्वरूपमेव परमार्थतो व्यवतिष्ठते। तद्वत्प्रज्ञानघनमनन्तमपारं स्वच्छं व्यवतिष्ठते। न तत्र प्रेत्यविशेषसञ्ज्ञास्ति। कार्य्यकरणसङ्घातेभ्यो विमुक्तस्येति। एवमरे मैत्रेयि ब्रवीमि नास्ति विशेषसञ्ज्ञेत्यहमसावमुष्य पुत्रो ममेदं क्षेत्रं धनं सुखी दुःखीत्येवमादिलक्षणाऽविद्याकृतत्वात्तस्या अविद्यायाश्च ब्रह्म-

---

तेषां प्रत्यक्षत्वेऽपि प्रकृतत्वाभावे कथमेतच्छब्देन परामर्शः स्यादित्याशङ्क्याह। येषामिति। उक्तमेकायनप्रक्रियायामिति शेषः। ब्रह्मणि प्रज्ञानघने भूतानां प्रलये दृष्टान्तमाह। नदीति। हेतौ पञ्चमीति दर्शयति। हेतुभूतेभ्य इति। पूर्व्वस्मिन् ब्राह्मणे षष्ठ्यन्तसत्यशब्दवाच्यतया तेषां प्रकृतत्वमाह। सत्येति। यथा सैन्धवः सन् खिल्यः सिन्धोस्तेजःसम्बन्धमपेक्ष्योद्गच्छति। तथा भूतेभ्यः खिल्यभावो भवतीत्याह। सैन्धवेति। समुत्थानमेव विवृणोति। यथेत्यादिना। तान्येवेत्यादि व्याचष्टे। येभ्य इति। खिल्यहेतुभूतानि तत्र हेतुत्वेऽपि तानीति यावत्। ब्रह्मविद्योत्पत्तौ हेतुमाह। शास्त्रेति। तत्फलं सदृष्टान्तमाचष्टे। नदीवदिति। यथा सलिले फेनादयो विनश्यन्ति तथा तेषु भूतेषु विनश्यत्सु सत्सु

सा होवाच मैत्रेय्यत्रैव मा भगवानमूमुहन्न प्रेत्य-

विद्यया निरन्वयतो नाशित्वात् कुतो विशेषसञ्ज्ञासम्भवो ब्रह्मविदश्चैतन्यस्वभावस्थितस्य शरीरावस्थितस्यापि विशेष-सञ्ज्ञा नोपपद्यते किं पुनः कार्य्यकरणविमुक्तस्य सर्वत इति ह उवाच उक्तवान् किल परमार्थदर्शनं मैत्रेय्यै भार्य्यायै याज्ञवल्क्यः ॥ १२ ॥

एवं प्रतिबोधिता सा ह किल उवाच उक्तवती मैत्रेयी अत्रैवैतस्मिन्नेवैकस्मिन्वस्तुनि ब्रह्मणि विरुद्धधर्म्मवत्त्वमाचक्षाणेन भगवता मम मोहः कृतस्तदाह अत्रैव मा भगवान् पूजावा-नमूमुहन् मोहं कृतवान्। कथं तेन विरुद्धधर्म्मवत्त्वमुक्तमित्यु-च्यते पूर्व्वं विज्ञानघन एवेति प्रतिज्ञाय पुनर्न प्रेत्य सञ्ज्ञास्तीति कथं विज्ञानघन एव कथं वा न प्रेत्यसञ्ज्ञास्तीति न ह्युपा:

---

स्यनु पश्चात् खिल्यभावो नश्यतीत्याह। सलिलेति। किंपुनर्भूतानां खिल्य-भावस्य च विनाशे सत्यवशिष्यते तत्राह। यथेति। तत्रेति कैवल्योक्तिः। उक्तमेव वाक्यार्थं स्फुटयति। नास्तीति। ब्रह्मविदोऽशरीरस्य विशेष-सञ्ज्ञाभावं कैमुतिकन्यायेन कथयति। शरीरावस्थितस्येति। सुषुप्तस्येति यावत्। सर्व्वतो मुक्तस्येति शेषः। १२।

उक्तं परमार्थदर्शनमेव व्यक्तीकर्त्तुं चोदयति। एवमिति। तेन याज्ञवल्क्येनेति यावत्। इति वदता विरुद्धधर्म्मवत्त्वमुक्तमिति शेषः। एवं वदन्तोऽपि कुतो। विरुद्धधर्म्मोक्तिस्तत्राह। कथमिति। एकस्यैव वि-ज्ञानघनत्वे सञ्ज्ञाराहित्ये च कुतो विरुद्धधीरित्याशङ्क्याह। नह्रीति। विरोधबुद्धिफलमाह। अत इति। अत्रेत्युक्तविषयपरामर्शः। न वा इति प्रतीकं गृहीत्वा व्याकरोति। अरे इति। मोहनवाक्यं ब्रवीत्येव

सञ्ज्ञास्तीति स होवाच याज्ञवल्क्यो न वा अरेऽहं मोहं ब्रवीम्यलं वा अर इदं विज्ञानाय ॥ १३ ॥

---

शीतयाग्निरेवैको भवत्यतो मूढोऽस्मात् स होवाच याज्ञवल्क्यो न वै अरे मैत्रेयि अहं मोहं ब्रवीमि मोहनं वाक्यं न ब्रवीमीत्यर्थः। ननु कथं विरुद्धधर्म्मत्वमवचो विज्ञानघनं सञ्ज्ञाभावञ्च नमयेदमेकस्मिन्धर्म्मिणि अभिहितं त्वयैवेदं विरुद्धधर्म्मत्वेन एकं वस्तु परिगृहीतं भ्रान्त्या न तु मयोक्तम्। मया त्विदमुक्तं यस्तु अविद्याप्रत्युपस्थापितः कार्य्यकरणसम्बन्ध्यात्मनः खिल्यभावस्तस्मिन् विद्यया नाशिते तन्निमित्ताविशेषसञ्ज्ञा शरीरादिसम्बन्धिनि अन्यत्वदर्शनलक्षणा सा कार्य्यकरणसङ्घातोपाधौ प्रविलापिते नश्यति हेत्वभावात्। उदकाद्याधारनाशादिवचन्द्रादिप्रतिबिम्बः तन्निमित्तश्च प्रकाशादिर्न पुनः परमार्थचन्द्रादित्यस्वरूपानाशवदसंसारि ब्रह्मस्वरूपस्य विज्ञानघनस्य नाशः तद्विज्ञानघन इत्युक्तं स आत्मा सर्वस्य जगतः परमार्थतो भूतनाशान्न विनाशी। विनाशी त्वविद्याकृतखिल्यभावो वाचारम्भणं विकारो नामधेयमिति श्रुत्यन्तरात्।

---

मयानिति शङ्कते। नन्विति। समाधत्ते। न मयेति। कथं तर्हि मम-कस्मिन्नेव वस्तुनि विरुद्धधर्म्मवत्त्वबुद्धिरित्याशङ्क्याह। त्वयैवेति। त्वया तर्हि किमुक्तमिति तत्राह। मया त्विति। खिल्यभावस्य विनाशे प्रत्यगात्मरूपमेव विनश्यतीत्याशङ्क्याह। न पुनरिति। ब्रह्मस्वरूपस्यानाशे विज्ञानघनस्य किमायातमित्याशयेनाह। तदिति। विज्ञानघनस्य प्रत्युक्तत्वं दर्शयति। स्वात्मेति। कथं तर्हि तान्येवानुविनश्यतीति तत्राह। भूतनाशेति। खिल्यभावस्याविद्याकृतत्वे प्रमाणमाह। वाचारम्भणमिति। खिल्यभाव-

यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरꣳ शृणोति तदितर इतरमभिवदति तदितर

---

अयन्तु पारमार्थिकोऽविनाशी वा अरे अयमात्मा अतोऽलं पर्य्याप्तं वै अरे इदं महद्भूतं अनन्तमपारं यथा व्याख्यातं विज्ञानाय विज्ञातुं न हि विज्ञातुर्विज्ञाते विपरिलोपो विद्यते अविनाशित्वादिति हि वक्ष्यति ॥ १२ ॥

कथं तर्हि प्रेत्यसञ्ज्ञा नास्तीत्युच्यते शृणु । यत्र यस्मिन्नविद्याकल्पिते कार्य्यकरणसङ्घातोपाधिजनिते विशेषात्मनि खिल्यभावे हि यस्माद्द्वैतमिव परमार्थतोऽद्वैते ब्रह्मणि द्वैतमिव भिन्नमिव वस्त्वन्तरमात्मन उपलक्ष्यते । ननु द्वैतेनोपमीयमानत्वात् द्वैतस्य पामार्थिकत्वमिति न । वाचारम्भणं विकारो नामधेयमिति श्रुत्यन्तरादेकमेवाद्वितीय-

---

तत्परमात्मनोऽपि नाशित्वं स्यादिति चेन्नेत्याह । अयन्त्विति । पारमार्थिकत्वे प्रमाणमाह । अविनाशित्वं फलमाह । अत इति । पर्य्याप्तं विज्ञातुमिति सम्बन्धः । इदमित्यादिपदानां गतार्थत्वादव्याख्येयत्वं सूचयति । यथेति । विज्ञानघन एवेत्यत्र वाक्यशेषं प्रमाणयति । न हीति ।

आत्मनो विज्ञानघनत्वं प्रामाणिकं चेत्तर्हि निषेधवाक्यमयुक्तमिति शङ्कते । कथमिति । अविद्याकृतविशेषविज्ञानाभावाभिप्रायेण निषेधवाक्योपपत्तिरित्युत्तरमाह । शृण्विति । यस्मिन्नुक्तलक्षणे खिल्यभावे सति तस्माद्यथोक्ते ब्रह्मणि द्वैतमिव द्वैतमुपलक्ष्यते । तस्मात्तस्मिन् सतीतर इतरं जिघ्रतीति सम्बन्धः द्वैतमि

इतरं मनुते तदितर इतरं विजानाति यत्र वा अस्य सर्व्वमात्मैवाभूत्तत्केन कं जिघ्रेत्तत्केन कं पश्येत्तत्केन कं शृणुयात्तत्केन कमभिवदेत्तत्केन कं मन्वीत तत्केन कं विजानीयात्।

---

मात्मैवेदं सर्वमिति च। तत्तत्र यस्माद्द्वैतमिव तस्मादेवेतरोऽसौ परमात्मनः खिल्यभूत आत्मा परमार्थचन्द्रादेरिवोदकचन्द्रादिप्रतिविम्बो द्रष्टा इतरेण चक्षुरादिकरणेन यत् द्रष्टव्यं रूपादिकं पश्यति इतर इतरमिति कारकप्रदर्शनार्थं पश्यतीति क्रियाफलयोरभिधानं। यथा छिनत्तीति यथोद्यम्योद्यम्य निपातनं छेद्यस्य च द्वैधीभावस्य च उभयं छिनत्तीत्येकेनैव शब्देनाभिधीयते क्रियावसानत्वात् फलं। क्रियाव्यतिरेकेण च तत्फलस्यानुपलम्भात्। इतरो

---

वेत्यादिवाक्यमनूद्य व्याचष्टे। भिन्नमिवेति। इवशब्दस्योपमार्थत्वमुपेत्य शङ्कते। नन्विति। द्वैतेनाद्वैतस्योपमीयमानत्वाद्दृष्टान्तस्य दार्ष्टान्तिकस्य च तस्य वस्तुत्वं स्यादुपमानोपमेययोश्चन्द्रद्वयवस्तुत्वोपलम्भादित्यर्थः। द्वैतप्रपञ्चस्य मिथ्यात्ववादिश्रुतिविरोधाच्च तस्य सत्यतेति परिहरति। वाचारम्भणमिति। तत्र तस्मिन् खिल्यभावे सतीति यावत्। स्वप्नादिद्वैतमिव जागरितेऽपि तद्द्वैतं यस्मादाभासते तस्मात्परमात्मनः सकाशादितरोऽयमात्मा खिल्यभूतोऽपरमार्थतः सन्नितरं जिघ्रतीति योजना। परस्मादितरस्मिन्नात्मन्यपरमार्थे खिल्यभूते दृष्टान्तमाह। चन्द्रादेरिवेति। इतरशब्दमनूद्य तस्यार्थमाह। द्रष्टेति। अविद्यादशायां सर्वाण्यपि कारकाणि सन्ति कर्तृकर्मनिर्देशस्य सर्वकारकोपलक्षणत्वादित्याह। इतरेति। क्रियाफलयोरेकशब्दत्वे दृष्टान्तं विवृणोति। यथेति। दृष्टान्तेऽपि विप्रतिपत्तिमाशङ्क्यानन्तरोक्तं हेतुमेव स्फुटयति। क्रियेति। अतश्च जिघ्रतीत्यत्रापि क्रियाफलयोरेक-

येनेदꣳ सर्व्वं विजानाति तं केन विजानीयात्

घ्राता इतरेण घ्राणेनेतरं घ्रातव्यं जिघ्रति तथा सर्वं पूर्ववद्विजानाति इयमविद्यावदवस्था। यत्र तु ब्रह्मविद्यया अविद्यानाशमुपगमिता तत्रात्मव्यतिरेकेणान्यस्याभावो यत्र वै अस्य ब्रह्मविदः सर्वं नामरूपाद्यात्मन्येव प्रविलापितं आत्मैव संवृत्तं यत्रैवमात्मैवाभूत्तत्र केन करणेन कं द्रष्टव्यं कः पश्येत्तथा जिघ्रेद्विजानीयात्।

सर्व्वं च हि कारकसाध्या क्रिया। अतः कारकाभावेऽनुपपत्तिः क्रियायाः। क्रियाभावे च फलाभावः। तस्मादविद्यायामेव सत्यां क्रियाकारकफलव्यवहारो न ब्रह्मविदः। आत्मत्वादेव सर्वस्य नात्मव्यतिरेकेण कारकं क्रियाफलं

---

अन्यत्वमविरुद्धमिति शेषः। उत्तरवाक्यार्थमनूद्य वाक्यान्तरेष्वतिदिशति। इतर इति। यथेतरो द्रष्टा इतरेण चक्षुषोऽन्यं द्रष्टव्यं पश्यतीत्यादि द्रष्टव्यमिति शेषः। उत्तरेष्वपि वाक्येषु पूर्ववाक्यवत्कर्तृकर्मनिर्देशस्य सर्वकारकोपलक्षणत्वं क्रियापदस्य च क्रिया। तत्फलाभिधायित्वं तुल्यमित्याह। सर्वमिति। यत्र हीत्यादि वाक्यार्थमुपसंहरति। इयमिति। अत्र वा अन्येत्यादि वाक्यस्य तात्पर्यमाह। यत्र त्विति। उक्तेऽर्थे वाक्याक्षराणि व्याचष्टे। यत्रेति। तमेवार्थं संक्षिपति। यत्रैवमिति। सर्वं कर्तृकरणादीति शेषः। तत्केनेत्यादि व्याकरोति। तत्रेति।

किं शब्दस्याक्षेपार्थं कथयति। सर्वत्र हीति। ब्रह्मविदोऽपि कारकद्वारा क्रियादि स्वीक्रियतामित्याशङ्क्याह। आत्मत्वादिति। सर्वस्यात्मत्वासिद्धिमाशङ्क्य सर्वमात्मैवाभूदिति श्रुत्या समाधत्ते। न चेति। कथं तर्हि सर्वमात्मव्यतिरेकेण भातीत्याशङ्क्याह। तस्मादिति। भेदभानस्या-

विज्ञातारमरे केन विजानीयादिति॥ १४ ॥
चतुर्थं ब्राह्मणं ॥

---

वास्ति। न चानात्मा सन्सर्व्वमात्मैव भवति कस्यचित्। तस्मादविद्ययैवानात्मत्वं परिकल्पितं न तु परमार्थत आत्मव्यतिरेकेणास्ति किञ्चित्तस्मात्परमार्थात्मैकत्वप्रत्यये क्रियाकारकफलप्रत्ययानुपपत्तिरतोविरोधाद्ब्रह्मविदः क्रियाणां तत्साधनानाञ्चात्यन्तमेव निवृत्तिः। केन कमिति चेपार्थं वचनं प्रकारान्तरानुपपत्तिदर्शनार्थम्। न केनचिदपि प्रकारेण क्रियाकरणादिकारकानुपपत्तेः। केनचित् किञ्चित्कश्चित्कथञ्चिन्न पश्येदेवेत्यर्थः याचाप्यविद्यावस्थायामन्योऽन्यं पश्यति तत्रापि येनेदं सर्वं विजानाति तं केन विजानीयात् येन विजानाति तस्य करणस्य विज्ञेये विनि-

---

विद्याकृतत्वे फलितमाह। तस्मात्परमार्थेति। तद्धेतोरज्ञानस्यापनीतत्वादिति शेषः। एकत्वप्रत्ययादज्ञाननिवृत्तिद्वारा क्रिया दिप्रत्यये निवृत्तेऽपि क्रियादि स्यान्नेत्याह। अत इति करणप्रमाणयोरभावे कार्य्यस्य विरुद्धत्वादिति यावत्। ननु किंशब्दे प्रश्नार्थे प्रतीयमाने कथं क्रियातत्साधनयोरत्यन्तनिवृत्तिर्विदुषो विवक्ष्यते तत्राह। केनेति। किं शब्दस्य प्रागेवाक्षेपार्थत्वमुक्तं तद्वाक्षेपार्थवचो विदुषः सर्वप्रकारक्रियाकारकाद्यसम्भवप्रदर्शनार्थमित्यन्तमेव क्रियानिवृत्तिर्विदुषो युक्तेत्यर्थः। सर्वप्रकारानुपपत्तिमेवाभिनयति। केनचिदिति। कैवल्यावस्थामास्थाय सञ्ज्ञाभाववचनमित्युक्त्वा तत्रैव किं पुनर्न्यायं वक्तुमविद्यावस्थायामपि साक्षिणो ज्ञानाविषयत्वमाह। यत्रापीति। येन कूटस्थबोधेन व्याप्तो लोकः सर्व्वं जानाति तं साक्षिणं केन करणेन को वा ज्ञाता जानीयादित्यत्र हेतुमाह। येनेति। येन

युक्तत्वात् ज्ञातुश्च ज्ञेये एव हि जिज्ञासा नात्मनि। न चाग्नेरिवात्मात्मनो विषयो न चाविषये ज्ञातुर्ज्ञानमुपपद्यते। तस्माद्येनेदं सर्व्वं विजानाति तं विज्ञातारं केन करणेन को वान्यो विजानीयाद्यदा तु पुनः परमार्थविवेकिनो ब्रह्मविदो विज्ञातैव केवलो द्वयोर्वर्त्तते तं विज्ञातारमरे केन विजानीयादिति॥ १४ ॥ चतुर्थस्य चतुर्थं ब्राह्मणम्॥

यत्केवलं कर्म्मनिरपेक्षममृतत्वसाधनं तद्वक्तव्यमिति मैत्रेयिब्राह्मणमारब्धम्। तच्चात्मज्ञानं सर्व्वसन्न्यासाङ्गविशिष्टम्। आत्मनि च विज्ञाते सर्व्वमिदं विज्ञातं भवति। आत्मा च प्रियः सर्व्वस्मात्तस्मादात्मा द्रष्टव्यः स च श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति च। दर्शनप्रकारा उक्ता·

---

चक्षुरादिना लोको जानाति तस्य विषयग्रहणेनैवोपक्षीणत्वान्न साक्षिणि प्रवृत्तिरित्यर्थः। आत्मनः सन्दिग्धभावत्वाच्च प्रमेयत्वासिद्धिरित्याह। ज्ञातुश्चेति। किञ्चात्मा स्वेनैव ज्ञायते ज्ञात्रन्तरेण वा नाद्य इत्याह। न चेति। न द्वितीय इत्याह। न चाविषय इति। ज्ञात्रन्तरस्याभावात्तस्य विषयोऽयमात्मा कुतस्तेन ज्ञातुं शक्यते। न हि ज्ञात्रन्तरमस्ति नान्यतोऽस्ति द्रष्टेत्यादिश्रुतेरित्यर्थः। आत्मनि प्रमातृप्रमाणयोरभावे ज्ञानाविषयत्वं फलतीत्याह। तस्मादिति। विज्ञातारमित्यादिवाक्यस्यार्थं प्रपञ्चयति। यदा त्विति। तदेवं स्वरूपापेक्षं विज्ञानघनत्वम्। विशेषाविशेषविज्ञानापेक्षं तु सञ्ज्ञाभाववचनमित्यविरोध इति॥ १४ ॥ इति चतुर्थं ब्राह्मणम्।

पूर्व्वोत्तरब्राह्मणयोः सङ्गतिं वक्तुं वृत्तं कीर्त्तयति। यत्केवलमिति। कैवल्यं व्याचष्टे। कर्म्मेति। निरपेक्षमिति तच्चात्मज्ञानमुक्तमिति सम्बन्धः। ततो निराकाङ्क्षत्वं सिद्धमिति चकारार्थः। आत्मज्ञानं सन्न्यासिनामेवेति नियन्तुं विशिनष्टि। सर्व्वेति। ननु कुतस्ततो नैराकाङ्क्ष्यं सत्यपि तस्मिन्नि-

स्तत्र च श्रोतव्य आचार्य्यागमाभ्याम् । मन्तव्यस्तर्कतस्तत्र तर्कश्च उक्त आत्मैवेदं सर्वमिति । प्रतिज्ञातस्य हेतुवचनं आत्मैकसामान्यत्वमात्मैकोद्भवत्वमात्मैकप्रलयत्वञ्च । तत्रायं हेतुरसिद्ध इत्याशङ्क्यते आत्मैकसामान्योद्भवप्रलयाख्यस्तदा शङ्कानिवृत्त्यर्थमेतद्ब्राह्मणमारभ्यते । यस्मात्परस्परोपकार्य्योपकारकभूतं जगत्सर्वं पृथिव्यादि यच्च लोके परस्परोपकार्य्योपकारकभूतं तदेककारणपूर्वकमेकसामान्यात्मकमेकप्रलयं च दृष्टम् । तस्मादिदमपि पृथिव्यादिलक्षणं जगत्परस्परकार्य्यकारणत्वात् तथाभूतं भवितुमर्हति । एष ह्यर्थोऽस्मिन्ब्राह्मणे प्रकाश्यतेऽथवा आत्मैवेदं सर्वमिति प्रतिज्ञातस्यात्मोत्पत्तिस्थितिलयत्वं हेतुमुक्त्वा पुनरागमप्रधानेन मधुब्राह्म-

---

ज्ञेयान्तरसम्भवादुत आह । आत्मनि चेति । न वा अरे पत्युरित्यादावुक्तं स्मारयति । आत्मा चेति । तस्य निरतिशयप्रेमास्पदत्वेन परमानन्दत्वं फलितमाह । तस्मादिति । स चेद्दर्शनार्हस्तर्हि तद्दर्शने कानि साधनानीत्याशङ्क्याह । स चेति । दर्शनप्रकारा दर्शनस्योपायप्रभेदाः । श्रवणमननयोः स्वरूपे विशेषं दर्शयति । तत्रेति । कोऽसौ तर्को येन आत्मा मन्तव्यो भवति तत्राह । तत्र चेति । दुन्दुभ्यादिग्रन्थः सप्तम्यर्थः । उक्तमेव तर्कं सङ्गृह्णाति । आत्मैवेदमिति । प्रधानादिवादमादाय हेत्वसिद्धिशङ्कायां तन्निराकरणार्थमिदं ब्राह्मणमिति सङ्गतिं सङ्गिरते । तत्रायमिति । कथं हेत्वसिद्धिशङ्कोद्भिद्यते तत्राह । यस्मादिति । तस्मात्तथाभूतं भवितुमर्हतीति उत्तरत्र सम्बन्धः । अन्योऽन्योपकार्य्योपकारकभूतं जगदेकचैतन्यानुविद्धमेकप्रकृतिकञ्चेयत्र व्याप्तिमाह । यच्चेति । दृष्टं स्वप्नादौति शेषः । दृष्टान्ते सिद्धमर्थं दार्ष्टान्तिके योजयति । तस्मादिति । तच्छब्दार्थं स्फुटयति । परस्परेति । तथाभूतमित्येककारणपूर्व्वकत्वादिति

णेन प्रतिज्ञातस्यार्थस्य निगमनं क्रियते। तथाहि नैयायिकैरुक्तं हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनमिति। अन्यैर्व्याख्यातं आदुन्दुभिदृष्टान्ताच्छ्रोतव्यार्थं आगमवचनं प्राङ्मधुब्राह्मणान्मन्तव्यार्थमुपपत्तिप्रदर्शनेन। मधुब्राह्मणेन तु निदिध्यासनविधिरुच्यत इति। सर्वथापि तु यथागमेनावधारितं तर्कतस्तथैव मन्तव्यम्। यथा तर्कतो मतस्य तर्कागमाभ्यां निश्चितस्य तथैव निदिध्यासनं क्रियत इति पृथङ्निदिध्यासनविधिरनर्थक एव। तस्मात्पृथक्प्रकरणविभागोऽनर्थक इ-

---

म्युज्यते। विमतमेव कारणकं परस्परोपकार्य्योपकारकभूतत्वात्स्वप्नवदित्ययुक्तं हेत्वसिद्धेः। न हि सर्वं जगत्परस्परोपकार्य्योपकारकभूतमित्याशङ्क्याह। एष हीति। हेत्वसिद्धिशङ्कां परिहर्त्तुं ब्राह्मणमिति सङ्गतिमुक्त्वा प्रकारान्तरेण तामाह। अथ वेति। प्रतिज्ञा हेतुकमेणोक्ता हेतुसहितस्य प्रतिज्ञार्थस्य पुनर्वचनं निगमनं इत्यत्र तार्किकसम्मतिमाह। तथा हीति। भर्तृप्रपञ्चानां ब्राह्मणारम्भप्रकारमनुवदति। अन्यैरिति। द्रष्टव्यादिवाक्यादारभ्य दुन्दुभिदृष्टान्तादागमवचनं श्रोतव्य इत्युक्तश्रवणनिरूपणार्थम्। दुन्दुभिदृष्टान्तादारभ्य मधुब्राह्मणात्प्रागुपपत्तिप्रदर्शनेन मन्तव्य इत्युक्तं मनननिरूपणार्थमागमवचनम्। निदिध्यासनं व्याख्यातं पुनरेतद्ब्राह्मणमित्यर्थः। एतद्दूषयति। सर्वथापीति। श्रवणादेर्विधेयत्वेऽपीति यावत्। अन्वयव्यतिरेकाभ्यां श्रवणे प्रवृत्तस्य तत्पौष्कल्यो तदर्थत्वस्य मननं न विधिमपेक्षते। यथा तर्कतो मतं तत्त्वं तथा तर्कस्य तर्कागमाभ्यां निश्चितस्योभयसामर्थ्यादेव निदिध्यासनसिद्धौ तदपि विध्यनपेक्षितमेवेत्यर्थः। त्रयाणां विध्यनपेक्षितत्वे फलितमाह। तस्मादिति। इति परकीयव्याख्यानमयुक्तमिति शेषः। सिद्धान्तेऽपि श्रवणादिविध्युपन्यासकं पर-

इयं पृथिवी सर्व्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ शारीर-

---

त्यस्मदभिप्रायः। श्रवणमनननिदिध्यासनानामिति। सर्वथापि त्वध्यायद्वयस्यार्थोऽस्मिन्ब्राह्मण उपसंक्रियते।

इयं पृथिवी प्रसिद्धा सर्वेषां भूतानां मधु सर्वेषां ब्रह्मादिस्तम्बपर्य्यन्तानां भूतानां प्राणिनां मधुकार्य्यं मध्विव मधु। यथैको मध्वपूपोऽनेकैर्मधुकरैर्निर्वर्त्तित एवमियं पृथिवी सर्व्वभूतनिर्वर्त्तिता तथा सर्वाणि भूतानि पृथिव्यै पृथिव्या अस्या मधुकार्य्यम्। किञ्च यश्चायं पुरुषोऽस्यां पृथिव्यां तेजोमयश्चिन्मात्रप्रकाशमयोऽमृतमयोऽमरणधर्म्मा पुरुषो यश्चायमध्यात्मं शारीरः शरीरे भवः पूर्ववत्तेजोमयोऽमृतमयः पुरुषः स च लिङ्गाभिमानी स च सर्वेषां भूतानामुपकारकरणत्वेन मधु सर्वाणि च भूतान्यस्य मधु। च शब्दसाम-

---

कोयं प्रस्थानं प्रत्याख्यातमित्याशङ्क्याह। सर्वथापि त्विति। तद्विध्युपगमेऽपीति यावत्।

एवं सङ्गतिं ब्राह्मणस्योक्त्वा तदक्षराणि व्याकरोति। इयमित्यादिना। यदुक्तं मध्विव मध्विति तद्विवृणोति। यथेति। न केवलमुक्तं मधुद्वयमेव किन्तु मध्वन्तरञ्चास्तीत्याह। किञ्चेति। पुरुषशब्दस्य चेतनविषयत्वं वारयति। स चेति। तस्य पृथिवीं प्रत्यमधुत्वमाह। स च सर्वेषामिति। सर्वेषाञ्च भूतानां तं प्रति मधुत्वं दर्शयति। सर्वाणि चेति। नन्वाद्यमेव मधुद्वयं स्वतन्त्रस्वतन्त्रं मधुद्वयमशक्यं कल्पयितुं कल्पकाभावादत आह। च शब्देति। प्रथमपर्य्यायार्थमुपसंहरति। एवमिति। पृथिवी सर्वाणि भूतानि पार्थिवः

स्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वं ॥ १ ॥

---

र्य्यात् । एवमेतच्चतुष्टयं तावदेकं सर्वभूतकार्य्यम् । सर्वाणि च भूतान्यस्य कार्य्यम् । अतोऽस्यैककारणपूर्वकता यस्मादेकस्मात्कारणादेतज्जातं तदेवैकं परमार्थतो ब्रह्मेतरत्कार्य्यं वाचारम्भणं विकारो नामधेयमात्रमित्येष मधुपर्य्यायाणां सर्वेषामर्थः सङ्क्षेपतः । अयमेव स योऽयं प्रतिज्ञात इदं सर्वं यदयमात्मेति इदममृतं यन्मैत्रेय्या अमृतत्वसाधनमुक्तमात्मविज्ञानमिदं तदमृतमिदं ब्रह्म यद्ब्रह्म ते ब्रवाणि ज्ञपयिष्यामीत्यध्यायादौ प्रकृतं यद्विषया च विद्या ब्रह्मविद्येत्युच्यते इदं सर्वं । यस्माद्ब्रह्मणो विज्ञानात्सर्वं भवति ॥ १ ॥

---

पुरुषः शारीरश्चेति चतुष्टयमेकं संध्यति शेषः । मधुशब्दार्थमाह । सर्व्वेति । अस्येति पृथिव्यादेरिति यावत् । परस्परमुपकार्य्योपकारकभावे फलितमाह । अत इति । अस्येति सर्वं जगदुच्यते । उक्तञ्च यस्मात्परस्परोपकार्य्योपकारकभूतमित्यादि भवत्वनेन न्यायेन मधुपर्य्यायेषु सर्वेषु कार्य्योपदेशो ब्रह्मोपदेशस्तु कथमित्याशङ्क्याह । यस्मादिति । स प्रकृत आत्मैवायं चतुर्द्धोक्तो भेद इति योजना । इदमिति चतुष्टयकल्पनाधिष्ठानविषयं ज्ञानं परामृशति । इदं ब्रह्मेति । अत्र चतुष्टयाधिष्ठानमिदं शब्दार्थः । तृतीये च तस्य प्रकृतत्वं दर्शयति । यद्विषयेति । इदं सर्वमित्यत्र ब्रह्मज्ञानमित्युक्तम् । सर्व्वं सर्वाप्तिसाधनमिति यावत् । तदेव स्पष्टयति । यस्मादिति ॥ १ ॥

इमा आपः सर्वेषां भूतानां मध्वासामपाꣳ सर्वाणि भूतानि मधु यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वं ॥ २ ॥ अयमग्निः सर्वेषां भूतानां मध्वस्याग्नेः सर्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मयस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ३ ॥ अयं वायुः सर्व्वेषां भूतानां मध्वस्य वायोः सर्वाणि भूतानि मधु यश्चायमस्मिन्वायौ तेजोमयोऽमृत-

---

तथा आपो अध्यात्मं रेतस्यपां विशेषतोऽवस्थानम् । २ । तथाग्निर्वाच्यग्नेर्विशेषतोऽवस्थानम् ॥ ३ ॥ तथा वायुरध्यात्मं प्राणो भूतानां शरीरारम्भकत्वेनोपकारान्मधुत्वम् । तदन्त-

---

यथा पृथिवी मधुत्वेन व्याख्याता तथान्येऽपि व्याख्येया इत्याह । तथेति । रैतस इति विशेषणस्यार्थमाह । अध्यात्ममिति । आपो रेतो भूत्वा शिश्नं प्रविशन्निति हि श्रुत्यन्तरम् ॥ २ ॥ पृथिव्यामप्सु चोक्तन्यायमग्नावतिदिशति । तथेति । वाङ्मय इत्यस्यार्थमाह । वाचीति । अग्निर्वाग्भूत्वा मुखं प्राविशदिति हि श्रूयते ॥ ३ ॥ अग्नावुक्तन्यायं वायौ योजयति । तथेति । वायुः प्राणो भूत्वा नासिके प्राविशदिति श्रुत्यन्तरमाश्रित्याह । आध्यात्ममिति । पृथिव्यादि तदन्तर्वर्त्तिनाञ्च पुरुषाणामेकवाक्योपात्तानामेकरूपं मधुत्वमिति शङ्कां परिहरन्नवान्तरविभागमाह ।

मयः पुरुषो यश्चायमध्यात्मं प्राणस्तेजोमयोऽमृत-मयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्व्वम् ॥ ४ ॥ अयमादित्यः सर्व्वेषां भूता-नां मध्वस्यादित्यः सर्वेषां भूतानां मध्वस्यादित्यस्य सर्व्वाणि भूतानि मधु यश्चायमस्मिन्नादित्ये तेजो-मयोऽमृतमयः पुरुषो यश्चायमध्यात्मं चाक्षुषस्ते-जोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेद-ममृतमिदं ब्रह्मेदꣳ सर्व्वम् ॥ ५ ॥

इमा दिशः सर्वेषां भूतानां मध्वासां दिशाꣳ सर्व्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजो-मयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ श्रौत्रः

गतानां तेजोमयादीनां करणत्वेनोपकारान्मधुत्वम्। तथा-चोक्तम्। तस्यैव वाचः पृथिवी शरीरं ज्योतीरूपमयमग्नि-रिति ॥ ४ ॥ तथादित्यो मधु चक्षुरध्यात्मम् ॥ ५ ॥

तथा दिशो मधु दिशां यद्यपि श्रौत्रमध्यात्मं तथापि

भूतानामिति। पृथिव्यादीनां कार्य्यत्वं तेजोमयादीनां करणत्वमित्यत्र सम्प्रदायाधिकारसम्मतिमाह। तथा चोक्तमिति ॥ ४ ॥ यद्यप्यादित्यस्तृ-तीये भूतेऽन्तर्भवति तथापि देवताभेदमाश्रित्याग्नावुक्तन्यायं तस्मिन्नतिदि-शति। तथेति। आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशदिति श्रुतिमाश्रित्याह चक्षुरिति ॥ ५ ॥

आदित्यगतं न्यायं दिक्षु सम्पादयति। तथेति। दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्निति श्रुतेः श्रोत्रमेव दिशामध्यात्मं तथाचाध्यात्मं

प्रातिश्रुत्कस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्व्वम् । ६ ॥ अयं चन्द्रः सर्व्वेषां भूतानां मध्वस्य चन्द्रस्य सर्वाणि भूतानि मधु यश्चायमस्मिꣳश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्व्वम् ॥ ७ ॥ इयं विद्युत्सर्व्वेषां भूतानां मध्वस्यै विद्युतः सर्वाणि भूतानि मधु यश्चायमस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं तैजसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्व्वम् ॥ ८ ॥

अयꣳ स्तनयित्नुः सर्व्वेषां भूतानां मध्वस्य स्तन-

---

शब्दप्रतिश्रवणवेलायान्तु विशेषतः सन्निहितो भवति इत्यध्यात्मम् । प्रातिश्रुत्कः प्रतिश्रुत्कायां प्रतिश्रवणवेलायां भवः प्रातिश्रुत्कः ॥ ६ ॥ तथा चन्द्रः अध्यात्मं मानसः ॥ ७ ॥ तथा विद्युत्त्वक् तेजसि भवस्तैजसोऽध्यात्मम् ॥ ८ ॥ तथा

---

श्रोत्रमित्येव वक्तव्ये कथं प्रातिश्रुत्क इति विशेषण मित्याशङ्क्याह । दिशामिति । तयःपोत्यभिन्नर्थे तुषञ्ः ॥ ६ ॥ दिक्षु व्यवस्थितन्यायं चन्द्रे दर्शयति । तथेति । चन्द्रमा मनो भूत्वा हृदयं प्राविशदिति श्रुतिमनुसृत्याह । अध्यात्ममिति ॥ ७ ॥ चन्द्रवद्विद्युतोऽपि मधुत्वमाह । तथेति । अध्यात्मं तैजस इत्यस्यार्थमाह । त्वगिति ॥ ८ ॥ पर्जन्योऽपि विद्युदादिवत्सर्व्वेषां भूतानां मधु भवतीत्याह । तथेति । अध्यात्मं शाब्द इत्य-

यित्नोः सर्व्वाणि भूतानि मधु यश्चायमस्मिꣳ स्तन-
यित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ
शाब्दः सौवरस्तेजोमयोऽमृतमयः पुरुषोऽय-
मेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वं
॥ ९ ॥ अयमाकाशः सर्वेषां भूतानां मध्वस्याका-
शस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नाकाशे
तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ हृद्या-
काशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽ-
यमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ १० ॥

स्तनयित्नुः शब्दे भवः शाब्दोऽध्यात्मं यद्यपि तथापि स्वरे विशेषतो भवतीति सौवरो अध्यात्मम् ॥ ९ ॥ तथाकाशो ऽध्यात्मं हृदयाकाशो हृदयः आकाशान्ताः पृथिव्यादयो भूतगणा देवतागणाश्च कार्य्यकरणसङ्घातात्मान उपकुर्वन्तो मधु भवन्ति प्रति शरीरिणमित्युक्तम् । येन ते प्रयुक्ताः शरीरिभिः सम्बध्यमाना मधुत्वेनोपकुर्वन्ति तद्वक्तव्यमितीदमारभ्यते ॥ १० ॥

---

स्वार्थमाह । शब्दे भव इति । यद्यप्यध्यात्मं शब्दे भव इति शाब्दः पुरुषस्तथापि स्वरे विशेषतो भवतीत्यध्यात्मं सौवरः पुरुष इति योजना ॥ ९ ॥ स्तनयित्नावुक्तन्यायमाकाशेऽतिदिशति । तथेति । पर्य्यायान्तरं वृत्तमनूद्योत्थापयति ।। आकाशान्ता इति । प्रति शरीरिणं सर्वेषां शरीरिणां प्रत्येकमिति यावत् ॥ १० ॥

अयं धर्म्मः सर्वेषां भूतानां मध्वस्य धर्म्मस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्धर्म्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्म्मस्तेजो-

---

अयं धर्म्मोऽयमित्यप्रत्यक्षोऽपि धर्म्मः कार्य्येण तत्प्रयुक्तेन प्रत्यक्षेण व्यपदिश्यते अयं धर्म्म इति । प्रत्यक्षवद्धर्म्मश्च व्याख्यातः श्रुतिस्मृतिलक्षणः । क्षत्रादीनामपि नियन्ता जगतो वैचित्र्यकृत्पृथिव्यादीनां परिणामहेतुत्वात्प्राणिभिरनुष्ठीयमानरूपश्च तेन चायं धर्म्म इति प्रत्यक्षेण व्यपदेशः । सत्यधर्म्मयोश्चाभेदेन निर्द्देशः कृतः । शास्त्राचारलक्षणयोरिह तु भेदेन व्यपदेश एकत्वे सत्यपि दृष्टादृष्टभेदरूपेण कार्य्यारम्भकत्वात् । यस्त्वदृष्टोऽपूर्व्वाख्यो धर्म्मः सामान्यविशेषात्मनाऽदृष्टेन रूपेण कार्य्यमारभते सामान्य-

---

धर्म्मस्य शास्त्रैकगम्यत्वेन परोक्षत्वादयमिति निर्द्देशानर्हत्वमाशङ्क्याह । अयमितीति । यद्यपि धर्म्मो प्रत्यक्षोऽयमिति निर्द्देशानर्हस्तथापि पृथिव्यादिधर्म्मकार्य्यस्य प्रत्यक्षत्वात्तेन कारणस्याभेदमौपचारिकमादाय प्रत्यक्षघटादिवदयन्धर्म्म इति व्यपदेशोपपत्तिरित्यर्थः । कोऽसौ धर्म्मो यस्य प्रत्यक्षत्वेन व्यपदेशस्तत्राह । धर्म्मश्चेति । व्याख्यातमादौ तच्छ्रेयोरूपमत्यसृजत धर्म्ममित्यादाविति शेषः । तर्हि तस्य प्रत्यक्षत्वान्न चोदनालक्षणत्वमित्याशङ्क्य गौणत्वमुख्यत्वाभ्यामविरोधमभिप्रेत्याह । श्रुतीति । तस्मिन्नेव कार्य्यलिङ्गकमनुमानं सूचयति । क्षत्रादीनामिति । तत्रैवानुमानान्तरं विवक्षित्वोक्तम् । जगत इति । जगद्वैचित्र्यकारित्वे हेतुमाह । पृथिव्यादीनामिति । धर्म्मस्य प्रत्यक्षेण व्यपदेशे हेत्वन्तरमाह । प्राणिभिरिति ।

मयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृत-
मिदं ब्रह्मेदꣳ सर्वं ॥ ११ ॥

इदꣳ सत्यꣳ सर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्सत्ये तेजोमयो

---

रूपेण पृथिव्यादीनां प्रयोक्ता भवति विशेषरूपेण चाध्यात्मं कार्य्यकरणसङ्घातस्य तत्र पृथिव्यादीनां प्रयोक्तरि यश्चायमस्मिन्धर्म्मे तेजोमयस्तथाध्यात्मं कार्य्यकरणसङ्घातकर्त्तरि धर्म्मे भवो धार्म्मः ॥ ११ ॥

तथा दृष्टेनानुष्ठीयमानेनाचाररूपेण सत्याख्यो भवति स एव धर्म्मः सोऽपि द्विः प्रकार एव सामान्यविशेषात्मरूपेण सामान्यरूपः पृथिव्यादिसमवेतो विशेषरूपः कार्य्यकरण-

---

तेनानुष्ठीयमानाचारेण प्रत्यक्षेण धर्मस्य लक्ष्यमाणत्वेनेति यावत्। ननु तृतीयेऽध्याये यो वै स धर्म्मः सत्यं वै तदिति सत्यधर्म्मयोरभेदवचनात्तयोर्भेदेनात्र पर्य्यायद्वयोपादानमनुपपन्नमत आह। सत्येति। कथमेकत्वे सति भेदेनोक्तिरित्याशङ्क्याह। दृष्टेति। अदृष्टेन रूपेण कार्य्यारम्भकत्वं प्रकटयति यस्त्विति। सामान्यात्मनारम्भकत्वमुदाहरति। सामान्यरूपेणेति। विशेषात्मना कार्य्यारम्भकत्वं व्यनक्ति। विशेषेणेति। धर्मस्य द्वौ भेदावुक्तौ तयोर्मध्ये प्रथममधिकृत्य यश्चेत्यादि वाक्यमित्याह। तत्रेति। द्वितीयं विषयीकृत्य यश्चायमध्यात्ममित्यादि प्रवृत्तमित्याह। तथेति ॥ ११ ॥

इदं सत्यमित्यस्मिन्पर्य्याये सत्यशब्दार्थमाह। तथा दृष्टेनेति। सोऽपीत्यपिशब्दो धर्म्मोदाहरणार्थः। द्वयोरपि प्रकारयोर्विनियोगं विभजते। सामान्यरूप इति। उभयत्र समवेतशब्दस्तत्र कारणत्वेनानुगतार्थः।

ऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ सात्यस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वं ॥ १२ ॥

इदं मानुषꣳ सर्वेषां भूतानां मध्वस्य मानुषस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्मानुषे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वं ॥ १३ ॥

---

सङ्घातसमवेतस्तत्र पृथिव्यादिसमवेते वर्त्तमानक्रियारूपे सत्ये तथाध्यात्मं कार्य्यकरणसङ्घातसमवेतरि । सत्ये भवः सात्यः । सत्येन वायुरावातीति श्रुत्यन्तरात् ॥ १२ ॥

धर्म्मसत्याभ्यां प्रयुक्तोऽयं कार्य्यकरणसङ्घातविशेषः । स येन जातिविशेषेण संयुक्तो भवति स जातिविशेषो मानुषादिस्तत्रमानुषादिजातिविशिष्टा एव सर्व्वे प्राणिनिकायाः परस्परोपकार्य्योपकारकभावेन वर्त्तमाना दृश्यन्ते । अतो मानुष्यादिजातिरपि सर्व्वेषां भूतानां मधु । तत्र मानुषादि-

---

यश्चायमस्मिन्नित्यादिवाक्यस्य विषयमाह । तत्रेति । सत्ये यश्चेत्यादि वाक्यमिति शेषः । यश्चायमध्यात्ममित्यादि वाक्यस्य विषयमाह । तथाध्यात्ममिति । सत्यस्य पृथिव्यादौ कार्य्यकरणसङ्घाते च कारणत्वे प्रमाणमाह । सत्येनेति ॥ १२ ॥

इदं मानुषमित्यत्र मानुषग्रहणं सर्व्वजात्युपलक्षणमित्यभिप्रेत्याह । धर्म्मसत्याभ्यामिति । कथं पुनरेषा जातिः सर्व्वेषां भूतानां मधु भवति

अयमात्मा सर्वेषां भूतानां मध्वस्यात्मनः सर्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वं ॥ १४ ॥

---

जातिरपि वाह्याध्यात्मिका चेत्युभयथा निर्देशभाग्भवति ॥१३॥

यस्तु कार्य्यकरणसङ्घातो मानुषादिजातिविशिष्टः सोऽयमात्मा सर्वेषां भूतानां मधु न चाय शरीरशब्देन निर्द्दिष्टः पृथिवीपर्य्याय एव। न पार्थिवांशस्यैव तत्र ग्रहणात्। इह तु सर्वात्माप्रत्यस्तमिताधयात्माधिभूताधिदैवादिसर्वविशेषः सर्वभूतदेवतागुणविशिष्टः कार्य्यकरणसङ्घातः सोऽयमात्मेत्युच्यते। तस्मिन्नस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषोऽमूर्त्तरसः स-

---

तत्राह। तत्रेति। भोगभूमिः सप्तम्यर्थः। यश्चायमस्मिन्नित्यादिवाक्यद्वयस्य विषयभेदं दर्शयति। तत्रेति। व्यवहारभूमाविति यावत्। धर्म्मादिवदित्यशेरर्थः। निर्देष्टुः स्वशरीरनिष्ठा जातिराध्यात्मिकी शरीरान्तराश्रिता तु बाह्येति भेदः। वस्तुतस्तु नोभयथात्वमित्यभिप्रेत्य निर्देशभागित्युक्तम् ॥ १२ ॥

अन्तिमपर्य्यायमवतारयति। यस्त्विति। आत्मनः शरीरेष गतत्वात् पुनरुक्तिरनुपयुक्तेति शङ्कते। नन्विति। अवयवावयविविषयत्वेन पर्य्यायद्वयमपुनरुक्तमिति परिहरति। नेत्यादिना। परमात्मानं व्यावर्त्तयति। सर्व्वभूतेति। चेतनं व्यवच्छिनत्ति। कार्य्येति। यश्चायमस्मिन्नित्यादिवाक्यविषयमाह। तस्मिन्निति। यश्चायमध्यात्ममिति किमिति नोक्तमि-

स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानाꣳ राजा तद्यथा रथनाभौ च रथ-

र्वात्मको निर्दिश्यते। एकदेशेन तु पृथिव्यादिषु निर्दिष्टोऽवा-धात्मविशेषाभावात् स न निर्दिश्यते। यस्तु परिशिष्टो विज्ञा-नमयो यदर्थोऽयं देहलिङ्गसङ्घात आत्मा स यथायमात्मेत्युच्यते।

यस्मिन्नात्मनि परिशिष्टो विज्ञानमयोऽन्त्ये पर्य्याये प्रवेशितः सोऽयमात्मा तस्मिन्नविद्याकृतकार्य्यकरणसङ्घातोपाधिविशिष्टे ब्रह्मविद्यया परमार्थात्मनि प्रवेशिते स एवमुक्तोऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनभूतः सर्वेषां भूतानामयमात्मा सर्वैरुपास्यः सर्वेषां भूतानामधिपतिः सर्वभूतानां स्वतन्त्रो न कुमारामात्यवत् किं तर्हि सर्वेषां भूतानां राजा राजत्वविशेषणमधिपतिरिति भवति कश्चिद्राजोचितवृत्तिमाश्रित्य राजा न त्वधिपति-

त्यापद्ङ्गाह। एकदेशेनेति। अतेतरन्तपर्य्यायोक्तिः॥ यथायमात्मेतग्स्या-र्थमाह। यस्त्विति॥ १४॥

स वा अयमात्मेत्यस्यार्थमाह। यस्मिन्निति। परिशिष्टः पूर्व्वपर्य्यायेष्वनुपदिष्टोऽन्त्ये पर्य्यायेऽयमात्मेत्युक्तो विज्ञानमयो यस्मिन्नात्मनि खल्व-दृष्टान्तवचसा प्रवेशितस्तेन परेणात्मना तादात्म्यङ्गतो विद्वान् अत्र आत्म-शब्दार्थ इत्यर्थः। उक्तमात्मशब्दार्थमनूद्य सर्वेषामित्यादि व्याचष्टे। तस्मिन्निति। अविद्यया कृतः कार्य्यकरणसङ्घात एवोपाधिस्तेन विशिष्टे जीवे तस्मिन्परमार्थात्मनि ब्रह्मणि ब्रह्मविद्यया प्रवेशिते स एवायमात्मा यथोक्तविशेषणः सर्वैरुपास्यः सर्वेषां भूतानां अधिपतिरिति सम्बन्धः। व्या-ख्येयमपदमादाय तस्य वाच्यमर्थमाह। सर्वेषामिति। तस्यैव विवक्षितोऽर्थः सर्वैरुपास्य इत्युक्तः। स्वातन्त्र्यं व्यतिरेकद्वारा स्फोरयति। नेत्यादिना।

नेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि

रतो विशिनष्ट्यधिपतिरिति । एवं सर्वभूतात्मा विद्वान्ब्रह्मविन्मुक्तो भवति । यदुक्तं ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदितीदं तद्व्याख्यातमेवमात्मानमेव सर्वात्मत्वेनाचार्य्यागमाभ्यां श्रुत्वा मत्वा तर्कतो विज्ञाय साक्षादेवं यथा मधुब्राह्मणे दर्शितं तस्माद्ब्रह्मविज्ञानादेवं लक्षणात्पूर्व्वमपि ब्रह्मैव सदविद्यया अब्रह्मासीत्सर्वमेव च सदसर्वमासीत्तां त्वविद्यामस्माद्विज्ञानात् तिरस्कृत्य ब्रह्मविद्ब्रह्मैव सन् ब्रह्माभवत्सर्वं सत्सर्वमभवत् । परिसमाप्तः शास्त्रार्थो यदर्थः प्रस्तुतः । तस्मिन्नेतस्मिन् सर्वात्मभूते ब्रह्मविदि सर्वात्मनि सर्वं जगत्समर्पितमित्येतस्मिन्नर्थे दृष्टान्त उपादीयते । तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे सम-

सर्व्वेषां भूतानां राजेत्येतावतैव यथोक्तार्थसिद्धौ किमित्यधिपतिरिति विशेषणमित्याशङ्क्याह । राजत्वेति । राजत्वजात्याक्रान्तोऽपि कश्चित्तदुचितपरिपालनादिव्यवहारवानित्युपलभ्यं न पुनस्तस्य स्वातन्त्र्यं राजपरत्वात्तस्मात्ततो व्यवच्छेदार्थमधिपतिरिति विशेषणमित्यर्थः । राजाधिपतिरित्युभयोरपि मिथो विशेषणविशेष्यत्वमभिप्रेत्य वाक्यार्थं निगमयति । एवमिति । उक्तस्य विद्याफलस्य तृतीयेनैकवाक्यत्वमाह । यदुक्तमिति । तदेव व्याख्यानं स्फोरयति । एवमिति । मैत्रेयीब्राह्मणोक्तक्रमेणेति यावत् । एवमित्यस्यार्थं कथयति । यथेति । मधुब्राह्मणे पूर्व्वब्राह्मणे चोक्तक्रमेणात्मनि श्रवणादित्रयं सम्पाद्य विद्वान् ब्रह्माभवदिति सम्बन्धः । ननु मोक्षावस्थायामेव विदुषो ब्रह्मत्वापरिच्छिन्नत्वं न प्राच्यामविद्यादशायामित्याशङ्क्याह । तस्मादिति । समानाधिकरणं पञ्चमीद्वयम् । एवंलक्षणाद्ब्रह्माप्नोति श्रवणादिकृतात्तत्साक्षात्कारादिति यावत् । अब्रह्मत्वादिधीध्व-

सर्वाणि भूतानि सर्वे एत आत्मनः समर्पिताः ॥ १५ ॥

---

र्पिता इति प्रसिद्धोऽर्थः। एवमेतस्मिन्नात्मनि परमात्मभूते ब्रह्मविदि सर्वाणि भूतानि ब्रह्मादिस्तम्बपर्य्यन्तानि सर्वे देवा अग्न्यादयः सर्वे लोका भूरादयः सर्वे प्राणा वागादयः सर्व एत आत्मनो जलचन्द्रवत्प्रतिशरीरानुप्रवेशिना अविद्याकल्पिताः सर्वं जगदस्मिन्समर्पितम्। यदुक्तं ब्रह्मविद्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्य्यश्चेति। स एष सर्वात्मभावो व्याख्यातः। स एष विद्वान्ब्रह्मवित्सर्वोपाधिः सर्वात्मा सर्वं भवति। निरुपाधिर्निरुपाख्योऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनोऽ-

---

स्थितस्तर्हि कथमित्याशङ्क्याह। तान्त्विति। दृष्टमनूद्योत्तरग्रन्थमवतारयति। परिसमाप्त इति। यस्य शास्त्रस्यार्थौ विषयप्रयोजनाख्यौ ब्रह्मकण्डिकायां चतुर्थादौ च प्रस्तुतस्तस्यार्थो यथोक्तन्यायेन निर्द्धारित इत्यनुवादार्थः। सर्व्वात्मभूतत्वं सर्वादिकल्पितानां सर्व्वेषामात्मभावेन स्थितत्वम्। सर्व्वं ब्रह्म तद्रूपत्वं सर्व्वात्मत्वम्। सर्वे एत आत्मान इति कुतो भेदोक्तिः। आत्मैक्यस्य शास्त्रीयत्वादित्याशङ्क्याह। जलचन्द्रवदिति। दार्ष्टान्तिकभागस्य संपिण्डितमर्थमाह। सर्वमिति। उक्तस्य सर्व्वात्मभावस्य तृतीयेनैकवाक्यत्वं निर्दिशति। यदुक्तमिति। सर्व्वात्मभावे विदुषः सप्रपञ्चत्वं स्यादित्याशङ्क्याह। स एष इति। सर्व्वेण कल्पितेन द्वैतेन सहितमधिष्ठानभूतं ब्रह्म प्रत्यग्भावेन पश्यन्विद्वान्सर्व्वोपाधिस्तद्रूपेण स्थितः सर्व्वो भवति। तदेवं कल्पितं सप्रपञ्चत्वमविद्वद्दृष्ट्या विदुषोऽभीष्टमित्यर्थः। विद्वद्दृष्ट्या तस्य निष्प्रपञ्चत्वं दर्शयति। निरुपाधिरिति। निरुपाख्यत्वं शब्दप्रत्यया-

जोऽजरोऽमृतोऽभयोऽचलो नेति नेत्यस्थूलोऽनणुरित्येवंविशेषणो भवति । १५ ।

तमेतमर्थमजानन्तस्तार्किकाः केचित्पण्डितम्मन्यावागमविदः शास्त्रार्थं विरुद्धं मन्यमाना विकल्पयन्तो मोहमगाधमुपयान्ति । तमेतमर्थमेतौ मन्त्रावनुवदतः । अनेजदेकं मनसो जवीयस्तदेजति तन्नैजतीति । तथा च तैत्तिरीयके । यस्मात्परं नापरमस्ति किञ्चित् । एतत्सामगायन्नास्ते । अहमन्नमहमन्नमहमन्नमित्यादि । तथा च छान्दोग्ये । जक्षन् क्रीडन्नममाणः स यदि पितृलोककामः सर्वगन्धः सर्वरसः सर्वज्ञः सर्वविदित्यादि । आथर्वणे च । दूरात्स दूरे तदिहान्तिके च कठवल्लीष्वपि । अणोरणीयान् महतो महीयान् । कस्तं मदामदं देवम् । तद्धावतोऽन्यानत्येति तिष्ठदिति च । तथा गीतासु । अहं क्रतुरहं यज्ञः । पिताहमस्य जगतः । नादत्ते कस्यचित्पापम् । समं सर्व्वेषु भूतेषु । अविभक्तं विभक्तेषु । ग्रसिष्णुः प्रभविष्णु चेत्येवमाद्यागमार्थं विरुद्धमिव प्रतिभान्तं मन्यमानाः स्वचित्तसामर्थ्यादर्थनिर्णयाय विक-

---

गोचरत्वं ब्रह्मणः सप्रपञ्चत्वमविद्याकृतं निष्प्रपञ्चत्वं तात्त्विकमित्यागमार्थो विरोध उक्तः ॥ १५ ॥

कथं तर्हि तार्किका मीमांसकाश्च शास्त्रार्थविरुद्धं पश्यन्तो ब्रह्मास्ति नास्तीत्यादि विकल्पयन्तो मोहमुपयान्ति तत्राह । तमेतमिति । वादिव्यामोहस्याज्ञानं मूलमुक्त्वा गृह्यते ब्रह्मणो द्वैरूप्ये प्रमाणमाह । तमित्यादिना । तैत्तिरीयश्रुतावादिशब्देन अहमन्नमहमन्नमदन्नमद्मीत्यादि गृह्यते । छान्दोग्यश्रुतावादिशब्देन सत्यकामः । सत्यसङ्कल्पो विजरो विमृत्युरित्यादि गृहीतम् । श्रुतिसिद्धे द्वैरूप्ये स्मृतिमपि संवादयति । तथेति । पूर्व्वोक्तप्रकारे-

ल्पयन्तोऽस्त्यात्मा नास्त्यात्मा कर्त्ता अकर्त्ता मुक्तो बद्धः क्षणिको विज्ञानमात्रं शून्यश्चेत्येवं विकल्पयन्तो न पारमधिगच्छन्ति । अविद्याया विरुद्धधर्म्मदर्शित्वात्सर्व्वत्र । तस्मात्तत्र य एव श्रुत्याचार्य्यदर्शितमार्गानुसारिणः त एवाविद्यायाः पारमधिगच्छन्ति । त एव चास्मान्मोहसमुद्रादगाधादुत्तरिष्यन्ति नेतरे स्वबुद्धिकौशलानुसारिणः । परिसमाप्ता ब्रह्मविद्याऽमृतत्वसाधनभूता ॥ यां मैत्रेयी पृष्टवती भर्त्तारं यदेव भगवानमृतत्वसाधनं वेद तदेव मे ब्रूहि इत्येतस्या ब्रह्मविद्यायाः स्तुत्यर्थेयमाख्यायिकानीता । तस्या आख्यायिकायाः सङ्क्षेपतोऽर्थप्रकाशनार्थाविमौ मन्त्रौ भवतः । एवं हि मन्त्रब्राह्मणाभ्यां स्तुतत्वादमृतत्वसर्व्वप्राप्त्यादिसाधनत्वं ब्रह्मविद्यायाः प्रकटीकृतं राजमार्गमुपनीतं भवति । यथा आदित्य उद्यन् शार्वरं तमो-

---

शास्त्रार्थे विरोधसमाधाने विद्यमानेऽपि तदज्ञानाद्वादिविभ्रान्तिरित्युपसंहरति । इत्येवमादीति ॥ विकल्पमेव स्फुटयति । अस्तीति । सर्वत्र श्रुतिस्मृतिष्वात्मनीति यावत् । के तर्हि पारं ब्रह्मविद्यायाः समधिगच्छन्ति तत्राह । तस्मादिति । ब्रह्मज्ञानफलमाह । त एवेति । तद्यथेत्यादिवाक्यार्थं निष्कृष्योक्त्वा वृत्तं कीर्त्तयति । परिसमाप्तेति ।

ब्रह्मविद्या परिसमाप्ता चेत्किमुत्तरग्रन्थेनेत्याशङ्क्याह । एतस्या इति । इयमिति प्रवर्ग्यप्रकरणस्थामाख्यायिकां परामृशति । आनीतेति । इदं वै तन्मध्वित्यादिना ब्राह्मणेनेति शेषः । तदेतदृषिरित्यादेस्तात्पर्यमाह । तस्या इति । तद्वां नरेत्यादिरेको मन्त्रः । आथर्वणायेत्यादिरपरः । मन्त्रब्राह्मणाभ्यां वक्ष्यमाणरीत्या ब्रह्मविद्यास्तुतत्वे किं सिध्यतीत्याशङ्क्याह ।

ऽपनयतीति तद्वत्। अपि चैवं स्तुता ब्रह्मविद्या या इन्द्र-राजरचिता सा दुष्प्राप्या देवैरपि। यस्मादश्विभ्यामपि देवभिषग्भ्यामिन्द्ररचिता विद्या महताऽऽयासेन प्राप्ता। ब्राह्मणस्य शिरश्छित्वाश्वं शिरः प्रतिसन्धाय तस्मिन्निन्द्रेण छिन्ने पुनः स्वशिर एव प्रतिसन्धाय तेन ब्राह्मणस्य स्वशिरसैवोक्ताशेषा ब्रह्मविद्या श्रुता। तस्मात्ततः परतरं किञ्चित्पुरुषार्थसाधनं न भूतं न भावि वा कुत एव वर्त्तमानमिति नातः परा स्तुतिरस्ति। अपि चैवं स्तूयते ब्रह्मविद्या। सर्व्वपुरुषार्थानां कर्म्म हि साधनमिति लोके प्रसिद्धम्। तच्च कर्म्म वित्तसाध्यं तेनाशापि नास्ति अमृतत्वस्य। तदिदममृतत्वं केवलयात्मविद्यया कर्म्मनिरपेक्षया प्राप्यते। यस्मात्कर्म्मप्रकरणे वक्तुं प्राप्तापि सती प्रवर्ग्यप्रकरणे कर्म्मप्रकरणादुत्तीर्य्य कर्म्मणा विरुद्धत्वात्केवलसन्न्याससहिताभिहिताऽमृतत्वसाधनाय। तस्मान्नातः परं पुरुषार्थसाधनमस्ति। अपि चैवं स्तुता ब्रह्मविद्या। सर्वो हि लोको द्वन्द्वारामः। स

---

एवं होति। तस्या दुर्लभसाधनत्वं दृष्टान्तेन स्फुटयति। यथेति। केन प्रकारेण ब्रह्मविद्यायाः स्तुतत्वं तदाह। अपि चेति। अपिशब्दः स्तावकब्राह्मणसम्भावनार्थः। मन्त्रद्वयसमुच्चयार्थश्चशब्दः। एवंशब्दसूचितं स्तुतिप्रकारमेव प्रकटयति। य इन्द्रेति। तस्या दुष्प्रापत्वे हेतुमाह। यस्मादिति। महान्तमायासं स्फुटयति। ब्राह्मणस्येति॥ कृतार्थेनापीन्द्रेण रचितत्वे विद्याया दौर्लभ्यं फलितमाह। तस्मादिति। न केवलमुक्तेनैव प्रकारेण विद्या स्तूयते किन्तु प्रकारान्तरेणापीत्याह। अपि चेति। तदेव प्रकारान्तरं प्रकटयति। सर्व्वेति। केवलयेत्यस्य व्याख्यानं कर्म्मनिरपेक्षयेति। तत्र हेतुः। यस्मादिति। किमिति तर्क-

वै नैव रेमे तस्मादेकाकी न रमते इति श्रुतेः। याज्ञवल्क्यो लोकसाधारणोऽपि सन्नात्मज्ञानबलात् भार्य्यापुत्रवित्तादिसंसाररतिं परित्यज्य प्रशान्तः सन् आत्मरतिर्बभूव। अपि चैवं स्तुता ब्रह्मविद्या। यस्माद्याज्ञवल्क्येन संसारमार्गादुत्तिष्ठतापि प्रियायै भार्य्यायै प्रीत्यर्थमेवाभिहिता। प्रियं भाषस एह्यास्वेति लिङ्गात्।

अत्रेयं स्तुत्यर्थाऽऽख्यायिकेत्यवोचाम। का पुनः साऽऽख्यायिकेत्युच्यते। इदमित्यनन्तरनिर्दिष्टं व्यपदिशति बुद्धौ सन्निहितत्वात्। वैशब्दः स्मरणार्थः। तदिताख्यायिकानिर्वृत्तं प्रकरणान्तराभिहितं परोक्षं वैशब्देन स्मारयन्निह व्यपदिशति। यत्तत्प्रवर्ग्यप्रकरणे सूचितं नाविष्कृतं मधु तदिदमिहानन्तरं निर्दिष्टं इयं पृथिवीत्यादिना। कथं तत्र प्रकरणान्तरे सूचितं दध्यङ् ह वा आभ्यामाथर्वणो मधु-

---

प्रकरणे प्राप्तापि प्रकरणान्तरे कथ्यते तत्राह। कर्म्मणेति॥ यदिदं पुमर्थोपायं कर्म्म त्यक्त्वा विद्यायामेवादरे तदधिकृतां समधिगतेति फलितमाह। तस्मादिति। प्रकारान्तरेण ब्रह्मविद्यायाः स्तुतिं दर्शयति। अपि चेति॥ अनात्मशक्तिं त्यक्त्वा आत्मन्येवात्मरति हेतुत्वान्महती विद्येत्यर्थः। विद्यान्तरेण तस्याः स्तुति माह। अपि चैवमिति॥ कथं ब्रह्मविद्या भार्य्यायै प्रीत्यर्थमेवोक्तेति गम्यते तत्राह। प्रियमिति।

आख्यायिकायाः स्तुत्यर्थत्वं प्रतिपाद्य वृत्तमनूद्याकाङ्क्षापूर्व्वकं तामवतार्य व्याकरोति। अत्रेत्यादिना। ब्रह्मविद्या सम्बन्धः। पदार्थमुक्त्वा वाक्यार्थमाह। यदिति। दध्यङ्ङित्यादि व्याकुर्व्वन्नाकाङ्क्षापूर्व्वकं प्रवर्ग्यप्रकरणस्थामाख्यायिकामनुकीर्त्तयति। कथमित्यादिना। आभ्यामश्विभ्यामिति यावत्। केन प्रकारेणोवाचेत्यपेक्षायामाह। तदेनयोरिति।

नामब्राह्मणमुवाच। तदेनयोः प्रियं धाम तदेवैनयोरेतेनो-पगच्छति। स होवाचेन्द्रेण वा उक्तोऽस्म्येतच्चेदन्यस्मा अनु-ब्रूयास्तत एव ते शिरश्छिन्द्यामिति। तस्माद्वै बिभेमि यद्वै मे स शिरो न छिन्द्यात्तद्वामुपनेष्य इति। तौ होचतुरावां त्वा तस्मात्त्रास्यावहे इति। कथं मा त्रास्येथे इति। यदा नावुपनेष्यसे। अथ ते शिरश्छित्त्वाऽन्यत्राहृत्योपनिधास्यावः। अथाश्वस्य शिर आहृत्य तत्ते प्रतिधास्यावः। तेन नावनुव-क्ष्यसि। स यदा नावनुवक्ष्यसि। अथ ते तदिन्द्रः शिरश्छे-त्स्यति। अथ ते स्वशिर आहृत्य तत्ते प्रतिधास्याव इति। तथेति तौ होपनिन्ये। तौ यदोपनिन्ये। अथास्य शिरश्छि-त्त्वान्यत्रोपनिदधतुः। अथाश्वस्य शिर आहृत्य तद्धास्य प्रतिदधतुः। तेन हाभ्यामनूवाच। स यदाभ्यामनूवाचा-थास्य तदिन्द्रः शिरश्चिच्छेद। अथास्य स्वं शिर आहृत्य

---

एनयोरश्विनोस्तन्मधु प्रीत्यास्पदमासीत्। तद्यथात्ताभ्यां प्रार्थितो ब्राह्मण-स्तदुवाचेत्यर्थः। यदश्विभ्यां मधु प्रार्थितं तदेतेन वक्ष्यमाणेन प्रकारेण प्रयच्छन्नेवैनयोरश्विनोराचार्य्यत्वेन ब्राह्मणसमीपगमनं कृतवानित्याह। तदेवेति। आचार्य्यत्वानन्तरं ब्राह्मणस्य वचनं दर्शयति। स होवाचेति। एतच्छब्दो मध्वनुभवविषयः। यद्ययोर्युवयोरन्यस्मै अन्यस्मैत्रयोर्वा युवामुप-नेष्ये शिष्यत्वेन स्वीकरिष्यामीति यावत्। तौ देवभिषजावश्विनौ शिरश्छे-दनिमित्तं मरणं यच्छ्वस्यर्थः। नावावामुपनेष्ये स्वशिष्यत्वेन स्वीकरिष्यसि यदेति यावत्। अथ यद्धस्तदेत्यर्थः। ब्राह्मणस्यानुज्ञानन्तर्यमथेत्युक्तम्। मधुप्रवचनानन्तर्य्यं तृतीयस्याथशब्दस्यार्थः। यदश्वस्य शिरो ब्राह्मणे निबद्धं तस्य छेदनानन्तर्य्यं चतुर्थस्याथशब्दस्यार्थः। तर्हि वनस्पति

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत्तद्वान्नरासनयेदꣳस उग्र-

---

मुद्वास्य प्रतिदधतुरिति । यावत्तु प्रवर्ग्यकर्म्माङ्गभूतं मधु तावदेव तत्राभिहितं न तु कक्ष्यमात्मज्ञानाख्यम् । तत्र याऽऽख्यायिकाभिहिता सेह स्तुत्यर्था प्रदर्श्यते ।०॥।०। इदं वै तन्मधु दध्यङ्ङाथर्वणोऽनेन प्रपञ्चेनाश्विभ्यामुवाच । तदेतदृषिस्तदेतत्कर्म्म ऋषिर्मन्त्रः पश्यन्नुपलभमानोऽवोचदुक्तवान् । कथं तद्दंस इति व्यवहितेन सम्बन्धः । दंस इति कर्म्मणो नामधेयम् । तच्च दंसः किं विशिष्टम् । उग्रं क्रूरम् । वां युवयोः । हे नरा नराकारौ अश्विनौ तच्च कर्म्म किन्निमित्तं सनये लाभाय लाभलुब्धो हि लो-

---

मधु प्रवर्ग्यप्रकरणे प्रदर्शितमेवेति सूचितमनेन ब्राह्मणेनेत्याशयेनाह । यावत्त्विति । प्रवर्ग्यप्रकरणे स्थिताख्यायिका किमर्थमत्रानीतेत्याशङ्क्याह तस्याः ब्रह्मविद्यायाः स्तुत्यर्थेयमाख्यायिकेत्यतोऽत्रोपसंहरति । तत्रेति ।

ब्राह्मणभागव्याख्यां निगमयति । इदमिति । तद्वामित्यादि मन्त्रमुत्थाप्य व्याचष्टे । तदेतदिति । कथं लाभायेति क्रूरकर्म्मानुष्ठानमत आह । लाभेति । ननु प्रतिषेधे प्रसिद्धो नकारः कथमिवार्थे व्याख्यायते तत्राह । नकारस्त्विति । वेदे पदादुपरिष्टात् यो नकारः श्रुतः स खलूपचारः सन् उपमार्थोऽपि भवति न निषेधार्थः । तत्रोदाहरणमाह । यथेति । अश्वं न गूढमश्विनेत्यत्र नकारो यथोपमार्थीयस्तथा प्रकृतेऽपीत्यर्थः । तदेव स्फुटयति । अश्वमिवेति । यद्वदिति उपमार्थीये नकारे इति वाक्यस्वरूपमनूद्य तदर्थं कथयति । तन्यतुरित्यादिना । विद्यास्तुतिद्वारा तद्वन्तावश्विनावत्र न स्तूयेते किन्तु क्रूरकर्म्मकारित्वेन निन्द्येते

माविष्कृणोमि तन्यतुर्न वृष्टिं दध्यङ् ह यन्मध्वा-
थर्वणो वामश्वस्य शीर्ष्णा प्रयदीमुवाचेति ॥ १६ ॥

---

केऽपि क्रूरं कर्म्माचरति तथैवैतौ उपलभ्येते । यथा लोके तदाविः प्रकाशं कृणोमि करोमि यद्रहसि भवद्भ्यां कृतं निमिवेत्युच्यते तन्यतुः पर्जन्यो न इव । नकारस्तूपरिष्टादुपचारः । उपमार्थीयो वेदे न प्रतिषेधार्थः । यथाश्वं न अश्वमिवेति यद्वत् । तन्यतुरिव वृष्टिं यथा पर्जन्यो वृष्टिं प्रकाशयति स्तनयित्वादिशब्दैस्तद्वदहं युवयोः क्रूरं कर्म्माविष्कृणोमि इति सम्बन्धः । नन्वश्विनोः स्तुत्यर्थौ कथमिमौ मन्त्रौ स्यातां । निन्दावचनौ हि इमौ । नैष दोषः । स्तुतिरेवैषा न निन्दावचनौ । यस्मादीदृशमप्यति क्रूरं कर्म्म कुर्व्वतोर्युवयोर्न लोम च हीयत इति । न चान्यत् किञ्चिद्धीयत इवेति । स्तुतावेतौ भवतः । निन्दां प्रशंसां हि लौकिकाः

---

तदाख्यायिका विद्यास्तुत्यर्थत्वयुक्तमिति शङ्कते । नन्विति । आख्यायिकाया विद्यास्तुत्यर्थत्वमविरुद्धमिति परिहरति । नैष इति । लोममात्रमपि न हीयते यस्मात्तस्माद्विद्यास्तुत्या तद्वतोः स्तुतिरेवात्र विवक्षितेति योजना । यद्यपि क्रूरकर्म्मकारिणोरश्विनोर्न दृष्टहानिः तथाप्यदृष्टहानिः स्यादेवेत्राशङ्क्य कैमुतिकन्यायेनाह । न चेति । कथं पुनर्निन्दायां दृश्यमानायां स्तुतिरिष्यते तत्राह । निन्दामिति । न हि निन्दानिन्द्यं निन्दितुमपि तु विधेयं स्तोतुमिति न्यायादित्यर्थः । यथा निन्दा न निन्द्यं निन्दितुमेव तथा स्तुतिरपि स्तुत्यं स्तोतुमेव न भवति किन्तु निन्दितुमपि तथा च नानयोर्व्यवस्थितत्वमित्याह । तथेति । तद्वामित्यादिमन्त्रस्य पूर्व्वार्द्धं व्याख्यायाख्यायिकायाः स्तुत्यर्थत्वविरोधश्चोद्धृत्य उत्तरार्द्धं व्याचष्टे ।

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचदाथर्वणायाश्विना दधी-

---

चरन्ति । तथा प्रशंसारूपा च निन्दा लोके प्रसिद्धा द-ध्यङ्नामाथर्वणः । ह इति अनर्थको निपातः । यन्मधुब्रा-ह्मणमात्मज्ञानलक्षणम् । अथर्वणो वां युवाभ्यामश्वस्य शीर्ष्णा शिरसा यदीमुवाच यत् प्रोवाच मधु । ईमिति अनर्थको निपातः । इदं वै तन्मधु इत्यादि पूर्ववत् मन्त्रान्तरप्रद-र्शनार्थम् ॥ १६ ॥

तथाऽन्यो मन्त्रस्तामेवाख्यायिकामनुसरति स्म । अथर्व-णो दध्यङ्नामाथर्वणोऽन्यो विद्यत इति । अतो विशिनष्टि दध्यङ्नामाथर्वणस्तस्मै दधीचे आथर्वणाय हे अश्विनाविति मन्त्रदृशो वचनं अश्व्यं अश्वस्य स्वभूतं शिरो ब्राह्मणस्य शिरसि छिन्नेऽश्वस्य शिरश्छित्वा ईदृशमति क्रूरं कर्म कृत्वा-अश्व्यं शिरो ब्रह्माणं प्रति ऐरयतं गमितवन्तौ युवाम् । स च आथर्वणो वां युवाभ्यां तन्मधु प्रावोचद्यत्पूर्वं प्रति-

---

दध्यङ्नामेति । यत्कक्ष्यं ज्ञानाख्यं मधु तदाथर्वणो युवाभ्यामश्वस्य शिरसा प्रावोचत् । यच्चासौ मधु युवाभ्यामुक्तवान् तदहमाविष्कृणोमि इति सम्बन्धः । समानार्थत्वे किमिति पुनरुच्यते तत्राह । मन्त्रान्तरेति ॥१६॥

तुल्यार्थस्य ब्राह्मणस्य तात्पर्यमाह । तथेति । विशेषणकृत्यं दर्शयन् व्याकरोति । दध्यङ्नामेति । प्रथममश्व्यमित्यादि पदार्थवचनं अश्वस्ये-त्यादौ छित्वेत्यस्य कर्मोक्तिः । अश्व्यं शिर इत्यत्र त्वन्वयार्थमुक्तमिति विभागः । प्रेक्षापूर्वकारिणामीदृशी प्रवृत्तिरयुक्तेति शङ्कित्वा समाधत्ते ।

श्वेनवच्छिरः प्रत्यैरयत् स वां मधु प्रावोचदृतायन्त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वामिति ॥ १७ ॥

---

ज्ञातं वक्ष्यामीति। स किमर्थमेवं जीवितसन्देहमारुह्य प्रावोचदित्युच्यते ऋतायन् यत्पूर्वं प्रतिज्ञातं सत्यं तत्परिपालयितुमिच्छन्जीवितादपि हि सत्यधर्म्मपरिपालना गुरुतरेत्येतस्य लिङ्गमेतत्किन्तन्मधु प्रावोचदित्युच्यते त्वाष्ट्रं त्वष्टादित्यस्तस्य सम्बन्धि यज्ञशिरश्छिन्नं त्वष्टाऽभवत्तत्प्रतिसन्धानार्थं प्रावर्ग्यं कर्म्म। तत्र प्रवर्ग्यकर्म्माङ्गभूतं यद्विज्ञानं तत्त्वाष्ट्रं मधु यज्ञस्य शिरश्छेदनप्रतिसन्धानादिविषयं दर्शनं त्वाष्ट्रं यन्मधु हे दस्रौ दस्राविति परबलानां उपक्षयितारौ शत्रूणां वा हिंसितारौ। अपि च न केवलं त्वाष्ट्रमेव मधु कर्म्मसम्बन्धि युवाभ्यामवोचदपि च कक्ष्यं गोप्यं रहस्यं परमात्मसम्बन्धि यद्विज्ञानं मधु मधुब्राह्मणेनोक्तं अध्यायद्वयप्रकाशितं तच्च वां युवाभ्यां प्रावोचदित्यनुवर्त्तते ॥ १७ ॥

---

स किमर्थमिति। ऋतायन्नित्यत्रार्थसिद्धमर्थं कथयति। जीवितादपीति। यज्ञस्य शिरोऽच्छिद्यत ते देवा अश्विनावब्रुवन्भिषजौ वै स्थ इदं यज्ञस्य शिरः प्रतिधत्तमित्यादि श्रुत्यन्तरमाश्रित्याह। यज्ञस्येत्यादि। प्रवर्ग्यकर्म्मण्येवं प्रवृत्तेऽपि प्रकृते विज्ञाने किमायातं तदाह। तत्रेति। उक्तमेव सङ्गृह्णाति। यज्ञस्येति। यद्यथोक्तदर्शनं तत्त्वाष्ट्रं मधु यच्च तन्मधु तत्प्रावोचदिति सम्बन्धः। अध्यायद्वयप्रकाशितमतीतचतुर्थाभ्यामध्यायाभ्यां प्रकटितमिति यावत्। १७।

प्राणो वै ग्रहः सोऽपानेनातिग्रहेण गृहीतोऽपानेन हि गन्धं जिघ्रति ॥ २ ॥ वाग्वै ग्रहः स नाम्नातिग्राहेण गृहीतो वाचा हि नामान्यभिवदति ॥ ३ ॥ जिह्वा वै ग्रहः स रसेनातिग्राहेण गृहीतो जिह्वया हि रसान्विजानाति ॥ ४ ॥ चक्षुर्वै ग्रहः स रूपेणातिग्राहेण गृहीतश्चक्षुषा हि

---

प्राणो वै ग्रहः प्राण इति घ्राणमुच्यते । प्रकरणाद्वायुसहितः सोऽपानेनेति गन्धेनेत्येतदपानसचिवत्वादपानो गन्ध उच्यते । अपानोपहृतं हि गन्धम् । घ्राणेन सर्वो लोको जिघ्रति । तदेतदुच्यते अपानेन हि गन्धान् जिघ्रतीति ॥ २ ॥

वाग्वै ग्रहो वाचा ह्यध्यात्मपरिच्छिन्नया आसङ्गविषयास्पदयाऽसत्याऽनृताऽसभ्यबीभत्सादिवचनेषु व्याप्तया गृहीतो लोकोपहृतः तेन वाक् ग्रहः स नाम्नातिग्राहेण

---

प्राणशब्दस्य घ्राणविषयत्वे पूर्वोत्तरग्रन्थयोर्वागादीनां प्रकृतत्वं हेतुमाह । प्रकरणादिति । तस्य गन्धेन गृहीतत्वसिद्ध्यर्थं विशिनष्टि । वायुसहित इति । अपानशब्दस्य गन्धविषयत्वे गन्धस्यापानेनाभावं हेतुमाह । अपानेति । तत्रैव हेत्वन्तरमाह । अपानोपहृतं हीति । अपश्वासोऽत्रापानशब्दार्थः । उक्तेऽर्थे वाक्यं पातयति । तदेतदिति ॥ २ ॥

वाचो ग्रहत्वमुपपादयति । वाचा हीति । आसङ्गस्य विषयः शब्दादिरेवास्पदं यस्या वाचस्तयेति विग्रहः । तत्सिद्ध्यर्थमध्यात्मपरिच्छिन्नयेति विशेषणम् । असत्यं परपीडाकारं मिथ्यावचनं तदेव स्वदृष्टमात्रविरोध्यनृतं विपरीतं वा आदिपदेनेष्टानिष्टोक्तिग्रहः । वाचि प्रकृतायां स नाम्नेति कथमुच्यते तत्राह । वागादस्य इति । वक्तव्येन वाचो गृहीतत्वं

रूपाणि पश्यति ॥ ५ ॥ श्रोत्रं वै ग्रहः स शब्देनातिग्राहेण गृहीतः श्रोत्रेण हि शब्दाञ्छृणोति ॥ ६ ॥ मनो वै ग्रहः स कामेनातिग्राहेण गृहीतो मनसा हि कामान्कामयते ॥ ७ ॥ हस्तौ वै ग्रहः स कर्म्मणातिग्राहेण गृहीतो हस्ताभ्याꣳ हि कर्म्म करोति ॥ ८ ॥ त्वग्वै ग्रहः स स्पर्शेनातिग्राहेण गृहीतस्त्वचा हि स्पर्शान्वेदयत इत्येतेऽष्टौ ग्रहा अष्टावतिग्रहाः ॥ ९ ॥

---

गृहीतः स वागाख्यो ग्रहो नाम्ना वक्तव्येन विषयेणातिग्रहेणातिग्राहेणेति दैर्घ्यं छान्दसं नाम वक्तव्यार्था हि वाक् । तेन वक्तव्येनार्थेन प्रयुक्ता वाक् तेन वशीकृता तेन तत्कार्य्यमकृत्वा नैव तस्या मोक्षः । अतो नाम्नातिग्रहेण गृहीता वागित्युच्यते वक्तव्यासङ्गेन हि प्रवृत्ता सर्वानर्थैर्युज्यते । समानमन्यदित्येते । त्वक्पर्य्यन्ता अष्टौ ग्रहाः स्पर्शपर्य्यन्ताश्च एतेऽष्टावतिग्रहा इति ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

---

साधयति । वक्तव्यार्थेति । तादर्थ्येन वचनकरणत्वेनेति यावत् । वचनार्थं वाचो वक्तव्येन वशीकृतत्वे फलितमाह । तेनेति । तत्कार्थं वचनं मोक्षस्यासाधारणे देवतात्मनि पर्य्यवसानं वक्तव्यार्थोक्तिं विना वाचो पर्य्यवसाने सिद्धमर्थमाह । अत इति । वाचोऽतिग्रहगृहीतत्वमनुभवेन साधयति । वक्तव्येति । वाचा हीत्यादेरपानेन हीत्यादिना तुल्यार्थत्वाद्व्याख्येयत्वमाह । समानमिति । प्राणं वाग्जिह्वा चक्षुः श्रोत्रं मनो हस्तौ त्वगित्युक्ता ग्रहान्निगमयति । इत्येत इति । गन्धो नाम रसो रूपं शब्दः कामः कर्म्म स्पर्श इत्यतिग्रहान्निगमयति । स्पर्शपर्य्यन्ताश्चेति ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

याज्ञवल्क्येति होवाच यदिद॑ सर्वं मृत्योरन्नं

---

उपसंहृतेषु ग्रहातिग्रहेषु आह। पुनर्याज्ञवल्क्येति होवाच। यदिदं सर्वं मृत्योरन्नं सर्वं जायते विपद्यते च ग्रहातिग्रहलक्षणेन मृत्युना ग्रस्तम्। का स्वित्‌ नु स्यात् सा देवता यस्या देवताया मृत्युरप्यन्नं भवेन्मृत्युर्यस्योपसेचनमिति श्रुत्यन्तरात्। अयमभिप्रायः प्रष्टुर्यदि मृत्योर्मृत्युं वक्ष्यत्यनवस्था स्यात्। अथ न वक्ष्यत्यस्माद्ग्रहातिग्रहलक्षणान्मृत्योर्मोक्षो नोपपद्यते। ग्रहातिग्रहमृत्युविनाशे हि मोक्षः स्यात्। स यदि मृत्योरपि मृत्युः स्याद्ग्रहातिग्रहलक्षणस्य मृत्योर्विनाशः। अतो दुर्वचनं प्रश्नं मन्वानः पृच्छति। का स्वित्सा देवतेति। अस्ति तावन्मृत्योर्मृत्युः। नन्वनवस्था स्यात्। तस्याप्यन्यो मृत्युरिति नानवस्था। सर्वमृत्योर्मृत्व्यन्तरानुपपत्तेः। कथं पुनरवगम्यतेऽस्ति मृत्योर्मृत्युरिति।

---

प्रतीकमादाय व्याचष्टे। यदिदमिति। यदिदं व्याकृतं जगत्सर्वं मृत्योरन्नमिति योजना। तस्य तदन्नत्वं साधयति। सर्वमिति। मृत्योरन्नत्वसम्भावनायां श्रुत्यन्तरं संवादयति। मृत्युरिति। मृत्योर्मृत्युमधिकृत्य प्रश्नस्य करटदन्तनिरूपणवदप्रयोजनत्वमाशङ्क्याह। अयमिति। सत्येव ग्रहातिग्रहलक्षणे मृत्योर्मोक्षो भविष्यतीति चेन्नेत्याह। ग्रहेति। अस्तु तर्हि ग्रहातिग्रहनाशे मुक्तिरित्यत आह। स यदीति। न च मृत्योर्मृत्युरस्त्यनवस्थानादित्युक्तमिति भावः। पक्षेऽनवस्थानात्पक्षे चामुक्तिरित्यतः शब्दार्थः। अस्तिपक्षं परिगृह्णाति। अस्ति तावदिति। मृत्योर्मृत्युर्ब्रह्मात्मसाक्षात्कारो विवक्षितस्तस्याप्यन्यो मृत्युरस्ति चेदनवस्था। नास्ति चेत्तद्वित्वज्ञानस्यापि स्थितेरमुक्तिरिति शङ्कते। नन्विति। तत्रास्तिपक्षं

का स्वित्सा देवता यस्या मृत्युरन्नमित्यग्निर्वै मृत्युः सोऽपामन्नमप पुनर्मृत्युं जयति ॥ १० ॥

याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियत

---

दृष्टत्वादग्निस्तावत्सर्वस्य दृष्टो मृत्युर्विनाशकत्वात् सोऽद्भिर्भक्ष्यते सोऽग्निरपामन्नम्। एषाऽपि तर्ह्यस्ति मृत्योर्मृत्युरिति। तेन सर्वं ग्रहातिग्रहजातं भक्ष्यते मृत्योर्मृत्युना। तस्मिन् बन्धने नाशिते मृत्युना भक्षिते संसारात् मोक्ष उपपन्नो भवति। बन्धनं हि ग्रहातिग्रहलक्षणमुक्तम्। तस्माच्च मोक्ष उपपद्यत इत्येतत्प्रसाधितम्। अतो बन्धमोक्षाय पुरुषप्रयासः सफलो भवत्यतोऽपजयति पुनर्मृत्युम् ॥ १ ॥

परेण मृत्युना मृतो परमात्मदर्शनेन योऽसौ मुक्तो विद्वान् सोऽयं पुरुषो यत्र यस्मिन्काले म्रियते उदूर्ध्वम-

---

परिगृह्य परिहरति। नानवस्थेति। यथोक्तस्य मृत्योः स्वपरविरोधित्वाच्च किञ्चिदवश्यमितरार्थः। उक्तं पक्षं प्रश्नद्वारा प्रमाणारूढं करोति। कथमिति। दृष्टत्वं स्फुटयति। अग्निस्तावदिति। दृष्टफलमाचष्टे। एषाऽपीति। तस्य कार्यं कथयति। तेनेति। अप पुनर्मृत्युं जयतीत्यस्य पातनिकां करोति। तस्मिन्निति। उक्तमेव व्यक्तीकरोति। बन्धनं हीति। प्रसाधितं मृत्योरपि मृत्युरस्तीति। प्रदर्शनेनेति शेषः। मोक्षोपपत्तौ फलितमाह। अत इति। पुरुषप्रयासः शमादिपूर्वकश्रवणादितत्फलस्य ज्ञानस्य फलं दर्शयन्वाक्यं योजयति। अत इति। ज्ञानं पञ्चम्यर्थः। सम्यग्ज्ञानस्यापपुनर्मृत्युं जयतीत्युक्तम् ॥ १० ॥

फलं विशदीकर्तुं प्रश्नान्तरमुत्थापयति। परेणेति। परेण मृत्युना परमात्मदर्शनेनेति सम्बन्धः। ग्रहातिग्रहलक्षणो बन्धः सप्तम्यर्थः। ग्रहशब्देन प्रयोज्यशरीरग्रहीतः नामादीनां स्थूलानां वहिष्ठत्वे तत्स-

उदस्मात्प्राणाः क्रामन्त्याहो ३ नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते ॥ ११ ॥

---

स्याद्ब्रह्मविदो म्रियमाणात्प्राणा वागादयो ग्रहाः नामादयश्चातिग्रहा वासनारूपा अन्तस्थाः सप्रयोजकाः क्रामन्त्यूर्द्ध्वं उत्क्रामन्ति। आहोस्विन्नेति नेतीति होवाच याज्ञवल्क्यो नोत्क्रामन्त्यत्रैवास्मिन्नेव परेणात्मना अविभागं गच्छन्ति। विदुषि करणानि स्वयोनौ परब्रह्मसत्त्वे समवनीयन्ते एकीभावेन समवसृज्यन्ते प्रलीयन्त इत्यर्थः। ऊर्मय इव समुद्रे। तथा च श्रुत्यन्तरं कलाशब्दवाच्यानां प्राणानां परस्मिन्नात्मनि प्रलयं दर्शयति। एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं

---

रुपतस्तयुक्तत्वात्कथं तदुत्क्रान्तिः पृच्छ्यते तत्राह। वासनारूपा इति। तेषामनुत्क्रान्तौ सुक्तासम्भवं सूचयति। स प्रयोजका इति। उत्क्रान्तिपक्षे ध्रुवं जन्म मृतस्य चेति न्यायात्पुनरुत्पत्तिःस्यादनुत्क्रान्तिपक्षे मरणप्रसिद्धिर्विरुध्येतेति भावः। द्वितीयं पक्षं परिगृह्य परिहरति। नेति होवाचेत्यादिना। कार्य्याणि करणानि वा सर्व्वाणि परेणात्मना सह विभागं गच्छन्ति सन्त्यस्मिन्नेव विदुषि समवनीयन्त इति सम्बन्धः। तेषां विदुषि विलये हेतुमाह। स्वयोनाविति। विद्वानेव हि पूर्व्वमविद्यया तेषां योनिरासीत् तस्मिन्विद्योदयायां तद्बलादविद्यायामपनीतायां परिपूर्णे तत्त्वे तेषां पर्य्यवसानं सम्भवतीत्यर्थः। कारणे कार्य्याणां प्रविलये दृष्टान्तमाह। ऊर्म्मय इति। प्राणादीनां कारणसंसर्गाख्यो लयश्चेत्पुनरुत्पत्तिः स्यादित्याशङ्क्य ज्ञाने सत्यज्ञानध्वंसान्नैवमित्यभिप्रेत्याह। तथा

याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते

---

गच्छन्तीति। इति परेणात्मनाऽविभागं गच्छन्तीति दर्शितं। न तर्हि मृतो नहि मृतश्चायं यस्मात् स उच्छ्वयत्युच्छूनतां प्रतिपद्यते आध्मायति वाह्येन वायुना पूर्य्यते दृतिवदाध्मातो मृतः शेते निश्चेष्टः। बन्धननाशे मुक्तस्य न क्वचिद्गमनमिति वाक्यार्थः॥११॥

मुक्तस्य किं प्राणा एव समवनीयन्ते आहोस्वित्तत्प्रयोजकमपि सर्वम्। अथ प्राणा एव न तत्प्रयोजकं सर्व्वं प्रयोजके विद्यमाने पुनः प्राणानां प्रसङ्गः। अथ सर्वमेव कामकर्म्मादि ततो मोक्ष उपपद्यत इत्येवमर्थ उत्तरः प्रश्नः। याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते किमनेन

---

चेति। स्वविषयाण्येकादशेन्द्रियाणि वायवश्च पञ्चेति षोडशकलास्तासां स्वातन्त्र्यमाश्रयान्तरं च वारयति। पुरुषायणा इति। तासां निवृत्तिश्च पुरुषव्यतिरेकेण नास्तीति पुरुषं प्राप्येति प्राणाश्चेन्नोत्क्रामन्ति तर्हि मृतो न भवतीति प्रतीतिविरोधं शङ्कित्वा परिहरति। न तर्हीत्यादिना। इतिशब्दो भस्त्राविषयः। प्रकृतं वाक्यं प्रत्यक्षसिद्धदेहमरणानुवादकमित्यभिप्रेत्याह। बन्धनेति॥११॥

प्राणा उत्क्रामन्तीति विशेषणमाश्रित्य प्रश्नान्तरमादत्ते। मुक्तस्येति। पक्षद्वयेऽपि प्रयोजनं कथयति। अथेत्यादिना यत्पुनश्चेत्याद्यभूत्तदधुना नाममात्रावशेषमित्युक्तेनावशिष्टं किञ्चिदिति यथावगम्यते तथात्रापि नाममात्रं म्रियमाणं विद्वांसं न जहातीत्युक्ते न किञ्चिदवशिष्टमिति दृष्टिः स्यादिति प्रश्नोक्तितात्पर्यमाह। सर्व्वमिति। यथाश्रुतमर्थमाश्रित्य प्रत्युक्तिं व्याचष्टे। नाममात्रन्त्विति। विदुषो नामनित्यत्वे हेत्वन्तरमुत्तरवाक्यावष्टम्भेन दर्शयति। नित्यं हीति। अनन्तशब्दो नाम्नो व्यक्तिप्राचुर्य्ये

किमेनं न जहातीति नामेत्यनन्तं वै नामानन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति ॥ १२ ॥

याज्ञवल्क्येति होवाच यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मन-

---

जहातीति आहेतरो नामेति। सर्व्वं समवनीयत इत्यर्थः। नाममात्रन्तु न लीयते आकृतिसम्बन्धान्नित्यं हि नाम। अनन्तं वै नाम नित्यत्वमेवानन्त्यं नाम्नस्तदानन्त्याधिकृता अनन्ता वै विश्वेदेवा अनन्तमेव स तेन लोकं जयति तत्रा-मानन्त्याधिकृतान्विश्वान्देवानात्मत्वेनोपेत्य तेनानन्त्यदर्शनेनानन्तमेव लोकं जयति ॥ १२ ॥

ग्रहातिग्रहरूपं बन्धनमुक्तं मृत्युरूपं। तस्य च मृत्योर्मृत्युसद्भावान्मोक्षश्चोपपद्यते। स च मोक्षो ग्रहातिग्रहरूपाणामिहैव प्रलयः प्रदीपनिर्वाणवत्। यत्तद्ग्रहातिग्रहाख्यं बन्धनं मृत्युरूपं तस्य यत्प्रयोजकं यत्स्वरूपनिर्द्धारणार्थ-

---

प्रतिभाति। कुतो नित्यतेत्याशङ्क्याह। नित्यत्वमेवेति। व्यक्तिभेदस्य प्रसिद्धत्वान्न तद्वक्तव्यं ब्रह्मविदः स्वदृष्ट्या नामापि न विद्यते परदृष्ट्या तदवशेषोक्तिः शुको मुक्त इत्यादिव्यपदेशदर्शनादतो नामनित्यत्वं व्यावहारिकमिति भावः। ब्रह्मास्मीति दर्शनेन विश्वेदेवानामात्मत्वेनोपगम्यानन्तं लोकं जयतीति विद्वानुवादो ब्रह्मविद्यां स्तोतुमित्यभिप्रेत्यानन्तरवाक्यमादत्ते। तदानन्त्येति। तद्व्याचष्टे तन्नामानन्त्येति ॥ १२ ॥

यत्रास्येत्यादेस्तात्पर्य्यं वृत्तानुवादपूर्व्वकं कथयति। ग्रहातिग्रहरूपमित्यादिना। किमेनमित्यादिवाक्यस्य व्याख्यामुक्त्वा यत्रेत्यादेस्तात्पर्य्यञ्चोक्तम्। इदानीं भर्तृप्रपञ्चप्रस्थानमुत्थापति। अत्रेति। किमेनमित्यादाविति यावत्। समुच्चयानुष्ठानाद्देहयोः सप्रयोज-

श्चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरमाकाश-मात्मौषधीर्लोमानि वनस्पतीन्केशा अप्सु लोहितञ्च रेतश्च निधीयते क्वायं तदा पुरुषो भवतीत्याहर सोम्य हस्तमार्त्तभागा वामेवैतस्य वेदिष्यावो न नावेतत् स जन इति।

मिदमारभ्यते। याज्ञवल्क्येति होवाच। अत्र केचिद्वर्णयन्ति ग्रहातिग्रहस्य सप्रयोजकस्य विनाशेऽपि किल न मुच्यते नामावशिष्टोऽविद्ययोपरस्थानीयया स्वात्मप्रभवया परमात्मनः परिच्छिन्नो भोज्याच्च जगतो व्यावृत्त उच्छिन्नकामकर्मान्तराले व्यवतिष्ठते। तस्य परमात्मैकत्वदर्शनेन ह्येतद्दर्शनमपनेतव्यमिति। अतः परं परमात्मदर्शनमारब्धव्यमित्येवमपवर्गाख्यामन्तरालावस्थां परिकल्प्योत्तरग्रन्थसम्बन्धं कुर्वन्ति।

कयोर्नाशेऽपि पुंसोमुक्तिर्न चेत्तर्हि तस्य बद्धत्वायोगात्कामसौ दशामवलम्बतामित्याशङ्क्याह। नामावशिष्ट इति। चितेरूषरवदवस्थितात्मविद्यया परस्मात्परिच्छिन्नश्चेदात्मा तर्हि बन्धपक्षस्यैव स्यान्नतु भोज्याज्जगतो व्यावृत्तिरित्याशङ्क्याह। उच्छिन्नेति। सर्व्वस्य कर्मादिफलस्य स्वात्मनः सद्व्ययासादितस्य भोगादप्राप्त्यर्थाभावात्कामाभिवद्य्या कर्माभावात्प्रयोजकराशेरुच्छित्तिरित्यर्थः। किमेनमित्याद्यन्तरावस्थस्य विद्याधिकारिणो निर्द्धारणात्तदपेक्षितविद्याशेषत्वेनोपस्तप्रश्नादेरारम्भं सम्भावयति। तस्येति। इति शब्दो वर्णयन्तीत्यनेन सम्बध्यते। तर्हि यत्तोषस्तप्रश्नादौ ब्रह्मविद्योच्यते तस्यैवारम्भो युक्तो यत्तासेत्यादिस्तु ह्येतत्याशङ्क्य फलवद्विद्याप्राप्तिशेषत्वेन निवर्त्य मृत्युप्रयोजकनिर्द्धारणार्थो यत्तेत्यादिरित्यभिप्रेत्याह। एवमिति।

तत्र वक्तव्यं विशीर्णेषु करणेषु विदेहस्य परमात्मदर्शनश्रवणमनननिदिध्यासनानि कथमिति । समवनीतप्राणस्य हि नाममात्रावशिष्टस्येति तैरुच्यते मृतः शेत इति श्रुतं न मनोरथेनाप्येतदुपपादयितुं शक्यते । अथ जीवन्नेवाविद्यामात्रावशिष्टो भोज्यादपावृत्त इति परिकल्प्यते तत्तु किंनिमित्तमिति वक्तव्यम् । समस्तद्वैतैकत्वात्मप्राप्तिनिमित्तमिति यद्युच्यते तत्पूर्व्वमेव निराकृतं कर्म्मसहितेन द्वैतैकत्वात्मदर्शनेन । सम्पन्नोविद्वान्मृतः समवनीतप्राणो जगदात्मत्वं हिरण्यगर्भस्वरूपं वा प्राप्नुयादसमवनीतप्राणो भोज्याज्जीवन्नेव वा व्यावृत्तो विरक्तः परमात्मदर्शनाभिमुखः स्यात् । न चोभयमेकप्रयत्ननिष्पाद्येन साधनेन लभ्यं हिरण्य-

---

हिरण्यगर्भादन्यो वाऽन्योवा विद्याधिकारी प्रथमेऽपि मृतस्य जीवतो वा विद्याधिकारो विवक्षितस्तत्रैवेति पृच्छति । तत्रेति । तत्राद्यमाक्षिपति । विशीर्णेष्विति । आक्षेपं स्फुटयितुं तदीयां युक्तिमनुवदति । समवनीतेति । नाममात्रावशिष्टस्याधिकारो विद्यायामिति शेषः । समवनीतप्राणस्येतत्र श्रुतिं संवादयति । मृत इति । कथमेतावता यथोक्ताक्षेपसिद्धिस्तत्राह । न मनोरथेनेति । उपसंहृतप्राणस्य श्रवणाद्यधिकारित्वमेतच्छब्दार्थः । द्वितीयं शङ्कते । अथेति । अपावृत्तो दृष्टाधिकारीति शेषः । जीवतो भोग्याद्व्यावर्त्तनं सम्यग्धियं विना दुःशकमिति मत्वा पृच्छति । तत्त्विति । अप्राप्ते कामो भवति प्राप्ते निवर्त्तत इति प्रसिद्धे अपरविद्यया कर्म्मसमुच्चितया हैरण्यगर्भपदप्राप्तिरेव निवृत्तिकारणमिति शङ्कते । समस्तेति । अपरविद्यासमुच्चितं कर्म्म हैरण्यगर्भभोगप्रापकं न भोग्यान्निवृत्तिसाधनमिति तृतीये व्युत्पादितमिति परिहरति । तत्पूर्व्वमेवेति । उक्तमेव व्यक्तीकुर्व्वन् विभजते । कर्म्मसहितेनेति । अथैकमेव समुच्चितं कर्म्मोभयार्थं किं न स्यादत आह । नचेति । उभयार्थत्वाभावं समर्थयते ।

तौ होत्क्रम्य मन्त्रयाञ्चक्राते तौ ह यदूचतुः कर्म्म

गर्भप्राप्तिसाधनं चेन्न । ततो व्यावृत्तिसाधनं परमात्माभिमुखीकरणस्य भोज्याद्व्यावृत्तेः । साधनश्चेन्न हिरण्यगर्भप्राप्तिसाधनम् । न हि यद्गतिसाधनं तद्गतिनिवृत्तेरपि । अथ मृत्वा हिरण्यगर्भं प्राप्य ततः समवनीतप्राणो नामावशिष्टः परमात्मज्ञानेऽधिक्रियते । ततोऽस्मदाद्यर्थं परमात्मज्ञानोपदेशोऽनर्थकः स्यात् । सर्व्वेषां हि ब्रह्मविद्या पुरुषार्थायोपदिश्यते तद्यो यो देवानामित्याद्यया श्रुत्या । तस्मादत्यन्तनिकृष्टा शास्त्रबाह्यैवेयं कल्पना । प्रकृतं वर्त्तयिष्यामः ॥

तत्र केन प्रयुक्तं ग्रहातिग्रहलक्षणं बन्धनमित्येतन्निर्दिधारयिषयाह । यत्रास्य पुरुषस्य असम्यग्दर्शिनः शिरः पा-

---

हिरण्यगर्भेत्यादिना । समुच्चितं कर्म्म नोभयार्थमित्यत्र दृष्टान्तमाह । न हीति । हिरण्यगर्भो विद्याधिकारीति पक्षं निक्षिपति । अथेति दूषयति । तत इति । ननु महानुभावानामस्मद्विशिष्टानामेव ब्रह्मविद्योपदिश्यमाना मोक्षं फलयति । नास्माकमित्याशङ्क्याह । सर्व्वेषामिति । न च त्वन्मतेऽपि यद्द्वारा श्रवणादि कृत्वा विद्योदयस्तद्द्वारैव चिदात्मनो मुक्तिसिद्धौ कृतमित्यत्र श्रवणादिनेति वाच्यम् । द्वारभेदस्यानुष्ठातृविभागाधीनप्रवृत्तिप्रयुक्तप्रयोजनं चेत् विद्योदयस्य च काल्पनिकत्वेन यथाप्रतीति व्यवस्थोपपत्तेः । वस्तुतो निर्विशेषे चिन्मात्रेऽपाविद्याविद्ये बन्धमुक्ती चेत्यभिप्रेत्यापरपक्षनिराकरणमुपसंहृत्य श्रुतिव्याख्यानं प्रस्तौति । तस्मादिति ।

कर्त्तव्ये श्रुतिव्याख्याने यत्रेत्याद्याकाङ्क्षापूर्वकमवतारयति । तत्रेति । तत्र पुरुषशब्देन विद्वानुक्तो ऽनन्तरं तत्सन्निधिरित्याशङ्क्य वक्ष्यमाणकर्माश्रयत्वलिङ्गेन बाध्यः सन्निधिरित्यभिप्रेत्याह । असम्यग्दर्शिन इति ।

ह्यैव तदूचतुरथ यत्प्रशशंसतुः कर्म्म हैव तत्प्रशशंसतुः पुण्यो वै पुण्येन कर्म्मणा भवति

---

ष्यादिमतो मृतस्य वागग्निमप्येति। वातं प्राणोऽप्येति चक्षुरादित्यमप्येति। इति सर्व्वत्र सम्बध्यते मनश्चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरमाकाशमात्मेत्यत्रात्माधिष्ठानं हृदयाकाशमुच्यते। स आकाशमप्येति ओषधीरपि यन्ति लोमानि वनस्पतीनपि यन्ति केशा अप्सु लोहितं रेतश्च निधीयत इति। पुनरादानलिङ्गं सर्व्वत्र हि वागादिशब्देन देवताः परिगृह्यन्ते। न तु करणान्येवापक्रामन्ति प्रागमोक्षात्। तत्र देवताभिरनधिष्ठितानि करणानि न्यस्तदात्राद्युपमानानि। विदेहश्च कर्त्ता पुरुषोऽस्वतन्त्रः किमाश्रितो भवतीति पृच्छ्यते। क्वायं तदा पुरुषो भवतीति। किमाश्रितस्तदा पुरुषो भवतीति। यमाश्रयमाश्रित्य पुनः कार्य्यकरणसङ्घातमुपादत्ते। येन ग्रहातिग्रहलक्षणबन्धनं प्रयुज्यते। तत्किमिति

---

सन्निधिबाधे लिङ्गान्तरमाह। निधीयत इति। तस्य हि पुनरादानयोग्यद्रव्यनिधाने प्रयोगदर्शनादिहापि पुनरादानं लोहितादेराभातयतः-प्रसिद्धसंसारिगोचर एवायं प्रश्न इत्यर्थः। अविदुषो वागादिलयाभावाद्वा मनसि दर्शनादिन्यायात्तस्य चात्र श्रुतेर्विद्वानेव पुरुषस्तदीयकलाविलयस्य श्रुतिप्रसिद्धत्वादित्याशङ्क्याह। सर्व्वत्र हीति। अग्न्याद्यंशानां वागादिशब्दितानामपक्रमणेऽपि करणानां तदभावे तदधिष्ठानस्य देहस्यापि भावेन भोगसम्भवात्र प्रश्नावकाशोऽस्तीत्याशङ्क्याह। तत्रेति। देवतांशेषूपसंहृतेष्विति यावत्। तेषां ताभिरनधिष्ठितत्वे स्वार्थक्रियाक्षमत्वं फलतीत्याह। न्यस्तेति। करणानामधिष्ठातृहीनानां भोगहेतुत्वाभावेऽपि

पापः पापेनेति ततो ह जारत्कारव आर्त्तभाग उपरराम ॥ १३ ॥ इति बृहदारण्यके पञ्चमे प्रपाठके द्वितीयं ब्राह्मणम् ॥

---

प्रश्नः । अत्रोच्यते । स्वभावयदृच्छाकालकर्म्मदैवविज्ञानमात्रशून्यानि वादिभिः परिकल्पितानि । अतोऽनेकविप्रतिपत्तिस्थानत्वान्नैवं जल्पन्यायेन वस्तुनिर्णयः । अत्र वस्तुनिर्णयञ्चेदिच्छसि आहर सोम्य हस्तमार्त्तभाग हे आवामेवैतस्य त्वत्पृष्टस्य वेदितव्यं यत्तद्वेदिष्यावो निरूपयिष्यावः । कस्मान्न नौ आवयोरेतदस्मु सजने जनसमुदाये निर्णेतुं न शक्यते । अत एकान्तङ्गमिष्यावो विचारणाय । तौ हेत्यादिश्रुतिवचनं तौ याज्ञवल्क्यार्त्तभागावेकान्तं गत्वा किञ्चक्रतुरित्युच्यते । तौ ह उत्क्रम्य सजनाद्देशान्मन्त्रयाञ्चक्राते । आदौ लौकिकवादिपक्षाणामेकैकं परिगृह्य विचारितवन्तौ । तौ ह विचार्य यदूचतुरपोह्य पूर्व्वंपक्षान्सर्व्वानेतच्छृणु । कर्म्म हैवाश्रयं पुनः पुनः कार्य्यकरणोपादानहेतुं तत्तत्रोचतुरुक्तवन्तौ । न केवलं कालकर्म्म दैवेश्वरेष्वभ्युपगतेषु हेतुषु यत्प्रशशंसतुस्तौ कर्म्म हैव तत्प्रशशं-

---

कयमाश्रयप्रश्नो भोक्तुः स्यादित्याशङ्क्याह । विदेहश्चेति । प्रश्नं विष्टृणोति । यमाश्रयमिति । आह रैत्यादि परिहारमवतारयति । अत्रेति । मीमांसका लोकायता ज्योतिर्विदो वैदिका देवताकाण्डीया विज्ञानवादिनो माध्यमिकाश्चेत्यनेके विप्रतिपत्तारो जल्पन्यायेन परस्परप्रचलितमात्रपर्य्यन्तेन विचारेणेति यावत् । अत्रेति प्रश्नोक्तिः । ननु प्रष्टाऽऽर्त्तभागो

सतु:। यस्मान्निर्द्धारितमेतत्कर्म्मप्रयुक्तं ग्रहातिग्रहादिकार्य्यकरणोपादानं पुनः पुनः। तस्मात्पुण्यो वै शास्त्रविहितेन पुण्येन कर्म्मणा भवति। तद्विपरीतेन विपरीतो भवति। पापः पापेनेत्येवं याज्ञवल्क्येन प्रश्नेषु निर्णीतेषु ततोऽशक्यप्रकम्प्यत्वाद्याज्ञवल्क्यस्य ह जारत्कारव आर्त्तभाग उपरराम ॥ १३ ॥ इति श्रीमद्बृहदारण्यके पञ्चमे प्रपाठके द्वितीयब्राह्मणभाष्यं ॥

अथहैनं भुज्युर्लाह्यायनिः पप्रच्छ। ग्रहातिग्रहलक्षणं बन्धनमुक्तम्। यस्मात्सप्रयोजकान्मुक्तो मुच्यते। येन वा बद्धःसंसरति स मृत्युः। तस्माच्च मोक्ष उपपद्यते। यस्मान्मृत्योर्मृत्युरस्ति। मुक्तस्य च न गतिः क्वचित्। सर्व्वोत्सादो नाममात्रावशेषः प्रदीपनिर्वाणवदिति चावधृतम्। त-

याज्ञवल्क्यश्च प्रतिवक्तेति द्वाविहोपलभ्येते। तयोश्च तौ हेत्यादिवचनमयुक्तं तृतीयस्याभावादत आह। तौ हेत्यादीति। तत्रेत्येकान्ते स्थित्वा विचारावस्थायामिति। यावत्। न केवलं कर्म्मकारणमूचतुः किन्तु तदेव कालादिषु हेतुत्वेऽभ्युपगतेषु सत्सु प्रशशंसतुः। अतः प्रशंसावचनात्कर्म्मणः प्राधान्यं गम्यते। न तु कालादीनामहेतुत्वम्। तेषां स्वरूपनिष्पत्तौ कारकतया गुणभावदर्शनात् फलकालेऽपि तत्प्राधान्येनैव तद्धेतुत्वसम्भवादित्याह। न केवलमिति। पुण्यो वै पुण्येनेत्यादि व्याचष्टे। यस्मादित्यादिना ॥ १३ ॥ आर्त्तभागब्राह्मणं द्वितीयम् ॥ ० ॥

ब्राह्मणान्तरमवतार्य्य वृत्तं कीर्त्तयति। अथेत्यादिना। उक्तमेव तस्य स्वतन्त्रत्वं व्यक्तीकरोति। यस्मादिति। अग्निर्वै मृत्युरित्यादावुक्तं स्मरयति। तस्मादिति। यत्रायमित्यादावुक्तमनुद्रवति। मुक्तस्य चेति। यत्रास्येत्यादौ निर्णीतमनुभाषते। तत्रेति। पूर्व्वब्राह्मणस्थो यन्थः सम्बन्धः। तस्य चावधारितमित्यनेन स बन्धः। संसरतां मुच्यमानानाञ्च

च संसरतां मुच्यमानानाञ्च कार्य्यकरणानां स्वकारणसंसर्गे समाने मुक्तानामत्यन्तमेव पुनरनुपादानम्। संसरतान्तु पुनः पुनरुपादानं येन प्रयुक्तानां भवति तत्कर्म्मेत्यवधारितं विचारणपूर्व्वकम्। तत्क्षये च नामावशेषेण सर्व्वोत्सादो मोक्षस्तच्च पुण्यपापाख्यं कर्म्म। पुण्यो वै पुण्येन कर्म्मणा भवति पापः पापेनेत्यवधारितत्वादेतत्कृतः संसारः। तत्रापुण्येन स्थावरजङ्गमेषु स्वभावदुःखबहुलेषु नरकतिर्य्यक्प्रेतादिषु च दुःखमनुभवति। पुनः पुनर्जायमानो म्रियमाणश्चेत्येतद्राजवर्त्मवत्सर्व्वलोकप्रसिद्धम्। यस्तु शास्त्रीयः पुण्यो वै पुण्येन कर्म्मणा भवति तत्रैवादरः क्रियते। इह श्रुत्वा पुण्यमेव च कर्म्म सर्व्वपुरुषार्थसाधनमिति सर्व्वे श्रुतिस्मृति-

---

यानि कार्य्यकरणानि तेषामिति वैयधिकरण्यमुपादानमनुपादानमित्युभयत्र कार्य्यकरणानामिति सम्बन्धः। कर्म्मणो भावाभावाभ्यां बन्धमोक्षावुक्तौ। तत्राभावद्वारा कर्मणो मोक्षहेतुत्वं स्फुटयति। तत्क्षये इति। तस्य भावद्वारा बन्धहेतुत्वं प्रकटयति। तच्चेति पुण्यपापयोरुभयोरपि संसारफलत्वाविशेषात्पुण्यफलवत्पापफलमितरत्र वक्तव्यम्। अन्यथा ततो विरागायोगादित्याशङ्क्य वर्त्तिष्यमाणस्य तात्पर्य्यं वक्तुं भूमिकां करोति। तत्रेति। पुण्येऽपुण्येषु च निर्द्धारणार्था सप्तमी। स्वभावदुःखबहुलेष्वित्युभयतः सम्बध्यते। तर्हि पुण्यफलमपि सर्व्वलोकप्रसिद्धत्वान्नात्र वक्तव्यमित्याशङ्क्याह। यस्त्विति। शास्त्रीयः सुखानुभव इति शेषः। इहेति ब्राह्मणोक्तिः। शास्त्रीयं कर्म सर्व्वमपि संसारफलमेवेति वक्तुं ब्राह्मणमिति। उक्ताशङ्कोत्तरत्वेनापि तदवतारयति। पुण्यमेवेत्यादिना। मोक्षस्य पुण्यसाध्यत्वं निधानदृष्टेण साधयति। यावद्यावदिति। कथं तस्यानिवर्त्तनमित्याशङ्क्याह। ज्ञानसहितस्येति। समुच्चितमपि कर्म्म संसारफलमेवेत्यत्र हेतुमाह। व्याहतेति। मोक्षेऽपि स्वर्गादाविव पुरुषार्थत्वाविशेषात्

वादाः। मोक्षस्यापि पुरुषार्थत्वात्तत्साध्यता प्राप्ता। यावद्यावत्पुण्योत्कर्षस्तावत्तावत्फलोत्कर्षप्राप्तिः। तस्मादुत्तमेन पुण्योत्कर्षेण मोक्षो भविष्यतीत्याशङ्का स्यात्। सा निवर्त्तयितव्या। ज्ञानसहितस्य च प्रकृष्टस्य कर्म्मण एतावती गतिः। व्याकृतनामरूपास्पदत्वात्कर्म्मणस्तत्फलस्य च। न त्वकार्य्ये नित्येऽव्याकृतधर्म्मिण्यनामरूपात्मके क्रियाकारकफलस्वभाववर्जिते कर्म्मणो व्यापारोऽस्ति। यत्र च व्यापारः संसार एवेत्यस्यार्थस्य प्रदर्शनाय ब्राह्मणमारभ्यते। यत्तु, केचिदुच्यते। विद्यासहितं कर्म्म निरभिसन्धि विषदध्यादिवत्कार्य्यान्तरमारभत इति। तन्न। अनारभ्यतान्मोक्षस्य। बन्धननाश एव हि मोक्षो न कार्य्यभूतः। बन्धनञ्चाविद्येत्यवोचाम।

कर्म्मणो व्यापारः स्यादित्याशङ्क्याह। न त्विति। अकार्य्यत्वमुत्पत्तिहीनत्वं नित्यत्वम्। नाशशून्यत्वं अव्याकृतधर्मित्वं व्याकृतनामरूपराहित्यम्। अशब्दमस्पर्शमित्यादिश्रुतिमाश्रित्याह। अनामेति। निष्कलं निष्क्रियमित्यादि श्रुतिमाश्रित्याह। क्रियेति। चतुर्विधक्रियाफलविलक्षणे मोक्षे कर्म्मणो व्यापारो न सम्भवतीति भावः। नन्वास्याणोरा च प्रजापतेः सर्व्वकर्म व्यापारात्कथं मोक्षे प्रजापतिभावलक्षणे तद्व्यापारो नास्ति तत्राह। यत्र चेति। कर्मफलस्य सर्व्वस्य संसारत्वमेवेति कुतः सिद्धमिति। तत्राह। इत्यस्येति। विद्यासहितमपि कर्म संसारफलं विद्यैव मोक्षार्थेति स्वपक्षशुद्ध्यर्थं विचारयन् पूर्व्वपक्षयति। यत्त्विति। यथा केवलं विषदध्यादिमरणज्वरादिकरमपि मन्त्रशर्करादियुक्तं जीवनपुष्ट्याद्यारभते तथा स्वतो बन्धफलमपि कर्मफलाभिलाषमन्तरेणानुष्ठितं विद्यासमुच्चितं मोक्षाय क्षममित्यर्थः। मुक्तेः साध्यत्वाङ्गीकारे समुच्चितकर्मसाध्यत्वं स्यान्न तु तस्यासाध्यत्वं धीमात्रायत्तत्वादित्युत्तरमाह। तन्नेति। हेतुमेव साधयति। बन्धनेति। किन्तद्बन्धनं तदाह। बन्धनञ्चेति।

अविद्यायाश्च न कर्म्मणा नाश उपपद्यते। दृष्टविषयत्वाच्च कर्म्मसामर्थ्यस्य। उत्पत्त्याप्तिविकारसंस्कारा हि कर्म्मसामर्थ्यस्य विषय उत्पादयितुं प्रापयितुं विकर्त्तुं संस्कर्त्तुं च सामर्थ्यं कर्म्मणो नातो व्यतिरिक्तविषयोऽस्ति कर्म्मसामर्थ्यस्य। लोकेऽप्रसिद्धत्वात्। न च मोक्ष एषां पदार्थानामन्यतमोऽविद्यामात्रव्यवहित इत्यवोचाम। बाढं। भवतु केवलस्यैव कर्म्मण एवं स्वभावः। अतो विद्यासंयुक्तस्य तु निरभिसन्धेर्भवत्यन्यथा स्वभावः। दृष्टं ह्यन्यशक्तित्वेन निर्ज्ञा-

अविद्यानाशोऽपि कर्मारभ्यो भविष्यतीति चेन्नेत्याह। अविद्यायाश्चेति। मोक्षो न कर्मसाध्योऽविद्यात्मकत्वाद्रज्ज्वविद्यात्मकसर्पवदित्यर्थः। तत्रैव हेत्वन्तरमाह। दृष्टविषयत्वाच्चेति। न कर्मसाध्या मुक्तिरिति शेषः। तदेव स्फुटयति। उत्पत्तीति। उक्तमेव कर्मसामर्थ्यविषयमन्वयव्यतिरेकाभ्यां साधयति। उत्पादयितुमिति। अप्रसिद्धत्वादिति छेदः। उत्पत्त्यादीनामन्यतमत्वान्मोक्षस्यापि कर्म्मसामर्थ्यविषयता स्यादिति चेन्नेत्याह। न चेति। नित्यत्वादात्मत्वात्कूटस्थत्वान्नित्यशुद्धत्वान्निर्गुणत्वाच्चेत्यर्थः। आत्मभूतो यथोक्तो मोक्षस्तर्हि किमिति सर्व्वैषां न प्रथत इत्याशङ्क्याह। अविद्येति। उक्तकर्म्मसामर्थ्यं पूर्व्ववाद्यङ्गीकरोति। बाढमिति। अङ्गीकारमेव स्फोरयति। भवत्विति। एवं स्वभावत उत्पादनादौ समर्थता का तर्हि विप्रतिपत्तिस्तत्राह। विद्यासंयुक्तस्येति। अन्यथा स्वभावश्चतुर्विधे क्रियाफले विलक्षणेऽपि मोक्षे समर्थतेति यावत्। उत्पत्त्यादौ समर्थस्य कर्म्मणो विद्यासंयुक्तस्य तद्विलक्षणेऽपि मोक्षे सामर्थ्यमस्तीत्यत्र दृष्टान्तमाह। दृष्टं हीति। उक्तदृष्टान्तवशात्कर्म्मणोऽपि केवलस्य संसारफलस्य विद्यासंयोगान्मुक्तिफलत्वमपि स्यादित्याह। तथेति। समाधत्ते। नेत्यादिना। अतीन्द्रियत्वात्कर्म्मणो मुक्तिसाधनत्वे प्रत्यक्षाद्यसम्भवेऽप्यर्थापत्तिरस्तीति शङ्कते।। नन्विति। नित्येषु कर्म्मसु मोक्षातिरिक्तस्य फलस्य श्रुतस्याभावे सति तदुपलभ्यमानचोदनाया मोक्षफलत्वं विना उपपत्तिस्तेषां तस्मा-

तानामपि पदार्थानां विषदध्यादीनां विद्यामन्त्रशर्करादिसंयुक्तानामन्यविषये सामर्थ्यम्। तथा कर्म्मणोऽप्यस्त्विति चेन्न। प्रमाणाभावात्। तत्र हि कर्म्मण उक्तविषयव्यतिरेकेण विषयान्तरे सामर्थ्यास्तित्वे प्रमाणं न प्रत्यक्षं नानुमानं नोपमानं नार्थापत्तिर्न शब्दोऽस्ति। ननु फलान्तराभावे चोदनान्यथानुपपत्तिः प्रमाणमिति। न हि नित्यानां कर्म्मणां विश्वजिन्न्यायेन फलं कल्प्यते। नापि श्रुतं फलमस्ति।

चोद्यन्ते च तानि पारिशेष्यान्मोक्षस्तेषां फलमिति गम्यते। अन्यथा हि पुरुषा न प्रवर्त्तेरन्। ननु विश्वजिन्न्याय एवायातो मोक्षस्य फलस्य कल्पितत्वान्मोक्षे चान्यस्मिन्वा फलेऽकल्पिते पुरुषा न प्रवर्त्तेरन्निति मोक्षः फलं कल्प्यते।

---

षमत्वे मानमित्यर्थः। ननु विश्वजिता यजतेत्यत्र यागकर्त्तव्यतारूपो नियोगोऽवगम्यते। तस्य नियोज्यसापेक्षत्वात् स्वर्गः स्यात्सर्व्वान्प्रत्यविशिष्टत्वादिति न्यायेन स्वर्गकामो नियोज्योऽङ्गीकृतस्तथा नित्येष्वपि कर्मसु भविष्यति स्वर्गो नियोज्यविशेषणमत आह। न हीति। जीवन् जुहुयादिति जीवनविशिष्टस्य नियोज्यस्य लाभान्न नित्येषु स्वर्गो नियोज्यविशेषणमित्यर्थः। ननु जीवविशिष्टोऽपि फलाभावेन नियोज्यः स्यात्तथा च कर्मणा पितृलोक इति श्रुतं फलं तेषु कल्पयिष्यते नेत्याह। नापीति।

नित्यविधिप्रकरणे पितृलोकवाक्यस्याश्रवणादित्यर्थः। तर्हि फलाभावाच्चोदनैव माभूदिति चेन्नेत्याह। चोद्यन्ते चेति। तथापि फलान्तरं कल्प्यतामित्याशङ्का कल्पकाभावान्मैवमित्यभिप्रेत्याह। पारिशेष्यादिति। युक्तौ यत्कल्पकं तदेव फलान्तरस्यापि किं न स्यादित्याशङ्क्य तस्य निरतिशयफलविषयत्वान्मुक्तिकल्पकमेवेत्यभिप्रेत्याह। अन्यथेति। अनुपपत्त्या

श्रुतार्थापत्त्या यथा विश्वजिति। नन्वेवं सति कथमुच्यते वि-
श्वजिन्न्यायो न भवतीति। फलं कल्प्यते च। विश्वजिन्न्या-
यश्च न भवतीति विप्रतिषिद्धमभिधीयते। मोक्षः फलमेव
न भवतीति चेन्न। प्रतिज्ञाहानात्कर्म्म कार्य्यान्तरं विपद-
ध्यादिवदारभत इति हि प्रतिज्ञातम्। स चेन्मोक्षः क-
र्म्मणः कार्य्यं फलमेव न भवति सा प्रतिज्ञा हीयेत। क-
र्म्मकार्य्यत्वे च मोक्षस्य स्वर्गादिफलेभ्यो विशेषो वक्तव्यः। अथ
कर्म्म कार्य्यं न भवति नित्यानां कर्म्मणां फलं मोक्ष इ-
त्यस्या वचनव्यक्तेः कोऽर्थ इति वक्तव्यम्। न च कार्य्य-
फलशब्दभेदमात्रेण विशेषः शक्यः कल्पयितुम्। अफलश्च
मोक्षो नित्यैश्च कर्म्मभिः क्रियते। नित्यानां कर्म्मणां फ-

---

चेन्नियोज्यलाभाय नित्येषु फलं कल्प्यते। कथं तर्हि विश्वजिन्न्यायो न
प्राप्नोतीति सिद्धान्ती प्रत्याह। नन्विति। उक्तमेव विवृणोति। मोक्षे
चेति। अकल्पिते सतीति छेदः। श्रुतार्थापत्त्या विधेः श्रुतस्य प्रवर्त्तकत्वानुप-
पत्त्येति यावत्। विश्वजितीव नित्येषु मोक्षे फले कल्प्यमाने सति फलित-
माह। नन्वेवमिति। कथमित्युक्तामनुपपत्तिमेव स्फुटयति। फलञ्चेति।
फलकल्पनायां विश्वजिन्न्यायोऽवतरति मोक्षस्तु स्वरूपस्थितत्वेनानुत्पाद्य-
त्वात्। फलमेव न भवतीति शङ्कते। मोक्ष इति। निग्रहमुद्भावयन्नु-
त्तरमाह। नेति। प्रतिज्ञाहानिं प्रकटयति। कर्म्मेत्यादिना। कर्म्म-
कार्य्यत्वं मुक्तेरुपेत्योक्तं। तदेवायुक्तमित्याह। कर्म्मकार्य्यत्वे चेति।
फलत्वेऽपि कर्म्मकार्य्यत्वं न मुक्तेरित्युक्तं दोषं परिहर्त्तुं चोदयति।
अथेति। प्रतिज्ञाविरोधेन प्रतिविधत्ते। नित्यानामिति। फलत्वमङ्गीकृत्य
कार्य्यत्वेनाङ्गीकृते कथं व्याघात इत्याशङ्क्याह। न चेति। विशेषार्थगत इ
शेषफलत्वमङ्गीकृत्य कार्य्यत्वानङ्गीकारे व्याघातमुक्त्वा वैपरीत्येऽपि तद्वत्त्वाद

त्वं न कार्य्यमिति चेपोर्य्यो विप्रतिपिद्धोऽभिधीयते यथाग्निः शीत इति। विज्ञानवदिति चेद्यथा ज्ञानस्य कार्य्यं मोक्षो ज्ञानेनाक्रियमाणोऽप्युच्यते तद्वत्कर्म्मकार्य्यत्वमिति चेन्न। अज्ञाननिवर्त्तकत्वात् ज्ञानस्य। अज्ञानव्यवधाननिवर्त्तकत्वाज्ज्ञानस्य। मोक्षो ज्ञानस्य कार्य्यमित्युपचर्य्यते। न तु कर्म्मणा निवर्त्तयितव्यमज्ञानम्। न चाज्ञानव्यतिरेकेण मोक्षस्य व्यवधानान्तरं कल्पयितुं शक्यम्। नित्यत्वान्मोक्षस्य साधकस्वरूपाव्यतिरेकाच्च। यत्कर्म्मणा निर्वर्त्येत। अज्ञानमेव निवर्त्तयतीति चेन्न। विलक्षणत्वात् अनभिव्यक्तिरज्ञानमभिव्यक्तिलक्षणेन ज्ञानेन विरुध्यते। कर्म्म तु नाज्ञानेनविरुध्यते। तेन ज्ञानविलक्षणं कर्म्म। यदि ज्ञानाभावो यदि

---

यति। व्यफलञ्चेति। आद्यं व्याघातं दृष्टान्तेन स्फुटयति। नित्यानामिति। दृष्टान्तेन व्याघातं परिहरन्नाशङ्कते ज्ञानवदिति। चेदिति। तदेव स्फुटयति। यथेति। दृष्टान्तं विघटयति। नेति। ज्ञानस्य मोक्षस्य व्यवधिभूताज्ञाननिवर्त्तकत्वान्मोक्षः। तेनाक्रियमाणोऽपि तत्कार्य्यमिति व्यपदेशभाग् भवतीत्यर्थः। तदेव स्फुटयति। अज्ञानेति। दार्ष्टान्तिकं निराचष्टे। न त्विति। यत्कर्म्मणा निवर्त्त्येत तन्मोक्षस्य व्यवधानान्तरं कल्पयितुं न तु शक्यमिति सम्बन्धः व्यवधानध्वंसे कर्मणः प्रवेशेऽपि मुक्तावेव तत्प्रवेशः स्यादिति चेन्नेत्याह। नित्यत्वादिति।

नित्यकर्मनिवर्त्त्यं व्यवधानान्तरं माभूदज्ञानमेव तन्निवर्त्त्यं भविष्यति तथा च मोक्षस्य कर्मकार्य्यत्वं शक्यमुपचरितुमिति शङ्कते। अज्ञानमेवेति। कर्मणो ज्ञानाद्विलक्षणत्वान्नाज्ञाननिवर्त्तकत्वमित्युत्तरमाह। न विलक्षणत्वादिति। वैलक्षण्यमेव

संशयज्ञानं यदि विपरीतज्ञानं वोच्यतेऽज्ञानमिति सर्व्वं हि तज्ज्ञानेनैव निवर्त्त्यते। न तु कर्म्मणान्यतमेनापि विरोधाभावात्। अथादृष्टं कर्म्मणामज्ञाननिवर्त्तकत्वं कल्प्यमिति चेन्न। ज्ञानेनाज्ञाननिवृत्तौ गम्यमानायामदृष्टनिवृत्तिकल्पनानुपपत्तेः। यथावघातेन व्रीहीणान्तुषनिवृत्तौ गम्यमानायामग्निहोत्रादिनित्यकर्म्मकार्य्योऽदृष्टा न कल्प्यते तुषनिवृत्तिः। तद्वदज्ञाननिवृत्तिरपि नित्यकर्म्मकार्य्या न कल्प्यते ज्ञानेन विरुद्धत्वञ्चासकृत्कर्मणामवोचाम। यदविरुद्धं ज्ञानं कर्म्मभिस्तदेव लोकप्राप्तिनिमित्तमित्युक्तं। विद्यया देवलोक इति श्रुतेः। किञ्चान्यत्कले च फले

---

प्रकटयति। अनभिव्यक्तिरिति। इतश्च ज्ञाननिवर्त्त्यमेवाज्ञानमित्याह। यदीति। अन्यतमेन नित्यादिना व्यस्तेन समस्तेन वा श्रौतेन स्मार्त्तेन चेत्यर्थः। कर्म्माज्ञानयोरविरोधो हेत्वर्थः। अज्ञाननिवर्त्तकत्वं कर्मणो नान्वयव्यतिरेकसिद्धं। किन्त्वदृष्टमेव कल्प्यमिति शङ्कते। अथेति। दृष्टे सत्यदृष्टकल्पना न न्याय्येति परिहरति। न ज्ञानेनेति। उक्तमर्थं दृष्टान्तेन बुद्धावारोपयति। यथेत्यादिना। अदृष्टेति छेदः। अस्तु ज्ञानादज्ञानध्वस्तिः किन्तु कर्म्मसमुच्चितादित्याशङ्क्याह। ज्ञानेनेति। ननु कर्मभिरविरुद्धमपि हिरण्यगर्भादिविज्ञानमस्ति। तथा च समुच्चितं ज्ञानमज्ञानध्वंसि भविष्यति नेत्याह। यदविरुद्धमिति। नित्यानां कर्म्मणां समुच्चितानामसमुच्चितानाञ्च स्वरूपस्थितौ मोक्षे तत्प्रतिबन्धकाज्ञानध्वस्तौ वा न दृष्टसामर्थ्यं कल्प्यमित्युक्तं। इदानीं तत्कल्पनामङ्गीकृत्यापि दूषयति। किञ्चेति। कर्मणोऽस्ति मोक्षसामर्थ्यमित्येतदुक्तादेव कारणान्न भवति। किन्त्वन्यच्च कारणं तत्रास्तीत्यर्थः। तदेव दर्शयितुं विचारयति। कल्प्येति। विरोधमपनयति। द्रव्येति। कार्य्यत्वाभावं समर्थयते। यस्मिन्निति। पक्षान्तरमाह। किञ्चेति। सामर्थ्यविषयं विशदयति। यच्चे-

नित्यानां कर्म्मणां श्रुतानां यत्कर्म्मभिर्विरुध्यते द्रव्यगुणक-
र्म्मणां कार्य्यमेव न भवति किन्तत्कल्पयताम्। यस्मिन् कर्म्मणः
सामर्थ्यमेव न दृष्टं किं वा यस्मिन् दृष्टं सामर्थ्यं यच्च
कर्म्मणां फलमविरुद्धं तत्कल्पयतामिति पुरुषप्रवृत्तिजनना-
यावश्यं चेत्कर्म्मफलं कल्पयितव्यम्। कर्म्माविरुद्धविषय एव
श्रुतार्थापत्तेः क्षीणत्वान्नित्यो मोक्षः फलं कल्पयितुं न शक्यः।
तद्व्यवधानाज्ज्ञाननिवृत्तिर्वा। अविरुद्धत्वाददृष्टसामर्थ्यविषयत्वा-
च्चेति पारिशेष्यन्यायान्मोक्ष एव कल्पयितव्य इति चेत्।
सर्व्वेषां हि कर्म्मणां सर्व्वं फलम्। चान्यदितरकर्म्मफल व्य-
तिरेकेण फलं कल्पनायोग्यमस्ति। परिशिष्टश्च मोक्षः। स-
चेष्टोऽवेदविदां फलम्। तस्मात्स एव कल्पयितव्य इतिचेन्न।

---

ति। कथमिह निर्णयस्तत्राह। पुरुषेति। कल्पयितव्यं फलमिति
सम्बन्धः। उत्पत्त्यादीनामन्यतमो हि कर्मभिरविरुद्धो विषयः। तत्रैव
नित्यकर्मचोदनानुपपत्तेरुपक्षीणत्वान्नित्यकर्मफलत्वेन मोक्षः। तद्व्यवधाना-
ज्ज्ञाननिवृत्तिर्वा न शक्यते कल्पयितुं। कर्माङ्गानयोर्विरोधाभावाद्दृष्टं सामर्थ्यं
यस्मिन्नुत्पत्त्यादौ तद्विषयत्वाच्च कर्मणस्तद्विलक्षणे मोक्षे न व्यापारः। तथा
च नित्यकर्मविधिवशात्पुरुषप्रवृत्तिसम्पादनाय फलं चेत्कल्पयितव्यं तर्हि तदु-
त्पत्त्यादीनामन्यतमादेव तदविरुद्धं कल्प्यमित्यर्थः। इतिशब्दः श्रुतार्थापत्ति-
परिहारसमाप्त्यर्थः। मोक्ष एव नित्यानां कर्मणां फलत्वेन कल्पयितव्यः।
पारिशेष्यन्यायादिति शङ्कते। पारिशेष्येति।

पारिशेष्यन्यायमेव विशदयति। सर्वेषामिति। सर्वं हि स्वर्गपशुपुत्रा-
दि [illegible]। तथापि मोक्षादन्यदेव नित्यकर्मफलं किं न स्यात्तत्राह।
न चेति। मोक्षस्यापीतरकर्मफलनिवेशमाशङ्क्याह। परिशिष्टश्चेति तस्य
फलत्वमेव कथं सिद्धं तत्राह। स चेति। परिशेषादुक्तमर्थं निगमयति।

कर्म्मफलव्यक्तीनामानन्त्यात्पारिशेष्यन्यायानुपपत्तेः। न हि पुरुषेच्छाविषयाणां कर्म्मफलानामेतावत्त्वं नाम केनचिदसर्वज्ञेनावधृतं तत्साधनानां वा। पुरुषेच्छानाञ्चानियतदेशकालनिमित्तत्वात्पुरुषेच्छाविषयसाधनानाञ्च पुरुषेष्टफलप्रयुक्तत्वात्। प्रतिप्राणिचेष्टावैचित्र्यात् फलानां तत्साधनानां चानन्त्यसिद्धिस्तदानन्त्याच्चाशक्यमेतावत्त्वं पुरुषैर्ज्ञातुम्। अज्ञाते च साधनफलेतावत्त्वे कथं मोक्षस्य परिशेषसिद्धिरिति। कर्म्मफलजातिपारिशेष्यमिति चेत्। सत्यपीच्छाविषयाणां तत्साधनानाञ्चानन्त्ये कर्म्मफलजातित्वं नाम सर्वेषां तुल्यम्। मोक्षस्त्वकर्म्मफलत्वात्परिशिष्टः स्यात्तस्मात्परिशेषात्स एव युक्तः कल्पयितुमिति चेन्न। तस्यापि

---

तस्मादिति। पारिशेष्यासिद्ध्या दूषयति। नेति। कर्मफलं व्यक्त्यानन्त्यमुक्तं व्यनक्ति। न हीति फलतत्फलसाधनानां फलविषयेच्छानाञ्चानन्त्यं कथयति। तत्साधनानामिति। तदानन्त्ये हेतुमाह। अनियतेति इच्छाद्यानन्त्ये हेत्वन्तरमाह। पुरुषेति। एतादृक्त्वं नाम नास्तीत्युभयत्र सम्बन्धः। पुरुषस्येष्टं फलं शोभनाध्यासविषयभूतं तत्र विषयिणां शोभनाध्यासे न प्रयुक्तत्वादिति हेत्वर्थः। इच्छाद्यानन्त्यं प्राणिभेदेषु दर्शयित्वा तदानन्त्यमेकस्मिन्नपि प्राणिनि दर्शयति। प्रति प्राणि चेति। इच्छाद्यानन्त्ये फलमाह। तदानन्त्याच्चेति साधनादिष्वेतावत्त्वाज्ञानेऽपि किं स्यात्तदाह। अज्ञाते चेति। इतिशब्दः पारिशेष्यानुपपत्तिसमाप्त्यर्थः। प्रकारान्तरेण पारिशेष्यं शङ्कते। कर्मेति। तामेव शङ्कां विशदयति। सत्यपीति। तथापि कथं मोक्षस्य परिशिष्टत्वं तदाह। मोक्षस्त्विति। परिशेषफलमाह। तस्मादिति। शङ्कितं परिशेषं दूषयति। नेत्यादिना। अर्थापत्तिपरिशेषौ पराकृत्य अर्थापत्तिपराकरणं प्रपञ्चयितुं प्रस्तौति। तस्मादिति। अन्यथाप्युपपत्तिं प्रकट-

नित्यकर्म्मफलत्वाभ्युपगमे कर्म्मफलसमानजातीयत्वोपपत्तेः परिशेषानुपपत्तिः । तस्मादन्यथाप्युपपत्तिस्तस्मात् क्षीणा श्रुतार्थापत्तिः । उत्पत्त्याप्तिविकारसंस्काराणामन्यतमदपि नित्यानां कर्म्मणां फलमुपपद्यत इति क्षीणा श्रुतार्थापत्तिः । चतुर्णामन्यतम एव मोक्ष इति चेन्न तावदुत्पाद्यो नित्यत्वात् । अत एवाविकार्य्योऽसंस्कार्य्यश्चात एवासाधनद्रव्यात्मकत्वाच्च । साधनात्मकं हि द्रव्यं संस्क्रियते । यथा पात्राज्यादि प्रोक्षणादिना । न च संस्क्रियमाणः संस्कारनिर्वर्त्त्यो वा यूपादिवत्पारिशेष्यादाप्यः स्वाप्योऽप्यात्मस्वभावत्वादेकत्वाच्च ॥

इतरैः कर्म्मभिर्वैलक्षण्यान्नित्यानां कर्म्मणां तत् फलेनापि विलक्षणेन भवितव्यमिति चेन्न । कर्म्मत्वसालक्षण्यात्तल्लक्षणं

---

यति । उत्पत्तीति । नित्यानामुत्पत्त्यादिफलत्वेऽपि मोक्षस्य तत्फलत्वं सिद्ध्यतीति शङ्कते । चतुर्णामिति । तत्र मोक्षस्योत्पाद्यत्वं दूषयति । न तावदिति उभयत्रातः शब्दो नित्यत्वपरामर्शी । असंस्कार्य्यत्वे हेत्वन्तरमाह । असाधनेनेति । तदेव व्यतिरेकमुखेन विवृणोति । साधनात्मकं हीति । इतश्च मोक्षस्यासंस्क्रियमाणत्वमित्याह । न चेति । यथा यूपस्तक्षणाष्टास्रीकरणाभ्यञ्जनादिना संस्क्रियते । यथा चाहवनीयः संस्कारेण निष्पाद्यते । न तथा मोक्षो नित्यशुद्धत्वान्निर्गुणत्वाच्चेत्यर्थः । पक्षान्तरमनुभाष्य दूषयति । पारिशेष्यादित्यादिना ।

एकत्वं पूरणत्वं साधनवैलक्षण्यं फलवैलक्षण्यं कल्पयतीति शङ्कते । इतरैरिति । हेतुवैलक्षण्यासिद्धौ कल्पकाभावात् फलवैलक्षण्यासिद्धिरिति दूषयति । न कर्म्मत्वेति । निमित्तकृतहेतुवैलक्षण्यवशात्फलवैलक्षण्यसिद्धिरिति शङ्कते । निमित्तेति । निमित्तवैलक्षण्यं फलवैलक्षण्यस्या-

कस्मात् फलं न भवति। इतरकर्म्मफलैर्निमित्तवैलक्षण्यादिति चेन्न। क्षामवत्यादिभिः समानत्वात्। यथा हि गृहदाहादौ निमित्ते क्षामवत्यादीष्टिर्यथा भिन्ने जुहोति स्कन्ने जुहोतीत्येवमादौ नैमित्तिकेषु कर्म्मसु न मोक्षः फलं कल्प्यते। तैरविशेषान्नैमित्तिकत्वेन जीवनादिनिमित्ते च श्रवणात्। तथा नित्यानामपि न मोक्षः फलम्। आलोकस्य सर्व्वेषां रूपदर्शनसाधनत्वे उलूकादय आलोकेन रूपं न पश्यन्तीति। उलूकादिचक्षुषोर्वैलक्षण्यादितरलोकचक्षुर्भिर्न र-

---

निमित्तमिति। परिहरति। न क्षामवत्यादिभिरिति। तदेव प्रपञ्चयति। यथा हीति। यस्याहिताग्नेरग्निर्गृहान्दहेदग्नये क्षामवते पुरोडाशमष्टाकपालं निर्व्वपेदित्यत्र दहेदिति विधिविभक्त्या प्रतिबद्धार्थयच्छब्दोपहिततया गृहदाहस्य निमित्तपरामर्शेनाग्नये क्षामवते पुरोडाशमित्यादिना क्षामवती विधीयते। यस्योभयं हविरार्त्तिमार्च्छेत् ऐन्द्रं पञ्चशरावमोदनं निर्व्वपेदित्यत्र च ऋच्छेदिति विधिविभक्त्या निर्व्वपेदिति विधानस्यामनिनित्तं हविरार्त्तिमनूद्य निर्वापो विधीयते। भिन्ने जुहोति स्कन्ने जुहोत्यथ यस्य पुरोडाशौ क्षायतस्तं यज्ञं वरुणो गृह्णाति। यदा तद्धविर्निक्षेताथ तदेव हविर्निर्व्वपेद्यज्ञो हि यज्ञस्य प्रायश्चित्तमिति च भेदनादिनिमित्तं प्रायश्चित्तमुक्तम्। न च तन्मुक्तिफलम्। तथा निमित्तभेदेऽपि न नित्यकर्म्ममुक्तिफलमित्यर्थः। क्षामवत्यादितुल्यत्वं नित्यकर्म्मणां कुतो नित्यमित्याशङ्क्याह। तैरिति। क्षामवत्यादिभिरिति यावत्। अविशेषे हेतुर्नैमित्तिकत्वेनेति तदेव कथमिति चेत्तत्राह। जीवनादीति। दार्ष्टान्तिकं स्पष्टयति। तथेति। नित्यं कर्म्म कर्म्मान्तराद्विलक्षणमपि न मोक्षफलमित्यत्र दृष्टान्तमाह। आलोकस्येति। चक्षुरन्तरैरुलूकादिचक्षुषोर्वैलक्षण्येऽपि न रूपादिविषयत्वमित्यत्र हेतुमाह। रूपादीति। वैलक्षण्यं तर्हि कुतोपयुज्यते तत्राह। मनुष्यान्विहायोलूकादौ गत्वापीति

रूपादिविषयत्वं परिकल्प्यते । रसादिविषये सामर्थ्यस्यादृष्टत्वात् । सुदूरमपि गत्वा यद्विषये दृष्टं सामर्थ्यं तत्रैव कश्चिद्विशेषः कल्पयितव्यः । यत्पुनरुक्तं विद्यामन्त्रशर्करादिसंयुक्तविषदध्यादिवन्नित्यानि कार्य्यान्तरमारभन्त इति । आरभ्यतां विशिष्टं कार्य्यम् । तदिष्टत्वादविरोधो निरभिसन्धेः कर्मणो विद्यासंयुक्तस्य विशिष्टकार्य्यान्तरारम्भे न कश्चिद्विरोधः । देवयाज्यात्मयाजिनोरात्मयाजिनो विशेषश्रवणाद्देवयाजिनः श्रेयानात्मयाजीत्यादौ यदेव विद्यया करोतीत्यादौ च ॥

यस्तु परमार्थदर्शनविषये मनुनोक्त आत्मयाजिशब्दः समं पश्यन्नात्मयाजीत्यत्र समं पश्यन्नात्मयाजी भवतीत्यर्थः । अथवा भूतपूर्व्वगत्या आत्मयाज्यात्मसंस्कारार्थं नित्यानि

---

यावत् । यद्विषये रूपादावित्यर्थः । विशेषो दूरस्थत्वादिरतिशयः । दार्ष्टान्तिकं पूर्व्ववादानुवादपूर्व्वकमाचष्टे । यत्पुनरित्यादिना । तत्रत्येति यावत् । तदेव विवृणोति । निरभिसन्धेरिति । विद्यासंयुक्तं कर्म विशिष्टकार्य्यकरमित्यत्र शतपथश्रुतिं प्रमाणयति । देवयाजीति । तदाङ्किरत्युपक्रम्य देवयाजी श्रेयानित्यादौ काम्यकर्त्तुर्देवयाजिनः सकाशादात्मशुद्ध्यर्थं कर्म कुर्व्वन्नात्मयाजी श्रेयानिति आत्मयाजिनो विशेषश्रवणात्सर्व्वक्रतुयाजिनामात्मयाजी विशिष्यत इति स्मृतेश्च विशिष्टस्य कर्मणो विशिष्टकार्य्यारम्भकत्वमविरुद्धमित्यर्थः ।

छान्दोग्येऽपि विद्यासंयुक्तस्य कर्मणो विशिष्टकार्य्यारम्भकत्वं दृष्टमित्याह । यदेवेति । न त्वात्मयाजिशब्दो नित्यकर्मानुष्ठायिविषयो न भवति । सर्व्वभूतेषु चात्मानं सर्व्वभूतानि चात्मनि । समम्पश्यन्नात्मयाजी वै-

कर्माणि करोति इदं मेने नाङ्गं संस्क्रियत इति श्रुतेः। तथा गार्भैर्होमैरित्यादिप्रकरणे कार्य्यकरणसंस्कारार्थत्वं नित्यानां कर्मणां दर्शयति। संस्कृतश्च य आत्मयाजी तैः कर्मभिः समं द्रष्टुं समर्थो भवति। तस्येह वा जन्मान्तरे वा सममात्मदर्शनमुत्पद्यते। समं पश्यन् स्वाराज्यमधिगच्छतीत्येषोऽर्थः। आत्मयाजीशब्दस्तु भूतपूर्वगत्या प्रयुज्यते। ज्ञानयुक्तानां नित्यानां कर्मणां ज्ञानोत्पत्ति-

---

स्वाराज्यमधिगच्छतीति। अत परात्मदर्शनविषये तस्य प्रयुक्तत्वादत आह। यस्त्विति। यदि समं पश्यन्नुभवेत्तदा परेणात्मनैकीभूतः स्वाराड्भवतीत्यात्मज्ञानस्तुतिरत्र विवक्षिता। महती हीयं ब्रह्मविद्या। यद्ब्रह्मविदेवात्मयाजी भवति हि तदनुष्ठानं पृथगपेक्षते। ब्रह्मवित्तु स्वयमेवेति च वक्ष्यतीत्यर्थः। परदर्शनवत्त्वात्मयाजिशब्दस्य गत्यन्तरमाह। अथ वेति। भूता या पूर्वस्थितिस्तामपेक्ष्यात्मयाजिशब्दो विदुषीत्यर्थः। तदेव प्रपञ्चयति। आत्मेति। तेषां तत्संस्कारार्थत्वे प्रमाणमाह। इदमिति। तत्रैव श्रुतिं प्रमाणयति। तथेति। गर्भसम्बन्धिभिर्होमैर्मौञ्जीनिबन्धनादिभिश्च वैदिकमेवैनः शमयतीत्यस्मिन्प्रकरणे नित्यकर्मणां संस्कारार्थत्वं निश्चितमित्यर्थः। संस्कारोऽपि कुत्रोपयुज्यते तत्राह। संस्कृतश्चेति। यो हि नित्यकर्मानुष्ठायी तदनुष्ठानजनितापूर्ववशात्परिशुद्धबुद्धिः सम्यग्धीयोग्यो भवति। महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुरिति स्मृतिरित्यर्थः। कदा पुनरेषा सम्यग्धीरुत्पद्यते तत्राह। तस्येति। उत्पन्नस्य सम्यग्ज्ञानस्य फलमाह। सममिति। कथं पुनः सम्यग्ज्ञानवत्यात्मयाजिशब्द इत्याशङ्क्य पूर्वोक्तं स्मारयति। आत्मेति। किमितीह भूतपूर्वगतिराश्रितेति तत्राह। ज्ञानप्रयुक्तानामिति। वैदिकैरायुर्वृद्धकैर्वा कर्मभिः शुद्धबुद्धेः श्रवणादिवशादैक्यज्ञानं इति फलसूचेति। कर्म तु विद्यासंयुक्तमपि संसारफलमेवेति भावः। तत्रैव हेत्वन्तरमाह।

साधनत्वप्रदर्शनार्थं । किञ्चान्यत् । ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च । उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिण इति च ॥

देवसार्ष्टिव्यतिरेकेण भूताप्ययं दर्शयति । भूतान्यप्येति । यस्तु वै भूतान्यत्येतीति पाठं ये कुर्वन्ति तेषां वेदविषये परिच्छिन्नबुद्धित्वाद्दोषः । न चार्थवादत्वमध्यायस्य ब्रह्मादिकर्मविपाकार्थस्य तद्व्यतिरिक्तात्मज्ञानार्थस्य च कर्मकाण्डोपनिषद्भ्यां तुल्यार्थत्वदर्शनात् । विहिताकरणप्रतिषिद्ध-

---

क्रियेति विद्यानुगतमपि कर्म बन्धायैवेत्यत आह न केवलमुक्तमेव कारणं किन्त्वन्यच्च तदुपष्टम्भकमित्यर्थः । तदेव दर्शयति । ब्रह्मेति । सात्त्विकीं सत्त्वगुणप्रभूतज्ञानसमुच्चितकर्मफलभूतामिति यावत् ।

यत्र हि विद्यानुगतमपि कर्म संसारफलमेवेति उच्यते । एष सर्वः समुद्दिष्टस्त्रिप्रकारस्य कर्मणः । त्रिविधस्त्रिविधः कर्मसंसारः सार्वभौतिक इत्युपसंहारादिति चकारार्थः । किञ्च । यजते कर्मसंसेव्य देवानामेति सार्ष्टितामिति । कर्मफलभूतदेवतासदृशैश्वर्यप्राप्तिमुक्त्वा तद्व्यतिरेकेण निष्कामं सेवमानस्तु भूतान्यप्येति पञ्च चेति । भूतेष्वप्ययवचनान्न समुच्चयस्य मुक्तिफलतेत्याह । देवसार्ष्टीति । निष्कामं सेवमानस्तु भूतान्यत्येति पञ्च चेति पाठान्मुक्तेरेव समुच्चयफलत्वात् निश्चितेति चेत्तत्राह । भूतानीति । ज्ञानमेव मुक्तिहेतुरिति प्रतिपादकोपनिषद्विरोधान्नायं पाठः साधीयानित्यर्थः । ननु निष्कामतो देवतैव नास्ति । मन्त्रमपि हि सा देवता मन्त्रप्रत्ययावलम्बनं । अतो ब्रह्मा विश्वसृडित्यादेरर्थवादत्वान्न तद्बलेन नित्यकर्मणां मुक्तिसाधनत्वं निराकर्तुं शक्यमत आह । न चेति । ज्ञानार्थस्य संपश्यन्नात्मयाजीत्यादेरिति शेषः । किञ्च । अकुर्वन्विहितं कर्म निन्दितञ्च समाचरन् । प्रसक्तश्चेन्द्रियार्थेषु नरः पतनमृच्छति । शरीरजैः कर्मदोषैर्याति स्थावरतां नरः । वाचिकैः पक्षिमृगतां मानसैरन्त्यजातितां । श्वसूकरखरोष्ट्राणां गोजाविमृगपक्षिणां । चण्डालपुक्कसानां च ब्रह्महा योनिमृच्छति-

कर्म्मणाश्च स्थावरश्वशूकरादिफलदर्शनात् वान्ताश्यादिप्रे-
तदर्शनाच्च । न च श्रुतिस्मृतिविहितप्रतिषिद्धव्यतिरेकेण
विहितानि वा प्रतिषिद्धानि वा कर्म्माणि केनचिदवगन्तुं
शक्यन्ते । येषामकरणादनुष्ठानाच्च प्रेतश्वशूकरस्थावरादी-
कर्म्मफलानि प्रत्यक्षानुमानाभ्यानाभ्यामुपलभ्यन्ते । न चै-
षामकर्म्मफलत्वं केनचिदभ्युपगम्यते । तस्माद्विहिताकरण-
प्रतिषिद्धसेवानां यथैते कर्म्मविपाकाः प्रेततिर्य्यक्स्थावरा-
दयस्तथोत्कृष्टेष्वपि ब्रह्मान्तेषु कर्मविपाकत्वं वेदितव्यम् ।
तस्मात्स आत्मनो वपामुदखिदत्सो ऽरोदीद्यदरोदीरित्या-
दिवन्नाभूतार्थवादत्वम् ।

---

त्यादिवाक्यैः प्रतिपादितफलानां प्रत्यक्षेणापि दर्शनात् । यथा तत्र नाभूतार्थवादत्वं तथा यथोक्ताध्यायस्यापि नाभूतार्थवादतेत्याह । विहितेति । किञ्च वङ्गादिदेशे छर्दिताश्यादिप्रेतानां प्रत्यक्षत्वादध्ययनरहितानामपि स्त्रीशूद्रादीनां वेदोच्चारणदर्शनेन ब्रह्मपरहरण्डावागमाच्च न ब्रह्मादिवाक्यास्यार्थवादतेत्याह । वान्तेति । ननु स्थावरादीनां श्रौतस्मार्त्त-कर्म्मफलत्वाभावात्तत्तद्दर्शनेन वचनानां भूतार्थत्वं शक्यं कल्पयितुमत आह । न चेति । सेवादिदृष्टकारणसाम्येऽपि फलवैषम्योपलम्भाद्वश्यमतीन्द्रियं कारणं वाच्यम् । न च तत्र श्रुतिस्मृती विहायान्यन्मानमस्ति । तथा च श्रौतस्मार्त्तकर्म्मकृतान्येव स्थावरादीनि फलानीत्यर्थः । सन्निहितासन्निहितेषु स्थावरादिषु प्रत्यक्षानुमानयोर्यथायोगं प्रवृत्तिरूह्या । स्थावराणां जीवशून्यत्वात्कर्म्मफलत्वमिति केचित्तान्प्रत्याह । न चैषामिति । कश्मादादिदेशे वृक्षादीनां वृद्ध्यादिदर्शनात्सजीवत्वप्रसिद्धेस्स्वात्मप्रयान्ति पादपा इत्यादिप्रयोगाच्च तेषां कर्म्मफलत्वसिद्धिरित्यर्थः । स्थावरादीनां कर्म्मफलत्वे सिद्धे फलितमाह । तस्मादिति ब्रह्मादीनां पुण्यकर्मफलत्वेऽपि प्रकृते किं स्यात्तदाह । तस्मादिति ।

तत्राप्यभूतार्थवादत्वं माभूदिति चेद्भवत्वेवम्। न चैतावतास्य न्यायस्य बाधो भवति। न चास्मत्पक्षो वा दुष्यति। न च ब्रह्मा विश्वसृज इत्यादीनां काम्यकर्म्मफलत्वं ग्राह्यं। वक्तुं तेषां देवसार्ष्टितायाः फलस्योक्तत्वात्। तस्मात्साभिसन्धीनां नित्यानां कर्म्मणां सर्व्वमेधाश्वमेधादीनां च ब्रह्मत्वादीनि फलानि। येषां पुनर्नित्यानि निरभिसन्धीन्यात्मसंस्कारार्थानि क्रियन्ते तेषां ज्ञानोत्पत्त्यर्थानि तानि। ब्राह्मीयं क्रियते तनुरित्यादि स्मरणात्तेषामारादुपकारकत्वान्मोक्ष-

---

कर्म्मविपाकप्रकरणस्याभूतार्थवादत्वाभावे दृष्टान्तोऽपि तत्र स्यादिति शङ्कते। तत्रापीति। अङ्गीकरोति। भवत्विति। कथं तर्हि वैधर्म्यदृष्टान्तसिद्धिरत आह। न चेति। वैधर्म्यदृष्टान्ताभावमात्रेण कर्म्मविपाकाध्यायस्य नाभूतार्थवादतेत्यस्य न्यायस्य नैव बाधः। साधर्म्म्यदृष्टान्तादपि तत्सिद्धेरित्यर्थः। ननु प्रजापतिरात्मनो वपामुदखिददित्यादीनामभूतार्थवादत्वाभावे कथमर्थवादाधिकरणं घटिष्यते तत्राह। न चेति। तदघटनायामपि नास्मत्पक्षक्षतिस्तत्रैव तदभूतार्थवादत्वं त्यजतस्तद्विरोधादित्यर्थः। ननु कर्म्मविपाकप्रकरणस्यार्थवादत्वाभावेऽपि ब्रह्मादीनां काम्यकर्म्मफलत्वाज्ञ ज्ञानसंयुक्तनित्यकर्म्मफलत्वं ततो मोक्ष एव तत्फलमित्यत आह। न चेति। तेषां काम्यानां कर्म्मणामिति यावत्। देवसार्ष्टितया देवैरिन्द्रादिभिः समानैश्वर्य्यप्राप्तेरित्यर्थः। उत्कृष्टं कर्म संसेव्य देवानामेति सार्ष्टितामित्यत्रेति शेषः। ननु विद्यासंयुक्तानां कर्म्मणां फलं ब्रह्मादिभावश्चेत्कथं तानि ज्ञानोत्पत्त्यर्थान्यास्थीयन्ते तत्राह। तस्मादिति। कर्म्मणां शुक्लफलत्वाभावस्तच्छब्दार्थः साभिसन्धीनां देवताभावे फलेऽनुरागवतामिति यावत्। नित्यानि कर्म्माणि श्रौतानि स्मार्त्तानि चाग्निहोत्रसन्ध्योपासनप्रभृतीनि निरभिसन्धीनि फलाभिलाषविकलानि परमेश्वरार्पणबुद्ध्या क्रियमाणानि। आत्मशब्दो मनो विषयः। कर्म्मणां चित्तशुद्धिद्वारा ज्ञानोत्पत्त्यर्थत्वे प्रमाण-

साधनान्यपि कर्माणि भवन्तीति न विरुध्यन्ते । यथा चायमर्थः षष्ठे अन्त्यशाखाधिकारसमाप्तौ वक्ष्यामः । यत्तु, विषदध्यादिवदित्युक्तम् । तत्र प्रत्यक्षानुमानविषयत्वादविरोधः । यस्त्वत्यन्तशब्दगम्योऽर्थस्तत्र वाक्यस्याभावे तदर्थप्रतिपादकस्य न शक्यं कल्पयितुं विषदध्यादिसाधर्म्यम् । न च प्रमाणान्तरविरुद्धार्थविषये श्रुतिः प्रामाण्यं कल्प्यते । यथा शीतोऽग्निः क्लेदयतीति श्रुते तु तादर्थ्ये वाक्यस्य प्रमाणान्तरस्याभासत्वम् । यथा खद्योतोऽग्निरिति तलमलिनमन्तरिक्षमिति

---

माह । न हीति । कथं तर्हि कर्मणां मोक्षसाधनत्वं क्वचिदाम्नायते तत्राह । तेषामिति । संस्कृतबुद्धीनामिति यावत् । कर्मणां परम्परया मोक्षसाधनत्वं कथमर्थं विरुद्धमुच्यते तत्राह । यथा चेति । अयमर्थस्तथेति शेषः । निरस्तमप्यधिकविवक्षया पुनरनुवदति । यत्त्विति । विषादेर्मन्त्रादिसंहितस्य जीवनादिहेतुत्वं प्रत्यक्षादिसिद्धमतो दृष्टान्ते कार्यकारणभावे विरोधो नास्तीत्याह । तत्रेति । कर्मणो विद्यासंयुक्तस्य कार्यान्तरारम्भकत्वलक्षणोऽर्थः शब्देनैव गम्यते । न च तत्र मानान्तरमस्ति । न च समुच्चितस्य कर्मणो मोक्षारम्भकत्वप्रतिपादकं वाक्यमुपलभ्यते तदभावे कर्मणि विद्यायुक्तेऽपि विषदध्यादिसाधर्म्यं कल्पयितुं न शक्यमित्याह । यत्त्विति । कर्मसाध्यत्वे च मोक्षस्यानित्यता । स्यादिति भावः । अपाम सोममसृता अभूमेत्यादिश्रुतेर्मोक्षस्य कर्मसाध्यस्यापि नित्यत्वमिति चेत्तत्राह । न चेति । यत्कृतकं तदनित्यमित्यनुमानानुगृहीतं यद्यत्कृतकादिवाक्यं तद्विरोधेनार्थवादश्रुतेः स्वार्थे प्रामाण्यमित्यर्थः । प्रमाणान्तरविरुद्धेऽर्थे प्रामाण्यं श्रुतेर्नोच्यते चेदतिश्रुतेरपि कथं प्रत्यक्षादिविरुद्धे स्वार्थे प्रामाण्यमित्याशङ्क्याह । श्रुते त्विति । तत्परत्वादिवाक्यस्य षड्विधतात्पर्यलिङ्गैः स्वार्थे तत्परत्वे निर्धारिते सति तस्य प्रत्यक्षादेराभासत्वं भवतीत्यर्थः । तदेव दृष्टान्तेन साधयति । यथेत्यादिना । यदग्निर्ज्योतिषां यथोक्तं प्रत्यक्षं तद्यद्यपि

**अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ याज्ञवल्क्येति होवाच ॥**

---

बालानां यत्प्रत्यक्षमपि तद्विषयप्रमाणान्तरस्यातथार्थत्वे निश्चिते निश्चितार्थमपि बालप्रत्यक्षमाभासीभवति। तस्माद्वेदप्रामाण्यस्याव्यभिचारात्तादर्थ्ये सति वाक्यस्य तथात्वं स्यात् न तु पुरुषमतिकौशलम्। न हि पुरुषमतिकौशलात्सविता रूपं न प्रकाशयति। तथा वेदवाक्यान्यपि नान्यार्थानि भवन्ति। तस्मान्न मोक्षार्थानि कर्माणीति सिद्धम्। अतः कर्मफलानां संसारत्वप्रदर्शनायैव ब्राह्मणमारभ्यते।

अथानन्तरमुपरते जारत्कारवे भुज्युरिति नामतो लह्यस्यापत्यं लाह्यस्तदपत्यं लाह्यायनिः पप्रच्छ याज्ञ-

---

प्रथमभावित्वेन प्रबलं निश्चितार्थं च तथापि तस्मिन्नेवाकाशादौ विषये प्रवृत्तस्याप्तवाक्यादेर्मानान्तरस्य यथार्थत्वे सति तद्विरुद्धं पूर्वोक्तमविवेकिप्रत्यक्षमप्याभासीभवति। तथेदं द्वैतविषयं प्रत्यक्षाद्यद्वैतागमविरोधे भवत्याभास इत्यर्थः। ननु तात्पर्यं नाम पुरुषस्य मनोधर्मस्तद्वशाच्चेदद्वैतश्रुतेर्यथार्थत्वं तर्हि प्रतिपुरुषमन्यथैवं तात्पर्यदर्शनात्तद्वशादन्यथैवं श्रुत्यर्थः स्यादित्याशङ्क्य दार्ष्टान्तिकं निगमयन्नुत्तरमाह। तस्मादित्यादिना। तात्पर्यमर्थपरत्वं तथात्वं याथार्थ्यं शब्दधर्मस्तात्पर्यं तच्च षड्विधलिङ्गगम्यं तथा च शब्दस्य पुरुषाभिप्रायवशान्नान्यथार्थत्वमित्यर्थः। उक्तमर्थं दृष्टान्तेन स्पष्टयति। न हीति। विचारार्थमुपसंहरति। तस्मादिति। विद्यासंयुक्तस्यापि कर्मणो मोक्षारम्भकत्वासम्भवस्तच्छब्दार्थः। माभूत्कर्मणां मोक्षार्थत्वं किन्तावतेत्याशङ्क्य ब्राह्मणारम्भं निगमयति। अत इति।

ब्राह्मणारम्भमेवं प्रतिपाद्य तदक्षराणि व्याकरोति। अथेति। याज्ञवल्क्यमभिमुखीकृत्य भुज्युः स्वस्य पूर्ववृत्तां कथां कथ-

वक्ष्येति होवाच आदावुक्तमश्वमेधदर्शनं। समष्टिव्यष्टिफलश्चाश्वमेधक्रतुर्ज्ञानसमुच्चितो वा केवलज्ञानसम्पादितो वा। सर्वकर्म्मणां परा काष्ठा। भ्रूणहत्याश्वमेधाभ्यां न परं पुण्यपापयोरिति हि स्मरन्ति। तेन हि समष्टीर्व्यष्टीश्च प्राप्नोति। तत्र व्यष्टयो निर्णीता अण्डान्तरविषया अश्वमेधयागफलभूताः। मृत्युरस्यात्मा भवत्येतासां देवतानामेको भवतीत्युक्तं। मृत्युश्चाशनाया लक्षणो बुद्ध्यात्मा समष्टिः प्रथमजो वायुः सूत्रं सत्यं हिरण्यगर्भः। तस्य व्याकृतो विषयो

---

यति। तामवतारयितुमश्वमेधस्वरूपं तत्फलं च विभज्य दर्शयति। आदाविति। क्रतुरुक्त इति पूर्वेण सम्बन्धः। क्रतोर्द्वैविध्यमाह। ज्ञानेति। अश्वमेधस्य द्विधा विभक्तस्य सर्वकर्मोत्कर्षमुक्तिरिति। सर्वकर्मणामिति। तस्य पुण्यश्रेष्ठत्वे मानमाह। भ्रूणहत्येति। समष्टिव्यष्टिफलश्चेत्युक्तं स्फुटयति। तेनेति। अश्वमेधेन सहकारिकामनाभेदेन समष्टीः समनुगतरूपा व्यष्टीश्च व्यावृत्तरूपा देवताः प्राप्नोतीत्यर्थः। काः पुनर्व्यष्टयो विवक्ष्यन्ते तत्राह। तत्रेति। अग्निरादित्यो वायुरित्याद्या व्यष्टयो देवताः। सोऽग्निरभवदित्यादिवाक्यान्तर्वर्त्तिन्योऽश्वमेधफलभूता दर्शिता इत्यर्थः। का तर्हि समष्टिर्देवतेत्युक्ते तत्रैवोक्तं स्मारयति। मृत्युरिति। तामेव समष्टिरूपां देवतां प्रपञ्चयितुमिदं ब्राह्मणमिति वक्तुं पातनिकां करोति। मृत्युश्चेति। मायात्मकबुद्धिधर्मोऽशनायाः कथं मृत्योर्लक्षणं तत्राह। बुद्ध्यात्मेति। तर्हि बुद्धेर्व्यष्टित्वान्मृत्युरपि तथा स्यादित्याशङ्क्याह। समष्टिरिति। प्रागेव व्यष्ट्युत्पत्तेरुत्पन्नत्वेन समष्टित्वं साधयति। प्रथमज इति। सर्वाश्रयत्वं दर्शयति सूत्रमिति। तत्र वायुर्वै गौतमेत्यादि वाक्यं प्रमाणमिति सूचयति। वायुरिति। तथापि कथं प्रथमजत्वं भूतानां प्रथमसु-

यदात्मकं सर्वं द्वैतैकत्वं यः सर्वभूतान्तरात्मा लिङ्गममूर्त्तरसो यदाश्रितानि सर्वभूतकर्माणि यः कर्मणां कर्मसम्बद्धानाञ्च विज्ञानानां परा गतिः परं फलं। तस्य कियान्गोचरः कियती व्याप्तिः सर्वतः परिमण्डलीभूता सा वक्तव्या। तस्यामुक्तायां सर्वः संसारी बन्धगोचर उक्तो भवति। तस्य च समष्टिव्यष्ट्यात्मदर्शनस्यालौकिकत्वप्रदर्शनार्थमाख्यायिकामात्मनो वृत्तां प्रकुरुते। तेन च प्रतिवादिबुद्धिं व्यामोहयिष्यामीति मन्यते।

---

सृपत्तेरित्याशङ्क्याह। सत्यमिति। हिरण्यगर्भस्योक्तलक्षणत्वेऽपि किमायातं वक्त्रोरित्याशङ्क्याह। हिरण्यगर्भ इति। जगदेव समष्टिव्यष्टिरूपं न सूत्रमित्याशङ्क्याह। यदात्मकमिति। द्वैतं व्यष्टिरूपमेकत्वं समष्टिरूपं तत्सर्वं यदात्मकं तस्येति सम्बन्धः। तस्योक्तिप्रमाणत्वं प्रकटयति। यः सर्वेति। विज्ञानात्मानं व्यावर्त्तयति। लिङ्गमिति। तत्र हेतुपरम इत्यनुसृत्याह। अमूर्त्तेति। तस्य साधनाश्रयत्वं दर्शयति। यदाश्रितानीति। तस्यैव फलाश्रयत्वमाह। यः कर्मणामिति। परा गतिरित्यस्यैव व्याख्यानं परं फलमिति। एवं भूमिकामारचय्यानन्तरब्राह्मणमवतारयति। तस्येति। प्रश्नमेव प्रकटयति। कियतीति। सर्वतः परितो मण्डलभावनावाद्य स्थितेति यावत्। ननु किमिति सा वक्तव्या। तस्यामुक्तायामपि वक्तव्यसंसारावशेषादाकाङ्क्षाविश्रान्त्यभावादत आह। तस्यामिति। इयान् बन्धो नाधिको न्यूनो वेत्यन्यव्यवच्छेदेन बन्धपरिमाणपरिच्छेदार्थं कर्मफलव्याप्तिरत्रोच्यते तत्परिच्छेदस्य वैराग्यद्वारा मुक्तिहेतुरिति भावः। ब्राह्मणस्यैवं प्रवृत्तावपि किमिति भुज्युः स्वस्य पूर्वनिर्वृत्तां कथामाहेत्याशङ्क्याह। तस्य चेति। समष्टिव्यष्ट्यात्मदर्शनस्यालौकिकत्वप्रदर्शनेन वा किं स्यात्तदाह। तेन चेति।

बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिरमौनञ्च मौनञ्च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्या-

---

विद्यया अशेषविषयदृष्टितिरस्करणम्। अतस्तद्भावेन बाल्येन तिष्ठासेत्। तथात्मना विन्दते वीर्य्यमिति श्रुत्यन्तरान्नायमात्मा बलहीनेन लभ्य इति च।

बाल्यञ्च पाण्डित्यञ्च निर्विद्य निःशेषं कृत्वा अथ मननान्मुनिर्योगी भवत्येतावद्धि ब्राह्मणेन कर्त्तव्यम्। यदुत सर्वानात्मप्रत्ययतिरस्कार एतत्कृत्वा कृतकृत्यो योगी भवति। अमौनञ्चात्मज्ञानानात्मप्रत्ययतिरस्कारौ पाण्डित्यबाल्यसञ्ज्ञकौ निःशेषं कृत्वा। मौनं नामानात्मप्रत्ययतिरस्करणस्य पर्य्यवसानं फलम्। तच्च निर्व्विद्याय ब्राह्मणः कृतकृत्यो भवति। ब्रह्मैव सर्व्वमिति प्रत्यय उपजायते। स ब्राह्मणः कृतकृत्यो-

---

तयेति यावत्। आत्मना तद्विज्ञानातिशयेनेत्यर्थः। वीर्य्यं विषयदृष्टितिरस्करणसामर्थ्यमित्येतत्। बलहीनेन विषयदृष्टितिरस्करणसामर्थ्यरहितेनायमात्मा न लभ्यो न शक्यः साक्षात्कर्त्तुमित्यर्थः॥

बाल्यञ्चेत्यादि वाक्यमादाय व्याचष्टे। बाल्यञ्चेति। पूर्व्वोक्तयोरुत्तरत्र हेतुद्योतनार्थोऽथशब्दः। तदेवोपपादयति। एतावद्धीति। वाक्यान्तरमुत्थाप्य व्याकरोति। अमौनञ्चेत्यादिना। मौनामौनयोर्ब्राह्मण्यं प्रति साम्यमीत्यद्योतकोऽथ शब्दः ब्राह्मण्यमुपपादयति। ब्रह्मैवेति आचार्य्यपरिचर्य्यापूर्व्वकं वेदान्तानां तात्पर्य्यावधारणं पाण्डित्यं। युक्तितोऽनात्मदृष्टितिरस्कारो बाल्यं। अहमात्मा परब्रह्म न मत्तोऽन्यदस्ति किञ्चनेति। मननैवानुसन्धानं मौनं महावाक्यार्थावगतिर्ब्राह्मण्यमिति विभागः। प्रागपि प्रसिद्धं ब्राह्मण्यमिति चेत्तत्राह। निरुपचरितमिति। ब्रह्मविदः समाचारं

येन स्यात्तेनेदृश एवातोऽन्यदार्त्तं ततो ह कहोलः कौषीतकेय उपरराम ॥ १ ॥ पञ्चमं ब्राह्मणम् ॥ ५ ॥

---

ऽतो ब्राह्मणः। निरुपचरितं हि तदा तस्य ब्राह्मण्यं प्राप्तमत आह। स ब्राह्मणः केन स्यात्केन चरणेन भवेद्येन स्याद्येन चरणेन भवेत्तेनेदृश एवायम्। येन केनचिच्चरणेन स्यात्तेनेदृश एव उक्तलक्षण एव ब्राह्मणो भवति। येन केनचिच्चरणेनेति स्तुत्यर्थम्। येयं ब्राह्मण्यावस्था सेयं स्तूयते न तु चरणेऽनादरः। अत एतस्माद्ब्राह्मण्यावस्थानादशनायाद्यतीतात्मस्वरूपान्नित्यतृप्तादन्यदविद्याविषयमेषणालक्षणं वस्त्वन्तरमार्त्तं विनाशार्त्तिपरिगृहीतं स्वप्नमाया मरीच्युदकसममसारमात्मैवैकः केवलो नित्यमुक्त इति। ततो ह कहोल कौषीतकेय उपरराम ॥ १ ॥ पञ्चमस्य पञ्चमं ब्राह्मणम् ॥ ५

---

पृच्छति। स इति। अनियतं तस्य चरणमित्युत्तरमाह। येनेति। उक्तलक्षणत्वं कृतकृत्यत्वम्। अव्यवस्थितं चरणमिच्छतो ब्रह्मविदो यथेष्टचेष्टाभीष्टा स्यात्तथा च यद्यदाचरति श्रेष्ठ इति स्मृतेरितरेषामप्याचारेऽनादरः स्यादित्याशङ्क्याह। येन केन चिदिति। विहितमाचरतो निषिद्धं च त्यजतः शुद्धबुद्धेः श्रुतवाक्यात्सम्यग्धीरुत्पद्यते। तस्य च वासनावशाद्व्यवस्थितैव नाव्यवस्थितेति न यथेष्टचेष्टाचरणप्रयुक्तो दोष इत्यर्थः। अतो ऽन्यदित्यादि व्याकरोति। अत इति। स्वप्नेत्यादि बहुदृष्टान्तोपादानं दार्ष्टान्तिकस्य बहुरूपत्वद्योतनार्थं अतोऽन्यदिति कुतो विशेषणमित्याशङ्क्याह। आत्मैवेति। १। पञ्चमस्य पञ्चमं कहोलब्राह्मणम् ॥ ५ ॥

अथ हैनं गार्गी वाचक्नवी पप्रच्छ याज्ञवल्क्येति

---

यत्साक्षादपरोक्षाद्ब्रह्म सर्वान्तर आत्मेत्युक्तम्। तस्य सर्वान्तरस्य स्वरूपाधिगमाय शाकल्यब्राह्मणादुग्रन्थ आरभ्यते। पृथिव्यादीनि ह्याकाशान्तानि भूतान्यन्तर्बहिर्भावेन व्यवस्थितानि। तेषां यद्बाह्यं बाह्यमधिगम्य निराकुर्वन्। द्रष्टुः साक्षात्सर्वान्तरो गौण आत्मा सर्वसंसारधर्मनिर्मुक्तो दर्शयितव्य इत्यारम्भः। अथ ह एनं गार्गी नामतो वाचक्नवी वचक्नोर्दुहिता पप्रच्छ। याज्ञवल्क्येति होवाच। यदिदं सर्वं पार्थिवं धातुजातमप्सूदके ओतञ्च दीर्घपटतन्तुवत्प्रोतञ्च तिर्य्यक्तन्तुवद्विपरीतं वा। अद्भिः सर्वतोऽन्तर्बहिर्भूताभिर्व्याप्तमित्यर्थः। अन्यथा सक्तुमुष्टिवद्विशीर्य्येत। इदं तावदनुमानमुपन्यस्तम्।

---

पूर्व्वब्राह्मणयोरात्मनः सर्वान्तरत्वमुक्तं तन्निर्णयार्थमुत्तरं ब्राह्मणत्रयमिति सङ्गतिमाह। यत्साक्षादिति। उक्तमेव सम्बन्धं विवृणोति। पृथिव्यादीनीति। अन्तर्बहिर्भावेन सूक्ष्मस्थूलतारतम्यक्रमेणेत्यर्थः। बाह्यं बाह्यमिति वीप्सा। उपरिष्टात्तच्छब्दो द्रष्टव्यो यत्तदोर्नित्यसम्बन्धात्। निराकुर्वन् यथा मुमुक्षुः सर्वान्तरमात्मानं प्रतिपद्यते तथा स यथोक्तविशेषणो दर्शयितव्य इत्युत्तर ग्रन्थारम्भ इति योजना। कहोलप्रश्ननिर्णयानन्तर्य्यमथशब्दार्थः। यत्पार्थिवं धातुजातं तदिदं सर्वमप्स्वित्यादि योजनीयं। पदार्थमुक्त्वा वाक्यार्थमाह। अद्भिरिति। पार्थिवस्य धातुजातस्याद्भिर्व्याप्त्यभावे दोषमाह। अन्यथेति। किमत्र गार्ग्या विवक्षितमिति तदाह। इदं तावदिति। तदेव दर्शयितुं व्याप्तिमाह। यत्कार्य्यमिति। कारणेन व्यापकेनेति शेषः। तत्कार्य्यं तत्कारणेन व्याप्तं यत्परिच्छिन्नं तदव्यापकेन व्याप्तं यच्च स्थूलं तत्सूक्ष्मेण व्याप्तमिति त्रिप्रकारा व्याप्तिः। इतिशब्दस्तत्समाप्त्यर्थः। व्याप्तिभूमि-

होवाच यदिदꣳ सर्वमप्स्वोतञ्च प्रोतञ्च कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति।

---

यत्कार्य्यं परिच्छिन्नं स्थूलं कारणेनापरिच्छिन्नेन सूक्ष्मेण व्याप्तमिति दृष्टम्। यथा पृथिव्यद्भिस्तथा पूर्व्वं पूर्वमुत्तरेणोत्तरेण व्यापिना भवितव्यमित्येष आसर्वान्तरादात्मनः प्रश्नार्थः। तत्र भूतानि पञ्च संहतान्येवोत्तरोत्तरं सूक्ष्मभावेन व्यापकेन कारणरूपेण च व्यवतिष्ठन्ते। न च परमात्मनोऽर्वाक्तद्व्यतिरेकेण वस्त्वन्तरमस्ति। सत्यस्य सत्यमिति श्रुतेः। सत्यञ्च भूतपञ्चकं सत्यस्य सत्यं च पर आत्मा। कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति। तासामपि कार्य्यत्वात् स्थूलत्वात्परिच्छिन्नत्वाच्च क्वचिदोतप्रोत भावेन भवितव्यम्। क्व तासामोतप्रो-

---

माह। यथेति। सम्प्रत्यनुमानमाह। तथेति। पूर्व्वं पूर्व्वमित्यवादेर्धर्मिणो निर्देशः। उत्तरेणोत्तरेण वाय्वादिकारणेनापरिच्छिन्नेन सूक्ष्मेण व्याप्तमिति शेषः। विमतं कारणेन व्यापकेन सूक्ष्मेण व्याप्तं कार्य्यत्वात्परिच्छिन्नत्वात्स्थूलत्वाच्च पृथिवीवदित्यर्थः। सर्व्वान्तरादात्मनोऽर्व्वागुक्तन्यायं सर्व्वत्र सञ्चारयति। इत्येष इति। ननु तत्रापि भूतपञ्चकव्यतिरिक्तानां गन्धर्व्वलोकादीनामप्यान्तरत्वेनोपदेशात्कथं भूतपञ्चकव्युदासेन सर्व्वान्तरप्रतिपत्तिर्विवक्षितेति तत्राह। तत्रेति। उक्तनीत्या प्रश्नार्थे स्थिते सतीति यावत्। भूतात्मस्थितिनिर्द्धारणे वा सप्तमी। अथ परमात्मानं भूतानि च हित्वा पृथगेव गन्धर्व्वलोकादीनि वस्त्वन्तराणि भविष्यन्ति नेत्याह। न चेति। गन्धर्व्वलोकादीन्यपि भूतानामेवावस्थाविशेषास्ततः सत्यं भूतपञ्चकं तस्य सत्यं परं ब्रह्म नान्यदन्तरालवर्त्ति प्रतिपत्तव्यमिति। अन्यप्रतिषेधार्थौ चशब्दौ। तात्पर्य्यमुक्त्वा प्रश्नमुत्थाप्य तदक्षराणि

वायौ गार्गीति कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गीति कस्मिन्नु खल्वन्तरिक्षलोका ओताश्च प्रोताश्चेति गन्धर्वलोकेषु गार्गीति कस्मिन्नु खलु गन्धर्वलोका ओताश्च प्रोताश्चेत्यादित्यलोकेषु गार्गीति कस्मिन्नु खल्वादित्यलोका ओताश्च प्रोताश्चेति चन्द्रलोकेषु गार्गीति कस्मिन्नु खलु चन्द्रलोका ओताश्च प्रोताश्चेति नक्षत्र-

---

तभाव इत्येवमुत्तरोत्तरं प्रश्नप्रसङ्गो योजयितव्यः।

वायौ गार्गीति। नन्वग्नाविति वक्तव्यम्। नैष दोषोऽग्नेः पार्थिवं वाप्यपां वा धातुमनाश्रित्येतरभूतवत्स्वातन्त्र्येणात्मलाभो नास्तीति। तस्मिन्नोतप्रोतभावो नोपदिश्यते कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गीति। तान्येव भूतानि संहतान्यन्तरिक्षलोकास्तान्यपि गन्धर्वलोकेषु गन्धर्वलोका आदित्यलोकेष्वादित्यलोकाश्चन्द्रलोकेषु चन्द्रलोका नक्षत्रलोकेषु नक्षत्रलोका देवलोकेषु देवलोका इन्द्रलोकेष्विन्द्रलोका विराड्शरीरारम्भकेषु भूतेषु प्रजापतिलोकेषु प्रजापतिलोका

---

व्याकरोति। कस्मिन्नित्यादिना। कस्मिन्नु खलु वायुरित्यादावुक्तन्यायमतिदिशति। एवमिति।

वायावित्ययुक्ता प्रयुक्तेरपामग्निकार्यत्वादग्नाविति वक्तव्यत्वादिति शङ्कते। नन्विति। अग्नेरुदकव्यापकत्वेऽपि काष्ठविद्युदादि पारतन्त्र्यात्स्वतन्त्रेण केनचिदपां व्याप्तिर्वक्तव्येत्यग्निं हित्वा तत्कारणं वायावित्युक्तं वायोश्च स्वकारणतन्त्रत्वेऽपि नोदकतन्त्रतेति तद्व्यापकत्वसिद्धिरित्युत्तरमाह।

लोकेषु गार्गीति कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्चेति देवलोकेषु गार्गीति कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्चेतीन्द्रलोकेषु गार्गीति कस्मिन्नु खल्विन्द्रलोका ओताश्च प्रोताश्चेति प्रजापतिलोकेषु गार्गीति कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु गार्गीति कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति स होवाच गार्गि ! मातिप्राक्षीर्मा ते मूर्द्धा व्यपप्तदनति-

---

ब्रह्मलोकेषु ब्रह्मलोका नामाण्डारम्भकाणि भूतानि। सर्व्वत्र हि सूक्ष्मतारतम्यक्रमेण प्राण्युपभोगाश्रयाकारपरिणतानि भूतानि संहतानि। तान्येवं पञ्चेति बहुवचनभाञ्जि। कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति। स होवाच याज्ञवल्क्यो हे गार्गि ! माति प्राक्षीः स्वं प्रश्नं न्यायप्रकारमतीत्यागमेन प्रष्टव्यां देवतामनुमानेन मा प्राक्षीरित्यर्थः। पृच्छन्त्याश्च मा ते तव मूर्द्धा शिरो व्यपप्तद्विस्पष्टं मा पतेत्। देवतायाः स्वप्रश्न आगमविषयस्तं प्रश्नविषयमतिक्रान्तो गार्ग्याः प्रश्न आनुमा-

---

नैष दोष इत्यादिना। अन्तरिक्षलोकशब्दार्थमाह। तान्येवेति। प्रजापतिलोकशब्दार्थं कथयति। विराडिति अन्तरिक्षलोकादीनां प्रत्येकत्वात्कुतो बहुवचनमित्याशङ्क्याह। सर्व्वत्र हीति। पूर्ववदनुमानेन स्वत्वं पृच्छन्तीं गार्गीं प्रतिषेधति। स होवाचेत्यादिना। उक्तमेव स्पष्टयन् वाक्यार्थमाह। आगमेनेति। । प्रतिषेधातिक्रमे दोषमाह। पृच्छन्त्याश्चेति।

प्रश्न्यां वै देवतामतिपृच्छसि गार्गि माति प्राप्सी-रिति ततो ह गार्गी वाचक्नव्युपरराम ॥ १ ॥ षष्ठं ब्राह्मणम् ॥ ६ ॥

अथ हैनमुद्दालक आरुणिः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेष्ववसाम पतञ्चलस्य काप्यस्य

---

निकत्वात् यस्या देवतायाः प्रश्नः सातिप्रश्न्या नातिप्रश्न्या अनतिप्रश्न्या स्वप्रश्नाविषयैव केवलागमगम्येत्यर्थः । तामनतिप्रश्न्यां वै देवतामति पृच्छसि अतो गार्गि माति प्राक्षीर्मूर्द्धा ते व्यपप्तदिति ततो ह गार्गी वाचक्नवी उपरराम ॥ १ ॥ इति श्रीमद्बृहदारण्यकभाष्ये पञ्चमे प्रपाठके षष्ठं ब्राह्मणम् ॥ ६ ॥

इदानीं ब्रह्मलोकानामन्तरतमं सूत्रञ्च वक्तव्यमिति तदर्थ आरम्भः । तच्चागमेनैव प्रष्टव्यमितीतिहासेनागमोपन्यासः क्रियते । अथ हैनमुद्दालको नामतोऽरुणस्यापत्यमारुणिः पप्रच्छ । याज्ञवल्क्येति होवाच । मद्रेषु देशेष्ववसामोषितवन्तः

---

मूर्द्धपातप्रसङ्गं प्रकटयन्प्रतिषेधमुपसंहरति । देवताया इत्यादिना ॥ १ ॥ पञ्चमस्य षष्ठं गार्गिब्राह्मणम् ॥ ६ ॥

पूर्वस्मिन्ब्राह्मणे सूत्रादर्वाक्तनं व्यापकमुक्तमिदानीं सूत्रं तदन्तर्गतमन्तर्यामिणं च निर्वक्तुमुत्तरब्राह्मणमिति सङ्गतिमाह । इदानीमिति । ब्राह्मणतात्पर्यमुक्त्वाख्यायिकातात्पर्यमाह । तच्चागमेनैवेति । आचार्योपदेशोऽत्रागमशब्दार्थः । गार्ग्या मूर्द्धपातभयादुपरतेरनन्तरमितत्रथशब्दार्थः । सोऽब्रवीदिति प्रतीकोपादानं तस्यार्थमाह । सूत्रमिति । इति

गृहेषु यज्ञमधीयानास्तस्यासीद्भार्य्या गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत् कबन्ध आथर्वण इति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकांश्च वेत्थ नु त्वं काप्य तत्सूत्रं येनायञ्च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्तीति सोऽब्रवीत्पतञ्चलः काप्यो नाहं तद्भगवन्वेदेति ।

---

पतञ्चलस्य । पतञ्चलो नाम तस्यैव कपिगोत्रस्य काप्यस्य गृहेषु यज्ञमधीयाना यज्ञशास्त्राध्ययनं कुर्वाणाः । तस्यासीद्भार्य्या गन्धर्वगृहीता तमपृच्छाम कोऽसीति । सोऽब्रवीत्कबन्धो नामतोऽथर्वणोऽपत्यमाथर्वण इति । सोऽब्रवीद्गन्धर्वः पतञ्चलं काप्यं याज्ञिकांश्च तच्छिष्यान्वेत्थ नु त्वं हे काप्य जानीषे तत्सूत्रम् । किन्तद्येन सूत्रेणायं च लोक इदं च जन्म परश्च लोकः परञ्च प्रतिपत्तव्यं जन्म सर्वाणि च भूतानि ब्रह्मादिस्तम्बपर्य्यन्तानि सन्दृब्धानि सङ्ग्रथितानि स्रगिव सूत्रेण विष्टब्धानि भवन्ति येन । तत्किं सूत्रं वेत्थ । सोऽब्रवीदेवं पृष्टः काप्यो नाहं तद्भगवन्वेदेति । तत्सूत्रं नाहं जाने हे भगवन्निति संपूजयन्नाह ।

---

शब्दार्थमाह । एवमिति । येनायञ्चेत्यादिरुक्तः प्रकारः स सर्वलोकांश्च वेत्तीतिसम्बन्धः । विशेषणोक्तिपूर्व्वकं तानेव लोकाननुवदति । भूरादीनिति । स ब्रह्मविदित्यादिनोक्तं सङ्क्षिपति । सर्वञ्चेति । तथाभूतं सूत्रेण विधृतमन्तर्यामिणा च नियम्यमानमिति यावत् ।

सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाꣳश्च वेत्थ नु त्वं काप्य तमन्तर्यामिणं य इमञ्च लोकं परञ्च लोकꣳ सर्वाणि च भूतानि योऽन्तरोऽयमयतीति सोऽब्रवत्पीतञ्चलः काप्यो नाहं तं भगवन्वेदेति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाꣳश्च यो वै तत्काप्यसूत्रं विद्यात्तञ्चान्तर्य्यामिणमिति स ब्रह्मवित्स

सोऽब्रवीत्पुनर्गन्धर्व उपाध्यायमस्मांश्च वेत्थ नु त्वं काप्य तमन्तर्यामिणमन्तर्यामीति विशेष्यते । य इमञ्च लोकं परञ्च लोकं सर्वाणि च भूतानि योऽन्तरोऽभ्यन्तरः सन्यमयति नियमयति दारुयन्त्रमिव भ्रामयति स्वं स्वमुचितव्यापारं कारयतीति । सोऽब्रवीदेवमुक्तः पतञ्चलः काप्यो नाहं तं जाने भगवन्निति संपूजयन्नाह । सोऽब्रवीत्पुनर्गन्धर्वः सूत्रतदन्तर्गतान्तर्यामिणोर्विज्ञानं स्तूयते । यः कश्चिद्वै तत्सूत्रं हे काप्य विद्याद्विजानीयात्तञ्चान्तर्यामिणं सूत्रान्तर्गतं तस्यैव सूत्रस्य नियन्तारं विद्याद्य इत्येवमुक्तेन प्रकारेण स हि ब्रह्मवित्परमात्मवित्स लोकांश्च भूरादीनन्तर्यामिणा नियम्यमानान् लोकान्वेत्ति स देवांश्चाग्न्यादीन् लोकिनो जानाति वेदांश्च सर्व्वप्रमाणभूतान्वेत्ति भूतानि च ब्रह्मादीनि सूत्रेण ध्रियमाणानि तदन्तर्गतेनान्तर्यामिणा नियम्यमानानि वेत्ति स आत्मानं च कर्तृत्वभोक्तृत्वविशिष्टं तेनै-

प्रस्तुतस्तुतिप्रयोजनमाह । इतीत्यमिति भवत्येवं तत्र सूत्रा-

लोकवित्स देववित्स वेदवित्स भूतवित्स आत्मवित्स सर्व्वविदिति तेभ्योऽब्रवीत्तदहं वेद तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वांस्तञ्चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्द्धा ते विपतिष्यतीति वेद वा अहं गौतम तत्सूत्रं तञ्चान्तर्यामिणमिति यो वा इदं कश्चिद्ब्रूयाद्वेद वेदेति यथा वेत्थ तथा ब्रूहीति ॥१॥

---

वान्तर्यामिणा नियम्यमानं वेत्ति सर्व्वञ्च जगत्तथाभूतं वेत्तीत्येवं श्रुते सूत्रान्तर्यामिविज्ञाने प्रलुब्धः काप्योऽभिमुखीभूतो वयञ्च तेभ्यश्चास्मभ्यमभिमुखीभूतेभ्यो ऽब्रवीद्गन्धर्वः सूत्रमन्तर्यामिणं च। तदहं सूत्रान्तर्यामिविज्ञानं वेद गन्धर्वाल्लब्धागमः सन्। तच्चेद्याज्ञवल्क्य सूत्रं तञ्चान्तर्यामिणमविद्वांश्चेदब्रह्मवित्सन् यदि ब्रह्मगवीरुदजसे ब्रह्मविदां स्वभूता गा उदजसे उन्नयसि त्वमन्यायेन ततो मच्छापदग्धस्य मूर्द्धा शिरस्ते तव विस्पष्टं पतिष्यति। एवमुक्तो याज्ञवल्क्य आह। वेद जानाम्यहं हे गौतमेति गोत्रतस्तत्सूत्रं यद्गन्धर्वस्तुभ्यमुक्तवान् यञ्चान्तर्यामिणं गन्धर्वाद्विदितवन्तो यूयं तञ्चान्तर्यामिणं वेदाहमित्येवमुक्ते प्रत्याह। गौतमो यः कश्चित्प्राकृत इदं यत्त्वयोक्तं ब्रूयात्कयं वेद वेदेत्यात्मानं श्लाघयन् किन्तेन गर्जितेन कार्य्येण दर्शय यथा वेत्थ तथा ब्रूहीति। १।

---

ज्ञानं मम किमायातमित्याशङ्क्याह। तच्चेदिति। किन्तेनेत्यत्र तस्येत्यध्याहारः कार्य्येण दर्शयेत्युक्तं विवृणोति यथेति ॥१॥

स होवाच वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायञ्च लोकः परश्च लोकः सर्व्वाणि च भूतानि सन्दृब्धानि भवन्ति तस्माद्वै गौतम पुरुषं प्रेतमाहुर्व्यस्रंसिषतास्याङ्गानीति वायुना हि

स होवाच याज्ञवल्क्यो। ब्रह्मलोका यस्मिन्नोताश्च प्रोताश्च वर्त्तमाने काले। यथा पृथिव्यप्सु तत्सूत्रमागमगम्यं वक्तव्यमिति तदर्थं प्रश्नान्तरमुत्थापितमिति। अतस्तन्निर्णयायाह। वायुर्वै गौतम तत्सूत्रं नान्यद्वायुरिति सूक्ष्ममाकाशवद्विष्टम्भकं पृथिव्यादीनां यदात्मकं सप्तदशविधं लिङ्गं कर्म्मवासनासमवायि प्राणिनां यत्तत्समष्टिव्यष्ट्यात्मकं यस्य बाह्या भेदाः सप्त सप्त मरुद्गणाः समुद्रस्येवोर्म्मयस्तदेतद्वायव्यं तत्त्वं सूत्रमित्यभिधीयते। वायुना वै गौतम सूत्रेणायञ्च लोकः परश्च लोकः सर्व्वाणि च भूतानि सन्दृब्धानि भवन्ति सङ्ग्रथितानि भवन्तीति प्रसिद्धमेतत्। अस्ति च लोके प्रसिद्धिः। कथं यस्माद्वायुः सूत्रं वायुना विधृतं

याज्ञवल्क्योक्तेस्तात्पर्यमाह। ब्रह्मलोका इति॥ इत्थमीदृशमागमादित्यध्याहृत्यागम्येति शब्दस्य योजना। प्रश्नान्तरं सूत्रविषयं गौतमवाक्यं वैशब्दार्थमाह। नान्यदिति॥ सूक्ष्मत्वे दृष्टान्तमाह। आकाशवदिति॥ वायुमेव विशिनष्टि। यदात्मकमिति॥ पञ्चभूतानि दश बाह्यानीन्द्रियाणि पञ्चवृत्तिः प्राणश्चतुर्विधमन्तःकरणमिति सप्तदशविधत्वम्॥ कर्म्मणां वासनानाञ्चोत्तरसृष्टिहेतूनां प्राणिभिरर्ज्जितानामाश्रयत्वाद्वैचित्र्यमेव लिङ्गमित्याह। कर्म्मेति॥ तस्यैव सामान्यविशेषात्मनो बहुरूपत्वमाह। यत्तदिति॥ तस्यैव लोकपरीक्षकप्रसिद्धत्व-

गौतम सूत्रेण संदृब्धानि भवन्तीत्येवमेवैतद्याज्ञवल्क्यान्तर्यामिणं ब्रूहीति ॥ २

यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी

---

सर्व्वं तस्माद्वै गौतम पुरुषं प्रेतमाहुः कथयन्ति व्यस्रंसिषत विस्रस्तान्यस्य पुरुषस्याङ्गानीति। सूत्रापगमे हि मण्यादीनां प्रोतानामवस्रंसनं दृष्टं एव वायुः सूत्रम्। तस्मिन्प्रोतानि यद्यस्याङ्गानि स्युस्ततो युक्तमेतद्वायपगमे विस्रंसनमङ्गानाम्। अतो वायुना हि गौतम सूत्रेण सन्दृब्धानि भवन्तीति निगमयति। एवमेवैतद्याज्ञवल्क्य सम्यगुक्तं सूत्रं तदन्तर्गतञ्चिदानीं तस्यैव सूत्रस्य नियन्तारमन्तर्यामिणं ब्रूहीत्युक्त आह ॥ २ ॥

यः पृथिव्यां तिष्ठन् भवति सोऽन्तर्यामी। सर्वः पृथिव्यां तिष्ठतीति सर्व्वत्र प्रसङ्गो माभूदिति विशिनष्टि। पृथिव्या अन्तरोऽभ्यन्तरस्तर्हि तत्स्यात्पृथिवी देवतैवान्तर्यामीत्यत आह। यमन्तर्यामिणं पृथिवी देवतापि न वेद मय्यन्यः

---

माह। यस्येति ॥ तस्य सूत्रत्वं साधयति। वायुर्नेति ॥ प्रसिद्धमेतत्सूत्रविदामिति शेषः ॥ लौकिकीं प्रसिद्धिमेव प्रश्नपूर्वकमनन्तरश्रुत्यवष्टम्भेन स्फुटयति। कथमित्यादिना ॥ उक्तमेव दृष्टान्तं व्यनक्ति। सूत्रेत्यादिना ॥ वायोः सूत्रत्वे सिद्धे फलितमाह। अत इति ॥ २ ॥

नियन्तुरीश्वरस्य लौकिकनियन्तृवत्कार्य्यकरणत्वमाशङ्क्याह। यस्येति ॥ पृथिव्याः शरीरित्वमेव न तु शरीरत्वमित्याशङ्क्याह। पृथिवीति ॥ पृथिव्या यत्करणं तदेव तस्य करणं वेति योजना कथं

न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ३ ॥

---

काद्विद्वन्तत इति । यस्य पृथिवी शरीरं यस्य च पृथिव्येव शरीरं नान्यत्पृथिवीदेवताया यच्छरीरं तदेव शरीरं यस्य । शरीरग्रहणं चोपलक्षणार्थं करणञ्च पृथिव्यास्तस्याः स्वकर्म्मप्रयुक्तं हि कार्य्यं करणञ्च पृथिवीदेवतायाः । तदस्य स्वकर्म्माभावादन्तर्यामिणो नित्यमुक्तत्वात्परार्थकर्त्तव्यतास्वभावत्वात्परस्य यत्कार्य्यं करणञ्च तदेवास्य न स्वतस्तदाह यस्य पृथिवी शरीरमिति । देवताकार्य्यकरणयोरीश्वरसाक्षिमात्रसान्निध्येन हि नियमेन प्रवृत्तिनिवृत्ती स्याताम् । य ईदृगीश्वरो नारायणाख्यः पृथिवीं पृथिवीदेवतां यमयति नियमयति । स्वव्यापारेऽन्तरोऽभ्यन्तरस्तिष्ठन्नेष त आत्मा । ते तव मम च सर्व्वभूतानां चेत्युपलक्षणार्थं एवदन्तर्यामी यस्त्वया पृष्टोऽमृतः सर्व्वसंसारधर्म्मवर्जित इत्येतत्समानमन्यत् ॥ ३ ॥

---

पृथिव्याः शरीरेन्द्रियवत्त्वं तदाह । स्वकर्म्मेति ॥ अन्तर्यामिणोऽपि तथा किं न स्यात्तत्राह । तदस्येति ॥ अस्यान्तर्यामिणस्तदेव कार्य्यं करणञ्च नान्यदित्यत्र हेतुमाह । स्वकर्म्मेति ॥ तदेव हेत्वन्तरेण स्फोरयति । परार्थेति ॥ यः पृथिवीमित्यादिवाक्यस्य तात्पर्य्यमाह । देवतेति ॥ तत्र वाक्यमवतार्य्य व्याचष्टे । य ईदृगिति ॥ यस्य पृथिवीदेवताकार्य्यकरणाभ्यामेव कार्य्यकरणवत्त्वमीश्वरत्वम् ॥ पृथिवीपर्य्याये दर्शितन्यायं पर्य्यायान्तरेऽतिदिशति । समानमिति ॥ ३ ॥

योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्यापः शरीरं योऽपोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ४ ॥ योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ५ ॥ योऽन्तरिक्षे तिष्ठन्नन्तरिक्षादन्तरो यमन्तरिक्षं न वेद यस्यान्तरिक्षं शरीरं योऽन्तरिक्षमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ६ ॥ यो वायौ तिष्ठन्वायोरन्तरो यं वायुर्न वेद यस्य वायुः शरीरं यो वायुमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ७ ॥ यो दिवि तिष्ठन्दिवोऽन्तरो यं द्यौर्न वेद यस्य द्यौः शरीरं यो दिवमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ८ ॥ य आदित्ये तिष्ठन्नादित्याद-

---

योऽप्सु तिष्ठन्नग्नावन्तरिक्षे वायौ दिव्यादित्ये दिक्षु चन्द्रतारके आकाशे यस्तमसि आवरणात्मके बाह्ये तमसि तेजसि तद्विपरीते प्रकाशसामान्य इत्येवमधिदैवतमन्तर्यामिविषयं दर्शनं देवतासु । अथाधिभूतं भूतेषु ब्रह्मादिस्तम्बपर्य्यन्तेष्वन्तर्यामिदर्शनमधिभूतं । अथाध्यात्मं यः प्राणे प्राणवायुसहिते घ्राणे यो वाचि चक्षुषि श्रोत्रे मनसि त्वचि

---

सर्व्वत्र प्राणादौ तिष्ठन्नन्तर्यामी तवात्मेति सम्बन्धः ॥ वाक्यान्तरं प्रश्नपूर्व्वकमुत्थाप्य व्याचष्टे । कस्मादित्यादिना ॥ यथा मनसि

न्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ९ ॥ यो दिक्षु तिष्ठन्दिग्भ्योऽन्तरो यं दिशो न विदुर्यस्य दिशः शरीरं यो दिशोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १० ॥ यश्चन्द्रतारके तिष्ठꣳश्चन्द्रतारकादन्तरो यं चन्द्रतारकं न वेद यस्य चन्द्रतारकꣳ शरीरं यश्चन्द्रतारकमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ११ ॥ य आकाशे तिष्ठन्नाकाशादन्तरो यमाकाशो न वेद यस्याकाशः शरीरं य आकाशमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १२ ॥ यस्तमसि तिष्ठꣳस्तमसोऽन्तरो यं तमो न वेद यस्य तमः शरीरं यस्तमोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १३ ॥

---

विज्ञाने बुद्धौ रेतसि प्रजनने । कस्मात्पुनः कारणात्पृथिव्यादिदेवता महा भागाः सत्यो मनुष्यादिवदात्मनि तिष्ठन्तमात्मनो नियन्तारमभिमुखं न विदुरित्यत आह । अदृष्टो न दृष्टो न विषयीभूतश्चक्षुर्दर्शनस्य कस्यचित्स्वयन्तु चक्षुषि सन्निहितत्वात् दृशिस्वरूप इति द्रष्टा । तथा अश्रुतः श्रोत्रगोचरत्वमनापन्नः कस्यचित्स्वयन्त्वलुप्तश्रवणशक्तिः सर्वश्रोत्रेषु सन्निहितत्वात् श्रोता । तथा अमतो मनः-

---

तथा बुद्धावपि सन्निधानाज्ज्ञातेति यावत् । तत्रेति पूर्व्वस-

यस्तेजसि तिष्ठंस्तेजसोऽन्तरो यं तेजो न वेद यस्य तेजः शरीरं यस्तेजोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इत्यधिदैवतमथाधिभूतं ॥ १४ ॥ यः सर्व्वेषु भूतेषु तिष्ठन्सर्व्वेभ्यो भूतेभ्योऽन्तरो यं सर्व्वाणि भूतानि न विदुर्यस्य सर्व्वाणि भूतानि शरीरं यः सर्व्वाणि भूतान्यन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इत्यधिभूतमथाध्यात्मं ॥ १५ ॥ यः प्राणे तिष्ठन्प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १६ ॥ यो वाचि तिष्ठन्वाचोऽन्तरो यं वाङ्न वेद यस्य वाक् शरीरं यो वाचमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१७॥ यश्चक्षुषि तिष्ठंश्चक्षुषोऽ

---

सङ्कल्पविषयमनापन्नः। दृष्टे श्रुते एव हि सर्वः सङ्कल्पयत्य-दृष्टत्वादश्रुतत्वादेवामतोऽलुप्तमननशक्तित्वात्सर्वमनःसु सन्निहितत्वाच्च मन्ता। तथाऽविज्ञातो निश्चयगोचरमनापन्नो रूपादिवत्सुखादिवद्वा स्वयन्त्वलुप्तविज्ञानशक्तित्वात्सान्निध्याच्च विज्ञाता। तत्र यं पृथिवी न वेद यं सर्व्वाणि भूतानि न विदुरिति चान्ये नियन्तव्या विज्ञातारोऽन्यो नियन्तान्तर्यामीति प्राप्तं तदन्यत्वाशङ्कानिवृत्त्यर्थमुच्यते।

---

त्वमर्थोक्तिः। अन्वयमुपलक्षयितुमतोऽन्य इत्युक्तान् पदार्थान्व्या-

न्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुर-
न्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१८॥ यः
श्रोत्रे तिष्ठञ्छ्रोत्रादन्तरो यꣳ श्रोत्रं न वेद यस्य
श्रोत्रꣳ शरीरं यः श्रोत्रमन्तरो यमयत्येष त आ-
त्मान्तर्याम्यमृतः ॥ १९ ॥ यो मनसि तिष्ठन्मनसो
ऽन्तरो यं मनो न वेद यस्य मनः शरीरं यो मनो
न्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ २० ॥
यस्त्वचि तिष्ठꣳस्त्वचोऽन्तरो यं त्वङ्न वेद यस्य
त्वक् शरीरं यस्त्वचमन्तरो यमयत्येष त आत्मा-
न्तर्याम्यमृतः ॥ २१ ॥ यो विज्ञाने तिष्ठन्विज्ञाना-
दन्तरो यं विज्ञानं न वेद यस्य विज्ञानꣳ शरीरं
यो विज्ञानमन्तरो यमयत्येष त आत्मान्तर्याम्य-
मृतः ॥ २२ ॥ यो रेतसि तिष्ठन्रेतसोऽन्तरो यꣳ

---

नान्योऽतो न ह्यन्य इतोऽस्मादन्तर्यामिणो नान्योऽतोऽस्ति
द्रष्टा तथा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता
नान्योऽतोऽस्ति विज्ञाता यस्मात्परो नास्ति द्रष्टा श्रोता
मन्ता विज्ञाता योऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ता
ऽविज्ञातो विज्ञाताऽमृतः सर्वसंसारधर्म्मवर्जितः सर्वसंसा-
रिणां कर्म्मफलविभागकर्त्तैष त आत्मान्तर्याम्यमृतोऽस्मा-

---

करोति। अत इति॥ अन्यो द्रष्टा नास्तीति सम्बन्धः। एव ॥ इ-
त्यर्द्धवाक्यस्यार्थमाह। यस्मादित्यादिना॥ २ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

रेतो न वेद यस्य रेतः शरीरं यो रेतोऽन्तरो यमय-
त्येष त आत्मान्तर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः
श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्योऽतोऽस्ति
द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता ना-
न्योऽतोऽस्ति विज्ञातैष त आत्मान्तर्याम्यमृतोऽतोऽन्य-
दार्त्तं ततो होद्दालक आरुणिरुपरराम ॥ २३ ॥
सप्तमं ब्राह्मणं । ७ ।

अथ ह वाचक्नव्युवाच ब्राह्मणा भगवन्तो हन्ता-
हमिमं द्वौ प्रश्नौ प्रक्ष्यामि तौ चेन्मे वक्ष्यति न

---

दीश्वराद् अतोऽन्यदार्त्तं ततो होद्दालक आरुणिरुपरराम
॥ ४ ॥ ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ ।
१५ । १६ । १७ । १८ । १९ २० । २१ । २२ । २३ ॥
इति बृहदारण्यके पञ्चमप्रपाठकभाष्ये सप्तमं ब्राह्मणम् ॥

अतः परमशनायादिविनिर्मुक्तं निरुपाधिकं साक्षादप-
रोक्षात्सर्वान्तरं ब्रह्म वक्तव्यमित्यत आरम्भः । अथ ह वाच-
क्नव्युवाच पूर्वं याज्ञवल्क्येन निषिद्धा मूर्द्धपातभयादुप-
रता सती पुनः प्रष्टुं ब्राह्मणाननुज्ञां प्रार्थयते । हे ब्राह्मणाः

---

॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९
॥ २० ॥ २१ ॥ २२ ॥ इति पञ्चमस्य सप्तममन्तर्यामिब्राह्मणम् ॥ पूर्व-
स्मिन्ब्राह्मणे सूत्रान्तर्यामिणौ प्रश्नप्रत्युक्तिभ्यां निर्द्धारितौ सम्प्रत्युत्तर-
ब्राह्मणतात्पर्यमाह – अतः परमिति ॥ सोपाधिकवस्तुनिर्द्धारणानन्तर्यमतः

वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति पृच्छ गार्गीति ॥ १ ॥

सा होवाचाहं वै त्वा याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ हस्ते कृत्वोपति-

---

भगवन्तः पूजावन्तः शृणुत मम वचो हन्ताहमिमं याज्ञवल्क्यं पुनर्द्वौ प्रश्नौ प्रक्ष्यामि यद्यनुमतिर्भवतामस्ति तौ प्रश्नौ चेद्यदि वक्ष्यति कथयिष्यति मे कथञ्चिन्न वै जातु कदाचिद्युष्माकं मध्ये इमं याज्ञवल्क्यं कश्चिद्ब्रह्मोद्यं ब्रह्मवदनं प्रति जेता न वै कश्चिद्भवेदित्येवमुक्ता ब्राह्मणा अनुज्ञां प्रददुः पृच्छ गार्गीति लब्धानुज्ञा ह याज्ञवल्क्यम् ॥२।

सा होवाचाहं वै त्वा त्वां द्वौ प्रश्नौ प्रक्ष्यामीत्यनुषज्यते ॥ कौ ताविति जिज्ञासायां तयोर्दुरुत्तरत्वं द्योतयितुं दृष्टान्तपूर्वकं तावाह । हे याज्ञवल्क्य यथा लोके काश्यः काशीषु भवः काश्यः प्रसिद्धं शौर्यं काश्ये वैदेहो वा विदेहानां वा राजा उग्रपुत्रः शूरान्वय इत्यर्थः । उज्ज्यमवतारितज्याकं धनुः पुनरधिज्यमारोपितज्याकं कृत्वा द्वौ बाण-

---

थशब्दार्थः ॥ ननु यस्माद्भयाद्गार्गी पूर्वमुपरता तस्मात्तदवस्थत्वात्कथं पुनः सा प्रष्टुं प्रवर्त्तते तत्राह । पूर्वमिति ॥ हन्तेत्यस्यार्थमाह । यदीति ॥ न वै जात्विति प्रतीकमादाय व्याचष्टे । कदाचिदित्यादिना ॥१॥

आश्चर्यं दर्शयितुं कश्चिदिति पुनरुक्तिः सन्धीयते । स उच्यत इति ॥ शेषप्रश्नयोरवश्यप्रत्युत्तरणीयत्वे वरिष्ठत्वाङ्गीकारो हेतु-

ष्ठेदेवमेवाहं त्वां द्वाभ्यां प्रश्नाभ्यामुपोदस्थान्तौ मे ब्रूहीति पृच्छ गार्गीति ॥ २ ॥

सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिꣳस्तदोतं च प्रोतं चेति

---

वन्तौ बाणशब्देन शराग्रे यो वंशखण्डः स उच्यते तेन विनापि शरो भवतीत्यतो विशिनष्टि । बाणवन्ताविति तौ द्वौ बाणवन्तौ शरौ तयोरेव विशेषणं सपत्नातिव्याधिनौ शत्रोः पीडाकरावतिशयेन हस्ते कृत्वा योत्तिष्ठेत्समीपत आत्मानं दर्शयेदेवमेवाहं त्वां शरस्थानीयाभ्यां प्रश्नाभ्यां द्वाभ्यामुपोदस्थामुत्थितवत्यस्मि त्वत्समीपे । तौ मे ब्रूहि ब्रह्मविच्चेद्ब्राह्मणः पृच्छ गार्गीति ॥ २ ॥

सा होवाच यदूर्ध्वमुपरि दिवोऽण्डकपालाद्यच्चावागधः पृथिव्या अधोऽण्डकपालाद्यच्चान्तरा मध्ये द्यावापृथिवी द्यावापृथिव्योरण्डकपालयोरिमे च द्यावापृथिवी यद्भूतं यच्चातीतं भवच्च वर्तमानं स्वव्यापारस्थं भविष्यच्च वर्तमानादूर्ध्वकालभावि लिङ्गगम्यं यत्सर्वमेतदाचक्षते कथयन्त्य

---

रित्याह । ब्रह्मविच्चेदिति ॥ सूत्रस्याधारे पृष्टे किमिति सर्वजगदनूद्यते तत्राह । तत्सर्वमिति । पूर्वोक्तं सर्वं जगदात्मकमिति यावत् ॥ २ ॥

यथा प्रश्नमनूद्य प्रत्युक्तिमादर्शे । स होवाचेति । तां व्याचष्टे । यदेतदिति । यज्जगदाकृतं सूत्रात्मकमेतदव्याकृताकाशे वर्तत इति

॥ ३ ॥ होवाच यदूर्द्ध्वं गार्गि दिवो यदवाक्
पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतञ्च भवच्च
भविष्यच्चेत्याचक्षत आकाशे तदोतञ्च प्रोतञ्चेति
॥ ४ ॥ स होवाच नमस्तेऽस्तु याज्ञवल्क्य यो म
एतं व्यवचोऽपरस्मै धारयस्वेति पृच्छ गार्गीति
॥ २ ॥

---

त्यागमतस्तत्त्वं द्वैतजातं यस्मिन्नेकीभवतीत्यर्थः । तत्सूत्र-मत्र पूर्वोक्तं कस्मिन्नोतञ्च प्रोतञ्च पृथिवीधातुरिवाप्सु ॥३॥ स होवाचेतरो हे गार्गि यत्त्वयोक्तमूर्द्ध्वं दिव इत्यादि तत्सर्वं यत्सूत्रमाचक्षते तत्सूत्रमाकाशे तदोतञ्च प्रोतञ्च यदेतद्व्याकृतं सूत्रात्मकं जगदव्याकृताकाशेऽप्स्विव पृथिवीधातुस्त्रिष्वपि कालेषु वर्त्तते उत्पत्तौ स्थितौ लये च ॥४॥ पुनः सा होवाच नमस्तेऽस्त्वित्यादिप्रश्नस्य दुर्वचत्वप्रदर्श-नार्थं यो मे ममैतं प्रश्नं व्यवचो विशेषेणोक्तवानसि । एतस्य दुर्वचत्वे कारणं सूत्रमेव तावदगम्यमितरैर्दुर्वाच्यं किमुत तद्यस्मिन्नोतञ्च प्रोतञ्चेत्यतो नमोऽस्तु ते तुभ्यमपरस्मै द्विती-याय प्रश्नाय धारयस्व दृढीकुर्वात्मानमित्यर्थः । पृच्छ गार्गीतीतर आह व्याख्यातमन्यत् ॥ ५ ॥

---

समन्वयः । त्रिष्वपि कालेष्विति यदुक्तं तद्व्यनक्ति । उत्पत्ताविति । तस्य-सारं वाक्यमन्यदित्युच्यते ॥ २ ॥ ४ ॥ ५ ॥

सा होवाच यदूर्द्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतञ्च प्रोतञ्चेति ॥६॥ स होवाच यदूर्द्ध्वं गार्गि दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतञ्च प्रोतञ्चेति कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति ॥७॥

---

सा होवाच यदूर्द्ध्वं याज्ञवल्केत्यादिप्रश्नः प्रतिवचनं चोक्तस्यैवार्थस्यावधारणार्थं पुनरुच्यते। न किञ्चिदपूर्व्वमर्थान्तरमुच्यते। सर्व्वं यथोक्तं गार्ग्या प्रत्युच्चार्य्य तमेव पूर्व्वोक्तमर्थमवधारितवानाकाश एवेति याज्ञवल्क्यः। गार्ग्याह कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति। आकाशमेव तावत्कालत्रयातीतत्वाद्दुर्वाच्यम्। ततोऽपि कष्टतरमक्षरं यस्मिन्नाकाशमोतञ्च प्रोतञ्चातो वाच्यमिति कृत्वा न प्रतिपद्यते स। प्रतिपत्तिर्नाम निग्रहस्थानं तार्क्किकसमये यावाच्यमपि वदति। तथापि विप्रतिपत्तिर्नाम निग्रहस्थानं विरुद्धा प्रतिपत्तिर्हि सा यदवाच्यस्य वदनमतो दुर्व्वचनं प्रश्नं मन्यते गार्गी तद्दोषद्वयमपि परिजिहीर्षन्नाह ॥६।७॥

---

तदेव प्रश्नप्रतिपत्तिवचनरूपमनुवदति। सा हेति। पुनरुक्तेरकिञ्चित्करत्वं व्यावर्त्तयति। उक्तस्यैवेति॥ प्रतिवचनानुवादतात्पर्य्यमाह। गार्गीति॥ प्रश्नाभिप्रायं प्रकटयति। आकाश एवेति॥ ६॥ ७॥

स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममा-

स होवाच याज्ञवल्क्यः। एतद्वै तद्यत्पृष्टवत्यसि कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति। किन्तदक्षरं यन्न क्षीयते न क्षरतीति चाक्षरं तदक्षरं हे गार्गि ब्राह्मणा ब्रह्मविदोऽभिवदन्ति। ब्राह्मणाभिवदनकथनेन नाहमवाच्यं वक्ष्यामि न च न प्रतिपद्येयमित्येवं दोषद्वयं परिहरति। एवमपाकृते प्रश्ने पुनर्गार्ग्याः प्रतिवचनं द्रष्टव्यम्। ब्रूहि किं तदक्षरं यद्ब्राह्मणा अभिवदन्तीत्युक्त आह। अस्थूलं तत्स्थूलादन्यदेवं तर्हि अणु अनणु अस्तु तर्हि ह्रस्वमह्रस्वमेव तर्हि दीर्घं नापि दीर्घमदीर्घं एवमेतैश्चतुर्भिः परिमाणप्रतिषेधैर्द्रव्यधर्मः प्रतिषिद्धो न न द्रव्यं तदक्षरमित्यर्थः। अस्तु तर्हि लोहितो गुण स्ततोऽप्यन्यदलोहितम्। आग्नेयो गुणो लोहितो भवतु तर्ह्यपां स्नेहनं नास्नेहमस्तु तर्हि छाया सर्वथाप्यनिर्देश्यत्वाच्छायाया अप्यन्यदच्छायमस्तु तर्हि तमोऽतमो भवतु वायुस्तर्ह्यवायुर्भवत्वाकाशस्तर्ह्यनाकाशं भवतु तर्हि सङ्गात्मकं

अप्रतिपत्तिर्विप्रतिपत्तिश्चेति दोषद्वयं सामान्येनोक्तं विशेषतो ज्ञातुं पृच्छति। किन्तदिति॥ अस्थूलादिवाक्यमवतार्य व्याकरोति। एवमित्यादिना॥ यदग्नेर्लोहितं रूपमित्यादि श्रुतिमाश्रित्याह। आग्नेय इति॥ अवायुविशेषणेनाप्राणविशेषणस्य पुनरुक्तिमाशङ्क्याह। आ-

तमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन ॥ ८ ॥

एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्र-

---

जतुवदसङ्गं रसोऽस्तु तर्ह्यरसं तथाऽगन्धमस्तु तर्हि चक्षुष्कमचक्षुष्कं न हि चक्षुरस्य करणं विद्यतेऽतोऽचक्षुष्कं पश्यत्यचक्षुरिति मन्त्रवर्णात्तथाऽश्रोत्रं स शृणोत्यकर्ण इति। भवतु तर्हि वागिवाक्तथाऽमनस्तथाऽतेजस्कमविद्यमानं तेजोऽस्य तदतेजस्कम्। न हि तेजोऽग्न्यादिप्रकाशवदस्य विद्यते प्राणमाध्यात्मिको वायुः प्रतिषिध्यतेऽप्राणमिति। मुखं तर्हि द्वारं तदमुखममात्रं मीयते येन तन्मात्रममात्रं मात्रारूपं तन्न भवति न तेन किञ्चिन्मीयते। अस्तु तर्हि छिद्रवदन्तरवदनन्तरं नास्यान्तरमस्ति। सम्भवेत्तर्हि बहिस्तस्याबाह्यमस्तु तर्हि भक्षयितृ तन्न तदश्नाति किञ्च न भवेत्तर्हि भक्ष्यं कस्यचिन्न तदश्नाति कश्चन सर्व्वविशेषणरहितमित्यर्थः। एकमेवाद्वितीयं हि तत्केन किं विशिष्यते ॥ ८ ॥

अनेकविशेषणप्रतिषेधप्रयासादस्तित्वं तावदक्षरस्योपगमितं श्रुत्या तथापि लोकबुद्धिमपेक्ष्याशङ्क्यते यतोऽतोऽ

---

ध्यात्मिक इति। अमात्रमिति मानमेयात्वयो निराक्रियते तस्येत्यात्मोक्तिः ॥ सम्पिण्डितमर्थमाह। सर्व्वेति तदुपपादयति एकमिति ॥ ८ ॥

अथ यथोक्तया नीत्या श्रुत्यैवाक्षरास्तित्वे ज्ञापिते वक्तव्याभावात्किमुत्तरेण ग्रन्थेनेति तत्राह। अनेकेति ॥ यदस्ति तद्विशेषणमेवेति लौकिकी बुद्धिराशङ्क्यते। नेति। अक्षरं निर्विशेषणमिति शेषः।

मसौ विधृतौ तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः ॥

---

स्तित्वायानुमानं प्रमाणमुपन्यस्यति। एतस्य चाक्षरस्य यदेतदधिगतमक्षरं सर्व्वान्तरं साक्षादपरोक्षाद्ब्रह्म य आत्मा ऽशनायादिधर्म्मातीत एतस्य वै अक्षरस्य प्रशासने। यथा राज्ञः प्रशासने राज्यमस्फुटितं नियतं वर्त्तते एवमेतस्याक्षरस्य प्रशासने हे गार्गि सूर्य्याचन्द्रमसौ सूर्य्यश्च चन्द्रमाश्च सूर्य्याचन्द्रमसौ अहोरात्रयोर्लोकप्रदीपौ तादर्थ्येन प्रशासित्रा ताभ्यां निर्वर्त्त्यमानलोकप्रयोजनविज्ञानवता निर्म्मितौ विधृतौ च स्याताम्। साधारणसर्व्वप्राणिप्रकाशोपकारकत्वाल्लौकिकप्रदीपवत्। तस्मादस्ति तद्येन

---

अन्तर्यामिणि जगत्कारणे परक्षिप्तनुमानलिङ्गे शिवचितं निरूपाध्यक्षरं सेत्स्यति जगत्कारणत्वस्योपलक्षणतया जन्मादिसूत्रे स्थितत्वादुपलक्षणद्वारा ब्रह्मणि स्वरूपलक्षणप्रवृत्तेरन्तर्यामिण्यनुमानप्रकृतोपयुक्तेति भावः। अनुमानश्रुत्यक्षराणि व्याकरोति। यदेतदिति। प्रशासने सूर्य्याचन्द्रमसौ विधृतौ स्यातामिति सम्बन्धः॥ उक्तमर्थं दृष्टान्तेन स्फोरयति। यथेति॥ अत्रापि पूर्व्ववदन्वयः। जगद्व्यवस्था प्रशासितृपूर्व्विका व्यवस्थात्वाद्राज्यव्यवस्थावदित्यर्थः॥ सूर्य्याचन्द्रमसावित्यादौ विवक्षितमनुमानमाह। सूर्य्यश्चेत्यादिना। तादर्थ्येन लोकप्रकाशार्थत्वेन प्रशासित्रा निर्म्मितावित्ति सम्बन्धः। निर्म्मातुर्विशिष्टविज्ञानवत्त्वमाचष्टे। तन्निर्वर्त्त्यमानेति। सूर्य्याचन्द्रमसौ तदुदयाच्यौ विमतौ विशिष्टविज्ञानवता निर्म्मितौ प्रकाशत्वात्प्रदीपवदित्यर्थः। विमतौ नियन्तृपूर्व्वकौ विशिष्टचेष्टावत्त्वाद्भृत्यादिवदित्यभिप्रेत्याह। विधृताविति। प्रकाशोपकारकत्वं तज्जनकत्वं निर्म्मातुर्विशिष्टविज्ञाने सम्भावनार्थं विशेषणं साधारणः स-

विधृतावीश्वरौ स्वतन्त्रौ सन्तौ निर्मितौ तिष्ठतौ नियत-देशकालनिमित्तोदयास्तमनवृद्धिक्षयाभ्यां च वर्त्तेते । तद्-स्त्वेवमितयोः प्रकाशिवक्षरं प्रदीपकर्तृविधारयितृवदेतस्य वाक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ द्यौश्च पृथिवी च सावयवत्वास्फुटनस्वभावे अपि सत्यौ गुरुत्वात्पतनस्व-भावे ॥ संयुक्तत्वाद्वियोगस्वभावे चेतनावदभिमानिदेवताधि-ष्ठितत्वात्स्वतन्त्रे अप्येतस्याक्षरस्य प्रशासने वर्त्तेते विधृते तिष्ठतः ॥

एतद्ध्यक्षरं सर्वव्यवस्थासेतुः सर्वमर्य्यादाविधरणमतो नास्याक्षरस्य प्रशासनं द्यावापृथिव्यौ अतिक्रामतस्तस्मा-

र्वेषां प्राणिनां यः प्रकाशस्तस्य जनकत्वादिति यावत् । दृष्टान्ते लौकि-कविशेषणं प्रासादादिविशिष्टदेशनिविष्टत्वसिद्ध्यर्थम् ॥ आनुमानफलमुपसंह-रति । तस्मादिति ॥ विशिष्टं चेष्टावत्त्वादित्युपदिष्टं हेतुं सूचयति । नियतेति । नियतौ देशकालौ नियतञ्च निमित्तं प्राण्यदृष्टं तद्वन्तौ सूर्य्याचन्द्रमसावुदयनावस्तमयौ तौ च येन विधृतावुदयास्तमयाभ्यां वृद्धि-क्षयाभ्यां च वर्त्तेते उदयश्चास्तमयश्चोदयास्तमयम् । वृद्धिश्च क्षयश्च वृद्धिक्षयमिति द्वन्द्वं गृहीत्वा द्विवचनम् । एवं कर्तृत्वेन विधारयितृ-त्वेन चेत्यर्थः । श्रितते प्रयतवता विधृते सावयवत्त्वेऽप्यस्फुटितत्वाद् गु-रुत्वेऽपि अपतितत्वात्संयुक्तेऽप्यवियुक्तत्वाच्चेतनावत्त्वेऽस्वतन्त्रत्वाच्च हस्तन्यस्त पाषाणादिवदिति ॥ द्वितीयपर्य्यायस्य तात्पर्य्यमाह । सावयवत्त्वादि-त्यादिना ॥

किमित्येतस्य प्रशासने द्यावापृथिव्यौ वर्त्तेते तत्राह । एतद्धीति । पृथिव्यादिव्यवस्था नियन्तारं विनानुपपन्ना तत्कल्पिकेत्यर्थः ॥ तथा कि-

मुहूर्त्ता अहोरात्राण्यर्द्धमासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्त्येतस्य वा अक्षरस्य प्रशा-

---

लिङ्गमस्यास्तित्वमक्षरस्य। अव्यभिचारि हि तल्लिङ्गं यद्यावापृथिव्यौ नियते वर्त्तेते चेतनावन्तं प्रशासितारमसंसारिणमन्तरेण नैतद्युक्तं येन द्यौरुग्रा पृथिवी च दृढ़ेति मन्त्रवर्णात्। एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्त्ता इत्येते कालावयवाः सर्वस्यातीतानागतवर्त्तमानस्य जनिमतः कलयितारः। यथा लोके प्रभुणा नियतो गणकः सर्वमायं व्ययञ्चाप्रमत्तो गणयति तथा प्रभुस्थानीय एषां कालावयवानां नियन्ता। तथा प्राच्यः प्रागञ्चनाः पूर्व्वदिग्गमना नद्यः स्यन्दते स्रवन्ति श्वेतेभ्यो हिमवदादिभ्यः पर्व्वतेभ्यो गिरिभ्यो गङ्गाद्या नद्यस्ताश्च यथ

---

मित्येतेन विधृते द्यावापृथिव्याविति तत्राह। सर्वमर्य्यादेति॥ एष सेतुर्विधरण इति श्रुत्यन्तरमाश्रित्य फलितमाह। अतो नास्तेति॥ द्वितीयपर्य्यायार्थमुपसंहरति। तस्मादिति॥ तच्छब्दोपात्तमर्थं स्फोरयति। अव्यभिचारीति॥ अव्यभिचारित्वं प्रकटयति। चेतनावन्तमिति। पृथिव्यादेर्नियन्तृत्वमेतच्छब्दार्थः॥ नियन्तृत्वसिद्धावपि कथमीश्वरसिद्धिरित्याशङ्क्याह। येनेति। उग्रत्वं पृथिव्यादेश्चेतनावदभिमानिदेवतावत्त्वेन स्वातन्त्र्यम्। येन स्वस्तभितं येन नाको योऽन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम इत्यत्र हिरण्यगर्भाधिष्ठातेश्वरः पृथिव्यादेर्नियन्तोच्यते। न हि हिरण्यगर्भमात्रस्यास्मिन्प्रकरणे पूर्वापरग्रन्थयोरुच्यमानं निरङ्कुशं सर्वनियन्तृत्वं सम्भवतीति भावः। एते कालावयवा विधृतास्तिष्ठन्तीति सम्बन्धः॥ तत्रानुमानं वक्तुं हेतुमाह। सर्वस्येति॥ यः कलयिता स नियन्तृपूर्वक इति व्याप्तिभूमिमाह। यथेति॥ दार्ष्टा-

सने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्व्वतेभ्यः प्रतीच्योऽन्यायां याञ्च दिशमन्वेति ॥

---

प्रवर्त्तिता एव नियताः प्रवर्त्तन्ते नान्यथापि प्रवर्त्तितुमुत्सहन्त्यतस्तदेतल्लिङ्गं प्रशास्तुः प्रतीच्योऽन्याः प्रतीचीं दिशमस्यन्दन्ति सिन्ध्वाद्या नद्य अन्याश्च यां यां दिशमनुप्रवृत्तास्तां तां न व्यभिचरन्ति तच्च लिङ्गम्। किञ्च ददतो हिरण्यादीन् प्रयच्छतः स्वात्मपीडां कुर्व्वतोऽपि प्रमाणज्ञा अपि मनुष्याः प्रशंसन्ति। तत्र यच्च दीयते ये च ददति ये च प्रतिगृह्णन्ति तेषामिहैव समागमो विलयश्चानन्तरो दृश्यते। अदृष्टस्तु परः समागमः ॥

---

ल्लिङ्गन्दर्शयन्ननुमानमाह। तथेति। निमेषादयो नियन्तृपूर्व्वकावयवि-त्वात्सम्प्रतिपन्नवदित्यर्थः ॥ कास्ता नद्य इत्यपेक्षायामाह। गङ्गाद्या इति। अन्यथा प्रवर्त्तितुमुत्सहमानत्वं तत्तद्देवतानां चेतनत्वेन स्वातन्त्र्यम्। विमता नियन्तृपूर्व्विका नियन्तृप्रवृत्तित्वाद्भृत्यादिप्रवृत्तिवदिति चतुर्थपर्य्यायार्थः। नियतप्रवृत्तिमत्त्वन्तदेतदित्युच्यते। तच्चेत्यव्यभिचारितोक्तिः। विमतं विशिष्टज्ञानवद्दातृकं कर्म्म फलत्वात्सेवाफलवदित्यभिप्रेत्य पञ्चमं पर्य्यायमुत्थापयति। किञ्चेति। दाता प्रतिग्रहीता दानं देयं फले दास्यति किमीश्वरेणेत्याशङ्क्याह। तत्रेति। दात्रादीनामिहैव प्रत्यक्षो नाशो दृश्यते तेन तत्प्रयुक्तोऽदृष्टः पुरुषार्थो न कश्चिदस्तीत्यर्थः। अदृष्टं पुरुषार्थं प्रत्याह। अदृष्टस्त्विति। समागमः फलप्रतिलाभः स खल्वैहिको न भवति किन्तु पारलौकिकस्तया च नासाविहैव नष्टदात्रादिप्रयुक्तः सम्भवतीत्यर्थः ॥

एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो

तथापि मनुष्या ददतां दानफलेन संयोगं पश्यन्तः प्रमाणज्ञतया प्रशंसन्ति। तच्च कर्मफलेन संयोजयितरि कर्त्तुः कर्मफलविभागज्ञे प्रशास्तर्यसति न स्यात्। दानक्रियायाः प्रत्यक्षविनाशित्वात्। तस्मादस्ति दानकर्तॄणां फलेन संयोजयिता। अपूर्वमिति चेन्न। तत्सद्भावे प्रमाणानुपपत्तेः। प्रशास्तुरपीति चेन्न। आगमतात्पर्य्यस्य सिद्धत्वात्। अवोचाम ह्यागमस्य वस्तुपरत्वम्। किञ्चान्यदपूर्वकल्पनायाञ्चार्थापत्तेः। क्षयोऽन्यथैवोपपत्तेः। सेवाफलस्यास्य सेव्यात्प्राप्तिदर्शनात्। सेवायाश्च क्रियात्वात्तत्सामान्याच्च। यागदानहोमादीनां सेव्यादीश्वरादेः फलप्राप्तिरुपपद्यते। दृष्टक्रि-

---

तर्हि फलदातुरभावात् स्वार्थभ्रंशो हि मूर्खतेति न्यायाद्दातृ प्रशंसैव मा भूदित्याशङ्क्याह। तथापीति॥ फलसंयोगदृष्टौ हेतुमाह। प्रमाणज्ञतयेति। हिरण्यदा अमृतत्वं भजन्त इत्यादि प्रमाणं तथापि कथमीश्वरसिद्धिस्तत्राह। कर्त्तुरिति॥ तद्धि दातृप्रशंसनं विशिष्टे नियन्तरि असत्यनुपपन्नं तत्कल्पकमित्यर्थः। दानक्रियावशादेव तत्फलसिद्धौ कृतं नियन्त्रेति चेन्नेत्याह। दानेति। कर्म्मणः क्षणिकत्वात् फलस्य च कालान्तरभावित्वाच्च साधनत्वोपपत्तिरित्यर्थः। अनुमानार्थापत्तिभ्यां सिद्धमर्थमुपसंहरति। तस्मादिति॥ अपूर्वस्यैव फलदातृत्वात्कृतमीश्वरेणेति शङ्कते। पूर्व्वमिति चेदिति॥ स्वयमचेतनं चेतनानधिष्ठितं वा पूर्वं फलदातृ न कल्प्यमप्रामाणिकत्वादिति परिहरति॥ नेति॥ ईश्वरद्वेषी शङ्कते। प्रशास्तुरिति॥ सद्भावे प्रमाणानुपपत्तिरिति शेषं परिहरति। नागमेति॥ कथं कार्यपरस्यागमस्य वस्तुपरत्वमित्याशङ्क्याह। अवोचामेति। कर्मविधिर्हि फलदातृव्यतिरेकेण नोपपद्यते। न च कर्मांशुतरादिना-

मनुष्याः प्रशꣳसन्ति यजमानं देवा दर्व्वीं पितरोऽन्वायत्ताः ॥ ९ ॥

याधर्म्मसामर्थ्यमपरित्यज्यैव फलप्राप्तिकल्पनोपपत्तौ दृष्टक्रियाधर्म्मसामर्थ्यपरित्यागो न न्याय्यः। कल्पनाधिक्याच्च ईश्वरः कल्प्योऽपूर्व्वं वा। तत्र क्रियायाश्च स्वभावः सेव्यात्फलप्राप्तिर्दृष्टा। न त्वपूर्व्वान्न चापूर्वं दृष्टम्। तत्रापूर्वमदृष्टं कल्पयितव्यम्। तस्य च फलदातृत्वे सामर्थ्यम्। सामर्थ्ये च सति दानञ्चाभ्यधिकमिति। इह त्वीश्वरस्य सेव्यस्य सद्भावमात्रं कल्प्यं नतु फलदानसामर्थ्यं दातृत्वञ्च। सेव्यात्फलप्राप्तिदर्शनात्। अनुमानञ्च दर्शितं द्यावापृथिव्यौ विधृते तिष्ठत इत्यादि। तथा च यजमानं देवा ईश्वराः सन्तो जीवनार्थेऽनुगताश्चरुपुरोडाशाद्युपजीवनप्रयोजनेनान्यथापि

---

शिकालान्तरभाविफलानुकूलतदर्थापत्तिसिद्धेऽपूर्वे कथं मानाभिद्धिरित्राशङ्क्याह। किञ्चेति॥ न केवलं सद्भावे प्रमाणासत्त्वमेवापूर्वदूषणं किमन्यत्किञ्चिदस्तीति यावत्॥ स तदेव प्रकटयति। अपूर्वेति अपूर्वस्य कल्पनायां या अर्थापत्तिः शङ्क्यते तस्याः कल्पितमपूर्व्वमन्तरेणाप्युपपत्तेः क्षयः स्यादिति योजना। अन्यथाप्युपपत्तिं विवृणोति। सेवेति। यागादिफलमपीश्वरात्सम्भवतीति शेषः॥ कथमीश्वराधीना यागादिफलप्राप्तिस्तत्राह। सेवायाश्चेति। आदिपदेनेन्द्रादिदेवता गृह्यन्ते। विमता विशिष्टज्ञानवता दीयमानफलवती विशिष्टक्रियात्वात्सम्प्रतिपन्नवदिति भावः। इतश्चापूर्वकल्पना न युक्तेत्याह। दृष्टेति। दृष्टं सेवाया धर्मत्वेन सामर्थ्यं सेव्यात्फलप्रापकत्वं तदनुसृत्य दानादौ फलप्राप्तिसम्भवे तन्निरासेनापूर्वात्तत्कल्पना न न्याय्या॥ दृष्टानुसारिण्यां कल्पनायां तद्विरोधिक-

यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसह-

जीवितुमुत्सहन्तः कृपणां दीनां वृत्तिमाश्रित्य स्थितास्तत्र प्रशास्तुः प्रशासनात् स्यात्। तथा पितरोऽपि तदर्थं दर्वीं दर्विहोममन्वायत्ता अनुगता इत्यर्थः॥ समानं सर्वमन्यत्॥ ९॥

इतश्चास्ति तदक्षरं यस्मात्तदज्ञाने नियता संसारोपपत्तिर्भवितव्यं तु तेन यद्विज्ञानात्तद्विच्छेदो न्यायोपपत्तेः। ननु क्रियात एव तद्विच्छित्तिः स्यादिति चेन्न। यो वा

ल्पनायोगादित्यर्थः॥ अपूर्वस्य फलहेतुत्वे दोषान्तरमाह। कल्पनेति॥ तदाधिक्यं वक्तुं परामृशति। ईश्वर इति॥ नापूर्वोऽकल्प्यक्लृप्तत्वात्तत्र कल्पनाधिक्यमित्याशङ्क्याह। तेनेति॥ व्यवहारभूमिः सप्तम्यर्थः। भूमिकां कृत्वा कल्पनाधिक्यं स्फुटयति। तत्रेत्यादिना॥ अपूर्वस्यादृष्टत्वे सतीति यावत्। इति कल्पनाधिक्यमिति शेषः। न त्वन्यत्रापि तुल्यकल्पनेत्याशङ्क्याह। इह त्विति। स्वपक्षे धर्म्मिमात्रं कल्प्यं परपक्षे धर्मो धर्मश्चेत्याधिक्यं तस्मात्फलमत उपपत्तेरिति न्यायेन परस्यैव फलदातृतेति भावः। धर्म्मिणोऽपि प्रामाणिकत्वं कल्प्यत्वमित्यभिप्रेत्याह। अनुमानञ्चेति॥ ईश्वरास्तित्वे हेत्वन्तरमाह। तथा चेति। देवा यजमानमन्वायत्ता इति सम्बन्धः। जीवनार्थं जीवनं निमित्तीकृत्येति यावत्। देवानामीश्वराणामपि हव्यार्थित्वेन मनुष्याधीनाख्यहीनवृत्तिभाक्त्वं नियन्तृकल्प्यमित्यर्थः। यो न कस्यचित्प्रकृतित्वेन विकृतित्वेन वा वर्त्तते स दर्वीहोमः॥ ९॥

ईश्वरास्तित्वे हेत्वन्तरमाह। इतश्चेति। मोक्षहेतुज्ञानविषयत्वेनापि तदस्तीत्याह। भवितव्यमिति। यदज्ञानात्प्रवृत्तिर्या तज्ज्ञानात्सा निवर्त्तत इति न्यायः। कर्मवशादेव मोक्षसिद्धेस्तद्धेतुज्ञानविषयत्वेना-

स्राण्यन्तवदेवास्य तद्भवति यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः ॥ १० ॥

एतदक्षरं हे गार्ग्यविदित्वाऽविज्ञायास्मिँल्लोके जुहोति यजति तपस्तप्यते यद्यपि बहूनि वर्षसहस्राण्यन्तवदेवास्य तत्फलं भवति तत्फलभोगान्ते क्षीयन्त एवास्य कर्माणि। अपि च यद्विज्ञानात्कार्पण्यात्ययः संसारविच्छेदो यद्विज्ञानाभावाच्च कर्मकृत्कृपणः कृतफलस्यैवोपभोक्ता जननमरणप्रबन्धारूढः संसरति। तदस्त्यक्षरं प्रशासितृ तदेतदुच्यते यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणः पणक्रीत इव दासादिः। अथ य एतदक्षरं गार्गि विदित्वास्माल्लोकात् प्रैति स ब्राह्मणः ॥ १० ॥

क्षरं नाभ्युपेयमिति शङ्कते। नन्विति॥ उत्तरवाक्येनोत्तरमाह। नेत्यादिना। यस्मा ज्ञानादकृदनुष्ठितानि विशिष्टफलान्यपि सर्वाणि कर्माणि संसारमेव फलयन्ति तदज्ञातमक्षरं नास्तीत्ययुक्तं संसाराभावप्रसङ्गादितिभावः॥ अत्रास्ति वै हेत्वन्तरमाह। अपि चेति॥ पूर्ववाक्यं जीवदवस्थपुरुषविषयमिदं तु परलोकविषयमिति विशेषं मत्वोत्तरवाक्यमवतार्य व्याचष्टे। तदेतदित्यादिना॥ १० ॥

तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्ट्रश्रुतꣳ श्रोतृ ऽमतं मन्त्रविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञातृ तस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति ॥ ११ ॥

---

अग्नेर्दहनप्रकाशकत्ववत्स्वाभाविकमस्य प्रशास्तृत्वमचेतनस्यैवेत्य आह। तद्वा एतदक्षरं गार्ग्यदृष्टं न केनचिद्दृष्टमविषयत्वात्स्वयं तु द्रष्टृ दृशिस्वरूपत्वात्। तथाऽश्रुतं श्रोत्राद्यविषयत्वात्स्वयं श्रोतृ श्रुतिस्वरूपत्वात्। तथाऽमतं मनसोऽविषयत्वात् स्वयं मन्तृ मतिस्वरूपत्वात्। तथाऽविज्ञातं बुद्धेरविषयत्वात् स्वयं विज्ञातृ विज्ञानस्वरूपत्वात्। किञ्चन अन्यदतोऽस्मादक्षरादस्ति नास्ति किञ्चिद्द्रष्टृ दर्शनक्रियाकर्तृ एतदेवाक्षरं दर्शनक्रियाकर्तृ सर्व्वत्र। तथा नान्यदतोऽस्ति श्रोतृ तदेवाक्षरं श्रोतृ सर्व्वत्र। नान्यदतोऽस्ति मन्तृ तदेवाक्षरं मन्तृ सर्व्वत्र सर्व्वमनोद्वारेण। नान्यदतोऽस्ति विज्ञातृ विज्ञानक्रियाकर्तृ। तदेवाक्षरं सर्वबुद्धिद्वारेण विज्ञानक्रियाकर्तृ। नाचेतनं प्रधानमन्यद्वा

---

प्रधानवादिनः शङ्कामनूद्योत्तरवाक्येन निराकरोति ॥ अग्नेरित्यादिना ॥ इतश्चाक्षरस्य नाचेतनत्वमित्याह। किञ्चेति ॥ नास्तीत्यन्वयप्रदर्शनं अतोऽन्यदिति विशेषणसिद्धमर्थमाह। एतदिति। अन्यद्वा पूर्वोक्तमव्याकृतादिप्रपञ्चयिष्यन्तं निगमनवाक्यमुदाहृत्य तस्य तात्पर्यमाह ॥ एतदस्मिन्निति। परा काष्ठा पर्यवसानं नास्मादुपरिष्टादधिष्ठानं किञ्चिदस्तीत्यर्थः। तस्यैव परमपुरुषार्थमाह। एषेति ॥ पुरुषान्नपरं किञ्चि

सा होवाच ब्राह्मणा भगवन्तस्तदेव बहु मन्येध्वं यदस्मान्नमस्कारेण मुच्येध्वं न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति ततो ह वाचक्नव्युपरराम ॥ १२ ॥ अष्टमं ब्राह्मणम् ॥ ८ ॥

---

एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति । यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरोऽशनायादिसंसारधर्मातीतो यस्मिन्नाकाश ओतश्च प्रोतश्चैषा परा काष्ठैषा परा गतिरेतत्परं ब्रह्म तत्पृथिव्यादेराकाशान्तस्य सत्यस्य सत्यम् ॥ ११ ॥

सा होवाच हे ब्राह्मणा भगवन्तः शृणुत मदीयं वचस्तदेव बहु मन्येध्वं मन्यध्वम् । किन्तद्यदस्माद्याज्ञवल्क्यान्नमस्कारेण मुच्येध्वं मुच्यध्वमस्मै नमस्कारं कृत्वा तदेव बहुमन्यध्वमित्यर्थः । जयस्त्वस्य मनसापि नाशंसनीयः किमुत कार्य्यतः । कस्मान्न वै युष्माकं मध्ये जातु कदाचिदपीमं

---

त्मा काष्ठा सा परागतिरिति हि श्रुत्यन्तरम् । ब्रह्मास्मादक्षरादन्यदस्तीति चेन्नेत्याह । एतदिति ॥ ननु चतुर्थे सत्यस्य सत्यं ब्रह्म व्याख्यातमक्षरन्तु नैवमिति चेत्तत्राह । एतत्पृथिव्यादेरिति ॥ ११ ॥

किन्तद्वचनं तदाह । तदेवेति ॥ बहुमानविषयभूतं वस्तु पृच्छति । किन्तदिति ॥ यदादौ मदीयं वचनं तदेव बहुमानयोग्यमित्याह । यदिति ॥ तद्व्याकरोति । अस्मादिति ॥ नमस्कारं कृत्वाऽस्मदनुज्ञां प्राप्येति शेषः । तदेवेति प्राथमिकवचनोक्तिः । किमिति त्वदीयं पूर्वं वचो बहु मन्यामहे जेतुं पुनरिममाशास्महे नेत्याह । जयस्त्विति । तत्र प्रश्नपूर्वकं पूर्वोक्तमेव बहुमा–

याज्ञवल्क्यं ब्रह्मोद्यं प्रति जेता। प्रश्नौ चेन्मह्यं वक्ष्यति न वै जेता भवितेति पूर्व्वमेव मया प्रतिज्ञातमद्यापि ममायमेव निश्चयो ब्रह्मोद्यं प्रत्येतस्मात्त्वो न कश्चिद्विद्यत इति। ततो ह वाचक्नव्युपरराम ॥ १२ ॥

अत्रान्तर्यामिब्राह्मण एतदुक्तम्। यं पृथिवी न वेद यं सर्व्वाणि भूतानि न विदुरिति च। यमन्तर्यामिणं न विदुर्ये च न विदुर्यच्च तदक्षरं दर्शनादिक्रियाकर्तृत्वेन सर्वेषां चेतनाधातुरित्युक्तम्। कस्तेषां विशेषः किं वा सामान्यमिति। तत्र केचिदाचक्षते। परस्य महासमुद्रस्थानीयस्य ब्रह्मणो ऽक्षरस्याप्रचलितस्वरूपस्येषत्प्रचलितावस्थान्तर्यामी अत्यन्तप्रचलितावस्थाचेत्रज्ञो यस्तं न वेदान्तर्यामिणम्।

---

नविषयभूतं वाक्यमवतार्य्य व्याचष्टे। कस्मादित्यादिना॥ पराजिताया गार्ग्या वचो नोपादेयमित्याशङ्क्याह। प्रश्नौ चेदिति। ततश्च प्रश्ननिर्णयाद्याज्ञवल्क्यस्याप्रकम्प्यत्वं प्रतिपाद्य ब्राह्मणानृप्रति हितम्प्रोक्तेत्यर्थः ॥१२॥

अन्तर्यामी चेत्रज्ञोऽक्षरमित्येतेषामवान्तरविशेषप्रदर्शनार्थं प्रकृतत्वं दर्शयति। अन्तर्यामीति॥ तत्रान्तर्यामिणः प्रकृतत्वं प्रकटयति। यमिति॥ चेत्रज्ञस्य प्रकृतत्वं स्फुटयति। ये चेति॥ अक्षरस्य प्रस्तुतत्वं प्रत्याययति। यच्चेति। सर्वेषां विषयाणां दर्शनश्रवणादिक्रियाकर्तृत्वेन चेतनाधातुरिति यत्तदक्षरमुक्तमित्यन्वयः॥ तेषु विचारमवतारयति। कस्त्विति॥ तस्मिन्विचारे स्वयूथ्यमतमुत्थापयति। तत्रेति॥ चेत्रज्ञस्याप्रस्तुतत्वशङ्कां वारयति। तमिति॥ यथा परस्यात्मनोऽन्तर्यामी जीवश्चेत्यवस्थे द्वे कल्प्येते तथा तस्यैवान्याः पञ्चावस्थाः पिण्डो जातिर्विराट् सूत्रं दैवमित्येवं लक्षणमहाभूत संस्थानभेदेन कल्पयन्तीत्याह। तथेति। उक्तरीत्या कल्पनायां पिण्डो जातिर्विराट् सूत्रं दैवमव्याकृतं

तथान्याः पञ्चावस्थाः परिकल्पयन्ति । तथाष्टावस्था ब्रह्मणो भवन्तीति । वदन्त्यन्येऽक्षरस्य शक्तय एता इति । वदन्त्यनन्तशक्तिमक्षरमिति च । अन्येऽक्षरस्य विकारा इति वदन्ति । अवस्थाशक्ती तावन्नोपपद्येते । अक्षरस्याशनायादिसंसारधर्म्मातीतत्वश्रुतेः । न ह्यशनायादिधर्म्मवदवस्थावत्त्वं चैकस्य न युगपदुपपद्यते । तथा शक्तिमत्त्वञ्च । विकारावयवत्वे च दोषाः प्रदर्शिताश्चतुर्थे । तस्मादेता असत्याः सर्व्वाः कल्पनाः । कस्तर्हि भेद एषामुपाधिकृत इति ब्रूमो न स्वत एषां भेदोऽभेदो वा सैन्धवघनवत्प्रज्ञानघनैकरसस्वाभाव्यात् । अपूर्व्वमनपरमनन्तरमवाह्यमयमात्मा ब्रह्मेति च श्रुतेः ॥

---

साक्षी चेतनश्चेत्यष्टावस्था ब्रह्मणो भवन्तीति वदन्तः कल्पयन्तीति सम्बन्धः ॥ अवस्थामुक्त्वा शक्तिपक्षमाह । अन्य इति । तु शब्देनावयवपक्षन्दर्शयन्विकारपक्षं निक्षिपति । अयन्त्विति ॥ तत्र पक्षद्वयं प्रत्याह । अवस्थेति । अन्तर्य्यामिप्रभृतीनामिति शेषः ॥ तस्य सांसारिकधर्म्मातीतत्वश्रुतावपि कथमवस्थावत्त्वं शक्तिमत्त्वं वा न सिद्ध्यतीत्याशङ्क्याह । न हीति ॥ अवशिष्टपक्षद्वयनिराकरणं प्रागेव प्रवृत्तं स्मारयति । विकारेति ॥ परपक्षनिराकरणमुपसंहरति । तस्मादिति ॥ परकीयकल्पनासम्भवे पृच्छति । कस्तर्हीति ॥ उत्तरमाह । उपाधीति ॥ आत्मनि स्वतो विशेषाभावे हेतुमाह । सैन्धवेति ॥ तत्रैव हेत्वन्तरमाह । अपूर्व्वमिति । वाह्यं कार्य्यमाभ्यन्तरं कारणं ताभ्यां कल्पिताभ्यां सहाधिष्ठानत्वेति न सत्तास्फूर्त्तिप्रदत्तया वर्त्तते ब्रह्म स्वभावतस्तु जन्मादिसर्व्वविक्रियाशून्यं कूटस्थं तद्वदित्यपूर्व्वश्रुतेरर्थः ॥

स वाह्याभ्यन्तरो ह्यज इति चाथर्वणे। तस्मान्निरुपाधिकस्यात्मनो निरुपाख्यत्वान्निर्विशेषत्वादेकत्वाच्च नेति नेतीति व्यपदेशो भवत्यविद्याकामकर्मविशिष्टकार्य्यकरणोपाधिरात्मा संसारी जीव उच्यते। नित्यनिरतिशयज्ञानशक्त्युपाधिरात्मान्तर्यामीश्वर उच्यते। स एव निरुपाधिः केवलः शुद्धः। स्वेन स्वभावेनाक्षरं पर उच्यते। तथा हिरण्यगर्भाव्याकृतदेवता जातिपिण्डमनुष्यतिर्य्यक्प्रेतादिकार्य्यकरणोपाधिभिर्विशिष्टस्तदाख्यस्तद्रूपो भवति। तथा तदेजति तन्नैजतीति व्याख्यातम्। तथैष त आत्मैष सर्वभूतान्तरात्मैष सर्वेषु भूतेषु गूढः। तत्त्वमस्यहमेवेदं सर्वमात्मैवेदं सर्वं नान्योऽतोऽस्ति द्रष्टेत्यादिश्रुतयो न

---

आत्मनः स्वतो विशेषानवगमे फलितमाह। तस्मादिति। निरुपाख्यत्वं वाचां मनसाश्चागोचरत्वम्। तत्र निर्विशेषत्वमेकत्वञ्च हेतुर्निरुपाधिकस्येति निर्विशेषत्वं साधयितुमुक्तं तत्र च वीप्सावाक्यं प्रमाणकृतम्॥ कथं पुनरेवैतस्य वस्तुनः संसारित्वं तदाह। अविद्येति। तैर्विशिष्टं यत्कार्य्यकरणं तेनोपाधिनोपहितः परमात्मा जीवःसंसारीति च व्यपदेशभाग्भवतीत्यर्थः॥ तथापि कथं तस्यान्तर्यामित्वं तदाह। नित्येति॥ नित्यं निरतिशयं सर्वत्राप्रतिबन्धज्ञानं तस्मिन्सत्त्वपरिणामे सत्त्वप्रधाना मायाशक्तिरुपाधिस्तेन विशिष्टः सन्नात्मेश्वरोऽन्तर्यामीति चोच्यत इत्यर्थः। कथं तर्हि तस्मिन्नक्षरशब्दप्रवृत्तिस्तत्राह। स एवेति। निरुपाधित्वं शुद्धत्वे हेतुः केवलत्वमद्वयत्वे॥ तथापि कथं तत्र हिरण्यगर्भादिशब्दप्रत्ययावित्याशङ्क्याह। तथेति॥ यथैकस्मिन्नेव परस्मिन्नात्मनि कल्पितोपाधिप्रयुक्तं नानात्वं तथा तदेजति तन्नैजतीत्यादि वाक्यमाश्रित्य प्रागेवोक्तमित्याह। तथेति॥ कल्पनया परस्य नानात्वम्॥ वस्तुतस्त्वेकरस्यमित्यत्र श्रुतीरुदाहरति। तथेत्यादिना॥ अवस्थाशक्तिविकारा-

अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा याज्ञवल्क्येति स हैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच कत्येव

विरुध्यन्ते। कल्पनान्तरेष्वेताः श्रुतयो न गच्छन्ति। तस्मादुपाधिभेदेनैवैषां भेदो नान्यथैकमेवाद्वितीयमित्यवधारणात् सर्वोपनिषत्सु॥ इति बृहदारण्यकभाष्ये पञ्चमाध्यायस्याष्टमं ब्राह्मणम्॥

अथ हैनं विदग्धः शाकल्यः पप्रच्छ पृथिव्यादीनां सूक्ष्मतारतम्यक्रमेण पूर्वस्य पूर्वस्योत्तरस्मिन्नोतप्रोतभावं कथयन् सर्वान्तरं ब्रह्म प्रकाशितवान्। तस्य च ब्रह्मणोऽव्याकृतविषये सूत्रभेदेषु नियन्तृत्वमुक्तम्। व्याकृतविषये व्यक्ततरं लिङ्गमिति तस्यैव ब्रह्मणः साक्षादपरोक्षत्वे नियन्तव्यदेवताभेदसङ्कोचद्वारेणाधिगन्तव्ये इति तदर्थं शाकल्य-

वचनपक्षेऽपि यथोक्तश्रुतीनामुपपत्तिमाशङ्क्याह। कल्पनान्तरेष्विति॥ औपाधिकोऽन्तर्याम्यादिभेदो न स्वाभाविक इत्युपसंहरति। तस्मादिति॥ स्वतो वस्तुनि नास्ति भेदः किन्त्वैकरस्यमेवेत्यत्र हेतुमाह। एकमिति पञ्चमस्याष्टमं ब्राह्मणम्॥

ब्राह्मणान्तरमुत्थापयति। अथेति॥ गार्गिप्रश्ने निर्णीते तया ब्रह्मवदनं प्रत्येतत्तुल्यो नास्तीति सर्वान् प्रति कथनानन्तरमथशब्दार्थः॥ सङ्गतिं वक्तुं वृत्तं कीर्त्तयति। पृथिव्यादीनामिति। यत्साक्षादित्यादि प्रस्तुत्य सर्वान्तरत्वनिरूपणद्वारा साक्षित्वादिकमार्थिकं ब्राह्मणत्रये निरितमित्यर्थः॥ अन्तर्यामिब्राह्मणे पुरतो निर्द्दिष्टमर्थमनुद्रवति। तस्य

देवा याज्ञवल्क्येति त्रयस्त्रिंशदित्योमिति हो-
वाच कत्येव देवा याज्ञवल्क्येति षडित्योमिति
होवाच कत्येव देवा याज्ञवल्क्येति त्रय इत्योमिति
होवाच कत्येव देवा याज्ञवल्क्येति द्वावित्यो-
मिति होवाच कत्येव देवा याज्ञवल्क्येत्यध्यर्ध
इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्येक

---

ब्राह्मणमारभ्यते । विदग्ध इति नामतः शकलस्यापत्यं
शाकल्यः पप्रच्छ । कतिसङ्ख्याका देवा हे याज्ञवल्क्येति । स
याज्ञवल्क्यो ह किल एतयैव वक्ष्यमाणया निविदा प्रतिपेदे
सङ्ख्यायां सङ्ख्यां पृष्टवान् शाकल्यो यावन्तो यावत्सङ्ख्याका
देवा वैश्वदेवस्य शस्त्रस्य निविदि निविन्नामदेवतासङ्ख्यावा-
चकानि मन्त्रपदानि कानिचिद्वैश्वदेवे शस्त्रे शस्यन्ते । तानि
निवित्सञ्ज्ञकानि तस्यां निविदि यावन्तो देवाः श्रूयन्ते
तावन्तो देवा इति । का पुनः सा निविदिति । तानि नि-
वित्पदानि प्रदर्श्यन्ते । त्रयश्च त्री च शता त्रयश्च देवा दे-
वानां त्रीणि च शतानि पुनरप्येवं त्रयश्च त्री च सहस्राणे-

---

श्चेति । नामरूपाभ्यां व्याकृतो विषयो द्वैतप्रपञ्चस्तत्र सूत्रस्य भेदा ये
पृथिव्यादयस्तेषु नियम्येषु नियन्तृत्वं तस्योक्तमिति योजना ॥ किमिति
व्याकृतविषये नियन्तृत्वमुक्तमिति तत्राह । व्याकृतेति ॥ तत्र हि परत-
न्त्रस्य पृथिव्यादेर्ग्रहणं नियम्यत्वे स्पष्टतरलिङ्गमिति तत्रैव नियन्तृत्वमुक्त-
मित्यर्थः ॥ वृत्तमनूद्योत्तरस्य ब्राह्मणस्य तात्पर्यमाह । तस्यैवेति ॥
नियन्तव्यानां देवताभेदानां प्राणान्तः सङ्कोचो विकासश्चानन्त्यपर्यन्त-

इत्योमिति होवाच कतमे ते त्र॒यश्च त्र॒ी च शता त्र॒यश्च त्र॒ी च सहस्रेति ॥ १ ॥

स होवाच महिमान एवैषामेते त्र॒यस्त्रिꣳशत्त्वेव देवा इति कतमे ते त्र॒यस्त्रिꣳशदित्यष्टौ

.................................................................

तावन्तो देवा इति। शाकल्योऽप्योमिति होवाच। एवमेषां मध्यमा सङ्ख्या सम्यक्तया ज्ञाता। पुनस्तेषामेव देवानां सङ्कोचविषयां सङ्ख्यां पृच्छति कत्येव देवा याज्ञवल्क्येति। त्रयस्त्रिंशत् षट् त्रयो द्वावध्यर्द्ध एक इति। देवतासङ्कोचविकाशविषयां सङ्ख्यां पृष्ट्वा पुनः सङ्ख्येयस्वरूपं पृच्छति कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥ १ ॥

स होवाचेतरो महिमानो विभूतय एषां त्रयस्त्रिंशतां देवानामेते त्रयश्च त्री च शतेत्यादयः। परमार्थतस्तु त्रय-

---

स्तद्द्वारा प्रकृतस्यैव ब्रह्मणः साक्षात्त्वापरोक्षत्वे स एष नेति नेत्यात्मेत्यादिनाधिगन्तव्य इति कृत्वा प्रथमं देवतासङ्कोचविकाशोक्तिरनन्तरं वस्तुनिर्द्देश इत्येतदर्थमेतद्ब्राह्मणमित्यर्थः ॥ ब्राह्मणारम्भमेवमुक्त्वा तदक्षराणि व्याकरोति। अथेत्यादिना ॥

निविदि श्रूयन्ते तावन्तो देवा इत्युत्तरत्र सम्बन्धः। केयं निविदिति पृच्छति ॥ निविन्नामेति ॥ उत्तरमाह। देवतेति ॥ पदार्थमुक्त्वा वाक्यार्थं कथयति। तस्यानिति ॥ यद्यपि भाष्ये निविद्व्याख्याता तथापि प्रश्नद्वारा स्तुत्या तां व्याख्याति। का पुनरित्यादिना ॥ अनुज्ञावाक्यं व्याकरोति। एवमिति। मध्यमा सङ्ख्या षडधिकत्रिंशताधिकत्रिशताधिकत्रिसहस्रलक्षणा ॥ कत्येवेत्यादिप्रश्नानां पूर्वप्रश्नेन पौनरुक्त्यमाशङ्क्य परिहरति। पुनरित्यादिना ॥ कतमे ते

वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिᳪं शदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिᳪंशा इति ॥ २ ॥

कतमे वसव इत्यग्निश्च पृथिवी च वायुश्चान्तरिक्षश्चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एतेषु हीदं वसु सर्व्वᳪं हितमिति तस्माद्वसव इति ॥३॥कतमे रुद्रा इति दशेमे पुरुषे

---

स्त्रिंशत्त्वेव देवा इति। कतमे ते त्रयस्त्रिंशदित्युच्यन्ते। अष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति त्रयस्त्रिंशतां पूरणौ ॥ २ ॥

कतमे वसव इति। तेषां स्वरूपं प्रत्येकं पृच्छ्यते। अग्निश्च पृथिवी चेत्यग्न्याद्या नक्षत्रान्ता एते वसवः प्राणिनां कर्म्मफलाश्रयत्वेन कार्य्यकरणसङ्घातरूपेण तन्निवासत्वेन विपरिणमन्तो जगदिदं सर्वं वासयन्ति वसन्ति च ते यस्माद्वासयन्ति तस्माद्वसव इति ॥ ३ ॥ कतमे रुद्रा इति।

---

त्रयश्चेत्यादिप्रश्नस्य विषयभेदन्दर्शयति। देवतेति ॥ कति तर्हि देवा भवन्ति तत्राह। परमार्थतस्त्विति ॥ १ ॥ त्रयस्त्रिंशतो देवानां स्वरूपं प्रश्नद्वारा निर्द्धारयति। कतमे त इति ॥ २ ॥

उत्तरप्रश्नप्रपञ्चप्रतीकं गृहीत्वा तस्य तात्पर्य्यमाह। कतम इति तेषां वस्वादीनां प्रत्येकं वस्वादित्वे प्रतिगणमिन्द्रे प्रजापतौ चैकैकस्येत्यर्थः ॥ तेषां वसुत्वमेतेषु हीत्यादिवाक्यावष्टम्भेन स्पष्टयति। प्राणिनामिति। तेषां कर्म्मणस्तत्फलस्य चाश्रयत्वेन तेषामेव निवासत्वेन च शरीरेन्द्रियसमुदायाकारेण विपरिणमन्तोऽग्न्यादयो जगदेतदाश्रयन्ति स्वयञ्च तत्र वसन्ति तस्मादाक्तं तेषां वसुत्वमित्यर्थः ॥ वसुत्वं निगमयति। ते यस्मादिति ॥ ३ ॥ प्राणयब्दार्थमाह। कर्म्मेति ॥ एते यदा स्व-

प्राणा आत्मैकादशस्ते यदास्माच्छरीरान्मर्त्या-दुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा इति ॥ ४ ॥ कतम आदित्या इति द्वादश वै मासाः संवत्सरस्यैत आदित्या एते हीदꣳ सर्व्वमाददाना यन्ति ते यदिदꣳ सर्व्वमाददाना यन्ति तस्मादादित्या इति ॥ ५ ॥ कतम इन्द्रः कतमः प्रजापतिरिति स्तनयित्नुरेवेन्द्रो यज्ञः

---

दश इमे पुरुषे कर्म्मबुद्धीन्द्रियाणि प्राणा आत्मा मन एकादश एकादशानां पूरणस्त एते प्राणा यदा अस्माच्छरीरान्मर्त्यात्प्राणिनां कर्म्मफलोपभोगक्षये उत्क्रामन्ति अथ तदा रोदयन्ति तत्तत्र यस्माद्रोदयन्ति ते सम्बन्धिनस्तस्माद्रुद्रा इति ॥ ४ ॥ कतम आदित्या इति। द्वादश वै मासाः संवत्सरस्य कालस्यावयवाः प्रसिद्धा एते आदित्याः। कथमेते हि यस्मात्पुनः पुनः परिवर्त्तमानाः प्राणिनामायूंषि कर्म्मफलञ्चाददानाः गृह्णन्त उपाददतो यन्ति गच्छन्ति यस्मादेवमिदं सर्वमाददाना यन्ति तस्मादादित्या इति ॥ ५ ॥ कतम इन्द्रः कतमः प्रजापतिरिति

---

स्मादित्यादि वाक्यमनुसृत्य तेषां रुद्रत्वमुपपादयति। त एते प्राणा इति। मरणकालः सम्प्रत्ययः ॥ ४ ॥ तेषामादित्यत्वमप्रसिद्धमिति गच्छते। कथमिति ॥ ५ ॥ एते हीत्यादिवाक्येनोत्तरमाह। एते हीति ॥ प्रसिद्धं वज्रं व्यावर्त्तयति। वीर्यमिति। तदेव सङ्घातनिष्ठ-

प्रजापतिरिति कतमस्तनयित्नु रित्यशनिरिति कतमो यज्ञ इति पशव इति ॥ ६ ॥

कतमे षडित्यग्निश्च पृथिवी च वायुश्चान्तरिक्षञ्चादित्यश्च द्यौश्चैते षडेते हीदꣳ सर्व्वꣳ षडिति॥ ७ ॥ कतमे ते त्रयो देवा इतीम एव त्रयो लोका

---

स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति । कतमः स्तनयित्नुरित्यशनिरिति । अशनिर्वज्रं वीर्यं बलं यत्प्राणिनः प्रमापयन्ति स इन्द्रः । इन्द्रस्य हि तत्कर्म । कतमो यज्ञ इति पशव इति । यज्ञस्य हि साधनानि पशवो यज्ञस्यारूपत्वात्पशुसाधनाश्रयत्वाच्च पशवो यज्ञ इत्युच्यते ॥ ६ ॥

कतमे षडिति । त एवाग्न्यादयो वसुत्वेन पठिताः । चन्द्रमसं नक्षत्राणि च वर्जयित्वा षट् भवन्ति षट्सङ्ख्याविशिष्टाः । एते हि यस्मात् त्रयस्त्रिंशदादि यदुक्तमिदं सर्व्वमेत एव षड्भवन्ति सर्व्वो हि वस्वादिविस्तर एतेष्वेव षट्स्वन्तर्भवतीत्यर्थः ॥ ७ ॥ कतमे ते त्रयो देवा इति । इम

---

त्वेन स्फुटयति । वज्रमिति ॥ किन्तदिति चोत्तरमाह । यत्प्राणिन इति । प्रमापणं हिंसनम् ॥ कथं तस्येन्द्रत्वमुपचारादित्याह । इन्द्रस्य हीति । पशूनां यज्ञत्वमप्रसिद्धमित्याशङ्क्याह । यज्ञस्य हीति । कारणे कार्य्योपचारं साधयति । यज्ञस्येति । अमूर्त्तत्वात्साधनव्यतिरिक्तरूपाभावाद्यज्ञस्य पश्वाश्रयत्वाच्च पशवो यज्ञा इत्युच्यत इत्यर्थः ॥ ६ ॥

एते हीति प्रतीकमादाय व्याचष्टे । यस्मादिति । यत्त्रयस्त्रिंशदाद्युक्तं तत्सर्वमेत एव यस्मादेते षड्भवन्तीति योजना । अक्षरार्थमुक्त्वा वाक्यार्थमाह ॥ सर्व्वो हीति ॥ ७ ॥ प्रतिज्ञासमाप्ताविति शब्दस्तत्र

एष ह्येवैते सर्वे देवा इति कतमौ तौ द्वौ देवा-वित्यन्नश्चैव प्राणश्चेति कतमोऽध्यर्द्ध इति योऽयं पवत इति ॥ ८ ॥ तदाहुर्यदयमेक इवैव पवतेऽथ कथमध्यर्द्ध इति यदस्मिन्निदं सर्व्वमध्यार्ध्नोत्ते-

---

एव त्रयो लोका इति। पृथिवीमग्निश्चैकीकृत्यैको देवोऽन्तरिक्षं वायुश्चैकीकृत्य द्वितीयो दिवमादित्यश्चैकीकृत्य तृतीयस्त एव त्रयो देवा इति। एषु हि यस्माच्च त्रिषु देवेषु सर्वे देवा अन्तर्भवन्ति तेनैत एव देवास्त्रय इत्येष नैरुक्तानां केषांचित्पक्षः। कतमौ तौ द्वौ देवाविति। अन्नं चैव प्राणश्चैतौ द्वौ देवावनयोः सर्वेषामुक्तानामन्तर्भावः। कतमोऽध्यर्द्ध इति। योऽयं पवते वायुः॥ ८॥ तत्राहुश्चोदयन्ति। यदयं वायुरेक इवैव एक एव पवते। अथ कथमध्यर्द्ध इति। यदस्मिन्निदं सर्वमध्यार्ध्नोदस्मिन्वायौ सतीदं सर्वमधि आर्ध्नोदधि ऋद्धिं प्राप्नोति तेनाध्यर्द्ध इति। कतम

---

हेतुः॥ एष हीति॥ देवत्रयकृतां केषाञ्चिदेव पक्षो दर्शितोऽन्येषान्तु त्रयो लोका इत्यस्य यथा श्रुतोऽर्थ इत्याह॥ इत्येष इति॥ ८॥ एक-स्याध्यर्द्धत्वमाक्षिपति। तत्रेति। इवशब्दस्तु कथमित्यत्र सम्बध्यते॥ परिहरति। यदस्मिन्निति॥ प्राणस्य ब्रह्मत्वं साधयति। सर्वेति।· तेन महत्त्वेनेति यावत्॥ तस्य परोक्षत्वप्रतिपत्तौ प्रयत्नगौरवार्थं कथयति। त्यदितीति॥ उक्तमर्थं प्रतिपत्तिसौकर्य्यार्थं सङ्गृह्णाति। देवानामिति॥ एकत्वं प्राणे पर्य्यवसानं नानात्वमानन्त्यं षड्धिकत्रिंशताधिकत्रिसहस्रसङ्ख्याकानामेव देवानामत्रोक्तत्वात्कथं तदानन्त्यमित्याशङ्क्य शतसहस्रशब्दाभ्यामनन्तान्युक्तेवेत्याशयेनाह। अनन्तानामिति॥ एकस्मिन्प्राणे पर्य्य-

नाध्यर्द्ध इति कतम एको देव इति प्राण इति स ब्रह्मतयदित्याचक्षते ॥ ९ ॥

---

एको देव इति। प्राण इति। स प्राणो ब्रह्म सर्वदेवात्मकत्वान्महद्ब्रह्म त्यदित्याचक्षते त्यदिति तद्ब्रह्माचक्षते परोक्षाभिधायकेन शब्देन। देवानामेतदेकत्वं नानात्वञ्चानन्तानां देवानां निविसङ्ख्याविशिष्टेष्वन्तर्भावस्तेषामपि त्रयस्त्रिंशदादिषूत्तरोत्तरेषु यावदेकस्मिन्प्राणे प्राणस्यैव चैकस्य सर्व्वोऽनन्तसङ्ख्यातो विस्तर एवमेकश्चानन्तश्च अवान्तरसङ्ख्याविशिष्टश्च प्राण एव। तत्र च देवस्यैकस्य नामरूपकर्म्मगुणशक्तिभेदोऽधिकारभेदात् ॥ ९ ॥

---

वधानं यावद्भवति तावत्पर्य्यन्तमुत्तरेषु त्रयस्त्रिंशदादिषु तेषामप्यन्तर्भाव इत्याह। तेषामपीति ॥ प्राणस्य कस्मिन्नन्तर्भावस्तत्राह ॥ प्राणस्यैवेति ॥ सङ्गृहीतमर्थमुपसंहरति। एवमिति ॥ एकस्यानेकधाभावे किन्निमित्तमित्याशङ्क्याह। तत्रेति। उक्तरीत्या प्राणस्वरूपे स्थिते सतीति यावत्। देवस्यैकस्य प्रकृतस्य प्राणस्यैवेत्यर्थः ॥ प्राणिनां ज्ञाने कर्म्मणि चाधिकारस्य स्वामित्वस्य भेदोऽधिकारभेदस्तन्निमित्तत्वेन देवस्यानेकसंस्थानपरिणामसिद्धिः। प्राणिनो हि ज्ञानं कर्म्म चानुष्ठाय स्वतांशमग्न्यादिरूपमापद्यन्ते तद्युक्तो यथोक्तो भेद इत्यर्थः ॥ सङ्कोचविकाशाभ्यां प्राणस्वरूपोक्त्यनन्तरमक्षरप्राप्तिमिदानीमुच्यते। उपदिश्यते ध्यानार्थमिति शेषः ॥ ९ ॥

**पृथिव्येव यस्यायतनमग्निर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्व्वस्यात्मनः परायणꣳ**

इदानीं तस्यैव प्राणस्य ब्रह्मणः पुनरष्टधा भेदमुपदिश्यते। पृथिवी एव यस्य देवस्यायतनमाश्रयोऽग्निर्लोको यस्य। लोकयत्यनेनेति लोकः। पश्यतीत्यग्निना पश्यतीत्यर्थः। मनोज्योतिर्मनसा ज्योतिषा सङ्कल्पविकल्पादिकार्य्यं करोति यः सोऽयं मनोज्योतिः। पृथिवीशरीरोऽग्निदर्शनो मनसा सङ्कल्पयिता पृथिव्यभिमानी कार्य्यकरणसङ्घातवान् देव इत्यर्थः। स एवंविशिष्टश्चैतं पुरुषं यो विद्याद्विजानीयात्सर्वस्यात्मन आध्यात्मिकस्य कार्य्यकरणसङ्घातस्यात्मनः परमयनं पर आश्रयस्तं परायणम्। मातृजेन त्वङ्मांसरुधिररूपेण क्षेत्रस्थानीयेन बीजस्थानीयस्य पितृजस्यास्थिमज्जाशुक्ररूपस्य परमयनं करणात्मनश्च स वै वेदिता स्याद्य एतदेवं वेत्ति स वै वेदिता पण्डितः स्यादि-

---

अवयवशो वाक्यं योजयति। पृथिवीति॥ संपिण्डितवाक्यस्यार्थं कथयति। पृथिवीत्यादिना। वैशब्दोऽवधारणार्थः। तं परायणं य एव विजानीयात्स एव वेदिता स्यादिति सम्बन्धः॥ अथ केन रूपेण पृथिवीदेवस्य कार्य्यकरणसङ्घातं प्रत्याश्रयत्वं तदाह। मातृजेनेति। पृथिव्या मातृशब्दवाच्यत्वाद्य एव देवोऽहं पृथिव्यस्मीति मन्यते स एव शरीरारम्भकमातृजकोशत्रयाभिमानितया वर्त्तते। तथा च तस्य तेन रूपेण पितृजत्रितयं कार्य्यं लिङ्गञ्च करणं प्रत्याश्रयत्वं सम्भवतीत्यर्थः॥ पृथिवीदेवस्य परायणत्वमुपपाद्यानन्तरं वाक्यमुत्थाप्य व्याचष्टे। स वै वेदितेति॥ तदा मम किमायातमित्याशङ्क्याह। याज्ञवल्क्येति। स

स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य एवायꣳ शारीरः पुरुषः स एष वदैव शाकल्य तस्य का देवतेत्यमृतमिति होवाच ॥ १० ॥

---

त्यभिप्रायः । याज्ञवल्क्य त्वं तमजानन्नेव पण्डिताभिमानीत्यभिप्रायो यदि तद्विज्ञाने पाण्डित्यं लभ्यते वेद वा अहं तं पुरुषं सर्वस्यात्मनः परायणं यमात्थ यं कथयसि तमहं वेद तत्र शाकल्यस्य वचनञ्च द्रष्टव्यम् । यदि त्वं वेत्थ तं पुरुषं ब्रूहि किंविशेषणोऽसौ । शृणु यद्विशेषणः स एवायं शारीरः पार्थिवोंऽशः । शरीरे भवः शारीरो मातृजकोशत्रयरूप इत्यर्थः । स एष देवो यस्त्वया पृष्टो हे शाकल्य किन्त्वस्ति तत्र वक्तव्यं विशेषणान्तरं तद्वदैव पृच्छैवेत्यर्थः । हे शाकल्य स एव प्रचोदितोऽमर्षवशग आह तोत्रार्दित इव गजस्तस्य देवस्य शारीरस्य का देवता यस्मान्निष्पद्यते यः सा तस्य देवतेत्यस्मिन्प्रकरणे विवक्षितः । अमृत-

---

पुरुषो येन विशेषणेन विशिष्टस्तद्विशेषणमुच्यमानं शृणुष्वेत्युक्त्वा तदेवाह । य एवेति । शरीरं हि पञ्चभूतात्मकं तत्र पार्थिवांशेन जनकत्वेन स्थितः शारीर इति यावत् ॥ तस्य जीवत्वं वारयति । मातृजेति ॥ पृथिवीदेवस्य निर्णीतत्वशङ्कां वारयति । किन्त्विति ॥ याज्ञवल्क्यो वक्ता सन्प्रष्टारं शाकल्यं प्रति कथं वदैवेति कथयति तत्राह । पृच्छेति ॥ चोभितस्यामर्षवशगत्वे दृष्टान्तः । तोत्रेति ॥ प्राकरणिकं देवताशब्दार्थमाह ॥ यस्मादिति ॥ पुरुषो निष्पत्तिकर्त्ता पञ्चम्योच्यते लोहितनिष्पत्तिहेतुत्वमत्र

काम एव यस्यायतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्यात्। याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य एवायं काममयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति स्त्रिय इति होवाच ॥ ११ ॥ रूपा-

मिति होवाच अमृतमिति यो भुक्तस्यान्नस्य रसो मातृजस्य लोहितस्य निष्पत्तेर्हेतुस्तस्मादन्नरसाल्लोहितं निष्पद्यते स्त्रियाश्रितं ततश्च लोहितमयं शरीरं वीजाश्रयम्। समानमन्यत् ॥ १० ॥

काम एव यस्यायतनम्। स्त्रीव्यतिकराभिलाषः कामः कामशरीर इत्यर्थः। हृदयं लोको हृदयेन बुद्ध्या पश्यति। य एवायं काममयः पुरुषोऽध्यात्ममपि काममय एव तस्य का देवतेति स्त्रिय इति होवाच स्त्रीतो हि कामस्य

रसस्यानुभवेन साधयति। तस्माद्वीति। तस्य कार्य्यमाह। ततश्चेति। लोहितादद्वितीयपदार्थनिष्ठात्तत्कार्य्यं त्वङ्मांसरुधिररूपं वीजस्यास्थिमज्जाशुक्रात्मकस्याश्रयभूतं भवतीत्यर्थः॥ पर्य्यायसप्तकमाद्यपर्य्यायेण तुल्यार्थत्वान्न पृथग्व्याख्यानापेक्षमित्याह। समानमिति ॥ १० ॥

उत्तरपर्य्यायेषु येषां पदानामर्थभेदस्तेषां तत्कलनार्थं प्रतीकं गृह्णाति। काम इति॥ वाक्यार्थमाह। कामशरीर इत्यर्थ इति॥ स च हृदयदर्शनो मनसा संकल्पयितेति पूर्ववत्॥ तस्य विशेषणं दर्शयति। य एवेति॥ आध्यात्मिकस्य काममयस्य पुरुषस्य कारणं पृच्छति। तस्येति॥ तस्मात्तत्कारणत्वमनुभवेन व्यनक्ति। स्त्रीतो हीति॥ ११ ॥ रूपशरी-

ण्येव यस्यायतनं चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै वेदितास्यात्। याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य एवासावादित्ये पुरुषः स एष वदैव शाकल्य तस्य का देवतेति सत्यमिति होवाच ॥ १२ ॥ आकाश एव यस्यायतनꣳ श्रोत्रं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्यात्। याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य एवायꣳ श्रोत्रः प्रातिश्रुत्कः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति दिश इति होवाच ॥ १३ ॥

---

दीप्तिर्जायते ॥ ११ ॥ रूपाण्येव यस्यायतनम्। रूपाणि शुक्लकृष्णादीनि। य एवासावादित्ये पुरुषः सर्व्वेषां हि रूपाणां विशिष्टं कार्य्यमादित्ये पुरुषस्तस्य का देवतेति। सत्यमिति होवाच। सत्यमिति चक्षुरुच्यते चक्षुषाध्यात्मिकेन आदित्यस्या-

---

रस्य चक्षुर्दर्शनस्य मनसा सङ्कल्पयितुर्देवस्य कथमादित्ये पुरुषो विशेषणमित्याशङ्क्याह। सर्व्वेषां हीति। रूपमात्राभिमानिनो देवस्यादित्ये पुरुषो विशेषावच्छेदः। स च सर्व्वरूपप्रकाशकत्वात्सर्व्वैं रूपैः स्वप्रकाशनायारब्धः। तस्माद्युक्तं यथोक्तं विशेषणमित्यर्थः। कथं चक्षुषः सकाशादादित्यस्योत्पत्तिरित्याशङ्क्य चक्षोः सूर्य्यो अजायतेति श्रुतिमाश्रित्याह। चक्षुषो

तम एव यस्यायतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्यात्। याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य एवायं छायामयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति मृत्युरिति होवाच॥ १४ ॥ रूपाण्येव यस्यायतनं चक्षुर्लोको मनोज्योतिर्यो वै

---

धिदैवतस्य निष्पत्तिः॥ १२ ॥ आकाश एव यस्यायतनम्। य एवायं श्रोत्रे भवः श्रोत्रस्तत्रापि प्रतिश्रवणवेलायां विशेषतो भवतीति प्रातिश्रुत्कस्तस्य का देवतेति दिश इति होवाच दिग्भ्यो ह्यसावाध्यात्मिको निष्पद्यते॥ १३ ॥

तम एव यस्यायतनम्। तम इति शार्वराद्यन्धकारो गृह्यते। आध्यात्मं छायामयो ज्ञानमयः पुरुषस्तस्य का देवतेति मृत्युरिति होवाच। मृत्युरधिदैवतं तस्य निष्पत्तिकारणं॥ १४ ॥ रूपाण्येव यस्यायतनम्। पूर्वं साधारणानि रूपा-

---

हीति॥ १२ ॥ तत्रापीति श्रौतोक्तिः। प्रतिश्रवणं संवादः॥ प्रतिविषयं श्रवणं वा सर्व्वाणि श्रवणानि वा तद्दशायामिति यावत्॥ दिशस्तत्राधिदैवतमिति श्रुतिमाश्रित्याह। दिग्भ्यो हीति॥ १३ ॥

अधिदैवतं मृत्युरीश्वरो मृत्युनैवेदमावृतमासीदिति श्रुतेः। स च तस्याज्ञानमयस्याध्यात्मिकस्य पुरुषस्योत्पत्तिकारणमविवेकिप्रवृत्तेरीश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वेति हि पठन्ति तदाह। मृत्युरिति॥ १४ ॥ पुनरुक्तिं प्रत्याह। पूर्वमिति। आधारशब्दो भावप्रधानस्तथा च

तं पुरुषं विद्यात्सर्व्वं स्यात्मनः परायणꣳ स वै वेदिता स्यात्। याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य एवायमादर्शे पुरुषः स एष वदैव शाकल्य तस्य का देवतेत्यसुरिति होवाच ॥ १५ ॥ आप एव यस्यायतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्यात्। याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य एवायमप्सु पुरुषः स एष

---

एवुक्तानीह तु प्रकाशकानि विशिष्टानि रूपाणि गृह्यन्ते। रूपायतनस्य देवस्य विशेषायतनं प्रतिबिम्बाधारमादर्शादि असुरिति होवाच तस्य प्रतिबिम्बाख्यस्य रूपस्य निष्पत्तिरसोः प्राणात् ॥ १५ ॥ आप एव यस्यायतनम्। साधारणाः सर्व्वा आप आयतनं वापीतड़ागाद्याश्रया-स्वप्सुविशेषावस्थानम्। तस्य का देवतेति वरुण इति। वरु-

---

प्रतिबिम्बस्याधारत्वं यत्र तदित्युक्तं भवति ॥ आदिशब्देन स्वच्छस्वभावखड्गादि गृह्यते। प्राणेन हि निरुध्यमाणे दर्पणादौ प्रतिबिम्बाभिव्यक्तियोग्यो रूपविशेषो निष्पद्यते। ततो युक्तं प्राणस्य प्रतिबिम्बकारणत्वमित्यभिप्रेत्याह। तस्येति ॥ १५ ॥ आप एव यस्यायतनम्। य एवायमप्सु पुरुष इत्युभयत्र सामान्यविशेषभावो न प्रतिभातीति शङ्कमानं प्रत्याह। साधारणा इति ॥ कथं पुनर्वापीकूपविशेषायतनस्य वरुणो देवता ॥ न हि देवतात्मनो वरुणस्य तदधिष्ठातुस्तत्कारणत्वं त-

वदैव शाकल्य तस्य का देवतेति वरुण इति होवाच ॥ १६ ॥ रेत एव यस्यायतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्यात्। याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य एवायं पुत्रमयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति प्रजापतिरिति होवाच ॥ १७ ॥

---

णात्सङ्घातकर्त्र्योऽध्यात्ममाप एव वाप्याद्यपां निष्पत्तिकारणम् ॥ १६ ॥ रेत एव यस्यायतनम्। य एवायं पुत्रमयो विशेषायतनं रेत आयतनस्य पुत्रमय इति चास्थिमज्जाशुक्राणि पितुर्जातानि। तस्य का देवतेति। प्रजापतिरिति होवाच। प्रजापतिः पितोच्यते। पितृतो हि पुत्रस्योत्पत्तिः ॥ १७ ॥

---

त्वाह। वरुणादिति ॥ आपो वापीकूपाद्याः पीताः सत्योऽध्यात्मं शरीरे मूत्रादिसङ्घातं कुर्व्वन्ति। ताश्च वरुणाद्भवन्ति। वरुणशब्देनाप एव रश्मिद्वारा भूमिं पतन्त्योऽभिधीयन्ते। तथा च ता एव वरुणात्मका वाप्याद्यपां पीयमानानामुत्पत्तिकारणमिति उक्तं वरुणस्य वापीतड़ागाद्यायतनं पुरुषं प्रति कारणत्वमित्यर्थः ॥ १६ ॥ वाक्यद्वयं गृहीत्वा तात्पर्य्यमाह। विशेषेति ॥ पुत्रमयशब्दार्थं व्याचष्टे। पुत्रमय इति ॥ १७ ॥

शाकल्येति होवाच याज्ञवल्क्यस्त्वाꣳ स्विदिमे ब्राह्मणा अङ्गारावक्षयणमक्रता इति ३ ॥ १८ ॥ याज्ञवल्क्येति होवाच शाकल्यो यदिदं कुरुपञ्चालानां ब्राह्मणानत्यवादीः किं ब्रह्म विद्वानिति

अष्टधा देवलोकपुरुषभेदेन त्रिधा त्रिधात्मानं विभज्यावस्थित एकैको देवः प्राण एवोपासनार्थं व्यपदिष्टः। अधुना दिग्विभागेन पञ्चधा प्रविभक्तस्यात्मन्युपसंहारार्थमाह। तूष्णीभूतं शाकल्यं याज्ञवल्क्यो ग्रहेणेवावेशयन्नाह। शाकल्येति होवाच याज्ञवल्क्यस्त्वां स्विदिति वितर्के इमे नूनं ब्राह्मणा अङ्गारावक्षयणमङ्गारा अवक्षीयन्ते यस्मिन्सन्देशादौ तदङ्गावक्षयणं तन्नूनं त्वामक्रत कृतवन्तो ब्राह्मणास्त्वन्तु तन्न बुध्यसे आत्मानं मया दह्यमानमित्यभिप्रायः ॥ १८ ॥ याज्ञवल्क्येति होवाच शाकल्यः। यदिदं कुरुपाञ्चालानां ब्राह्मणानत्यवादीरत्युक्तवानसि स्वयं भीतास्त्वामङ्गारावक्षयणं कृतवन्त इति। किं ब्रह्म विद्वान्स-

शाकल्येति होवाचेत्यादिग्रन्थस्य तात्पर्यं वक्तुं वृत्तं कीर्त्तयति। अष्टधेति। लोकः सामान्याकारः पुरुषो विशेषावच्छेदो देवः। तत्कारणमनेन प्रकारेण त्रिधा त्रिधात्मानं प्रतिपद्य स्थितो य एकैको देवस्तदुक्तः स प्राण एव सूत्रात्मा तद्भेदत्वात् पूर्वोक्तस्य सर्वस्य स चोपासनार्थमष्टधोपदिष्टोऽधस्तादित्यर्थः॥ उत्तरस्य तात्पर्यं दर्शयति। अधुनेति। प्रविभक्तस्य जगतः सर्वस्येति शेषः। आत्मशब्दो हृदयविशेषः॥ याज्ञवल्क्यस्य शाकल्ये प्रष्टव्यं बुद्धिपूर्वकारित्वापादकत्वं दर्शयति। ग्रहेणेति। सर्वेषामेव ब्राह्मणानां प्रायेण हन्तव्यत्वेन सम्मतो भवानिति

दिशो वेद सदेवाःसप्रतिष्ठा इति यद्दिशो वेत्थ सदेवाः सप्रतिष्ठाः ॥ १९ ॥

किं देवतोऽस्यां प्राच्यां दिश्यसीत्यादित्यदेवत

---

न्नेवमधिक्षिपसि ब्राह्मणान्। याज्ञवल्क्य आह ब्रह्मविज्ञानं तावदिदं मम किं तद्दिशो वेद दिग्विषयं विज्ञानं जाने तच्च न केवलं दिश एव सदेवा देवैः सह दिगधिष्ठातृभिः। किञ्च सप्रतिष्ठाः प्रतिष्ठाभिश्च सह। इतर आह। यद्यदि दिशो वेत्थ सदेवाः सप्रतिष्ठा इति। सफलं यदि विज्ञानं त्वया प्रतिज्ञातम् ॥ १९ ॥

किं देवतः का देवता अस्य तव दिग्भूतस्य। असौ हि याज्ञवल्क्यो हृदयात्मानं दिक्षु पञ्चधा विभक्तं दिगात्मभूतं तद्द्वारेण सर्वं जगदात्मत्वेनोपगम्याहमस्मि दिगात्मेति व्यवस्थितः पूर्वाभिमुखः सप्रतिष्ठावचनाद्यथा याज्ञवल्क्यस्य प्रतिज्ञा तथैव पृच्छति। किं देवतस्त्वमस्यां

---

मुनेरभिसंहितम् ॥ १८ ॥ शाकल्यस्तु कालचोदितत्वादनुरोधिनीमन्यथा प्रतिपत्तिमेवादाय चोदयतीत्याह। यदिदमिति। दिग्विषयं विज्ञानं जाने तत्समास्तीत्यर्थः ॥ तच्च विज्ञानं केवलं दिङ्मात्रस्य न भवति किन्तु देवैः सह प्रतिष्ठाभिश्च सहिता दिशो वेदेत्याह। तच्चेति ॥ १९॥ अवतारितस्य वाक्यस्यार्थं सङ्क्षिपति। सफलमिति ॥ प्राच्यां दिशि का देवतेति वक्तव्ये कथमन्यथा पृच्छ्यते तत्राह। असौ हीति। आत्मानमात्मीयमिति यावत्। यथोक्तं हृदयमात्मत्वेनोपगम्येति सम्बन्धः ॥ तथापि प्रथमं प्राचीं दिशमधिकृत्य प्रश्ने को हेतुरिति चेत्तत्राह। पूर्वाभिमुख इति। यद्यपि दिगात्माहमस्मीति स्थितस्तथापि कथं प्रश्नो

इति स आदित्यः कस्मिन्प्रतितिष्ठत इति चक्षु
षीति कस्मिन्नु चक्षुः प्रतिष्ठितमिति रूपेष्विति

---

दिग्यसीति हि सर्वत्र वेदे यां यां देवतामुपास्त इहैव तद्भूतस्तां तां प्रतिपद्यत इति। तथा च वक्ष्यति। देवो भूत्वा देवानप्येतीत्यस्यां प्राच्यां का देवता दिगात्मनस्तवाधिष्ठात्री कया देवतया त्वं प्राचीदिग्रूपेण सम्पन्न इत्यर्थः। इतर आह आदित्यदेवत इति। प्राच्यां दिशि ममादित्यो देवता सोऽहमादित्यदेवतः। सदेवा इत्येतदुक्तम्। सप्रतिष्ठा इति तु वक्तव्यमित्याह। स आदित्यः कस्मिन्प्रतिष्ठित इति। चक्षुषीति। अध्यात्मतश्चक्षुष आदित्यो निष्पन्न इति हि मन्त्रब्राह्मणवादाः। चन्द्रमा मनसो जातश्चक्षुषः सूर्य्यं इत्यादयः। कार्य्यं हि कारणे प्रतिष्ठितं भवति। कस्मिन्नु चक्षुः प्रतिष्ठितमिति। रूपेष्विति रूपग्र-

---

जगदात्मत्वेनोपगम्य तिष्ठतीत्यवगम्यते तत्राह। सप्रतिष्ठेति। सप्रतिष्ठा दिशो वेदेति वचनात्पूर्वमपि हृदयद्वारा जगदात्मत्वेनोपगम्य स्थितो मुनिरिति प्रतिभातीत्यर्थः॥ प्रतिज्ञानुसारित्वाच्चायं प्रश्नो युक्तिमानित्याह। यथेति॥ अहमस्मि दिगात्मेति प्रतिज्ञानुसारिण्यपि प्रश्ने देहपातोत्तरभावी देवताभावः पृच्छ्यते सति देहे ध्यातुस्तद्भावयोगादित्याशङ्क्याह। सर्वत्र हीति। इति न भाविदेवताभावः प्रश्नगोचर इति शेषः॥ उक्तेऽर्थे वाक्यशेषमनुकूलयति। तथा चेति॥ प्रश्नार्थमुपसंहरति। अस्यामिति॥ आदित्यस्य चक्षुषि प्रतिष्ठितत्वं प्रकटयितुं कार्य्यकारणभावं तयोरादर्शयति। अध्यात्मतश्चक्षुष इति। चक्षोः सूर्य्योऽजायतेत्यादयोमन्त्रब्रा-

चक्षुषा हि रूपाणि पश्यति कस्मिन्नु रूपाणि प्रति ष्ठितानीति भवन्तीत्येवमेवैतद्याज्ञवल्क्य ॥२०॥

---

हणाय हि रूपात्मकं चक्षुः रूपेण प्रयुक्तम्। यैर्हि रूपैः प्रयुक्तं तैरात्मग्रहणायारब्धं चक्षुस्तस्मात्सादित्यं चक्षुः। सह प्राच्या दिशा सह तत्स्थैः सर्वैं रूपेषु प्रतिष्ठितम्। चक्षुषा सह प्राची दिक्सर्वा रूपभूतानि च। कस्मिन् रूपाणि प्रतिष्ठानीति हृदय इति होवाच। हृदयारब्धानि रूपाणि रूपाकारेण हि हृदयं परिणतम्। यस्मात् हृदयेन हि रूपाणि सर्वो लोको जानाति। हृदयमिति। बुद्धि-मनसी एकीकृत्य निर्देशः। तस्माद्धृदये ह्येव रूपाणि प्रति-ष्ठितानि हृदयेन हि स्मरणं भवति। रूपाणां वासना-त्मनां हृदये रूपाणि प्रतिष्ठितानीत्यर्थः। एवमेवैतद्या-ज्ञवल्क्य ॥ २० ॥

---

दास्तदनुसारिणश्च ब्राह्मणवादाः ॥ भवतु कार्यकारणभावस्तथापि कथं चक्षुष्यादित्यस्य प्रतिष्ठितत्वं तत्राह ॥ कार्यं हीति ॥ कथं चक्षुषो-ऽरूपेषु प्रतिष्ठितत्वं तत्राह। रूपग्रहणायेति ॥ तथापि कथं यथोक्त-माधाराधेयत्वमत आह। यैर्हीति ॥ चक्षुषो रूपाधारत्वे फलितमाह। तस्मादिति ॥ उपसंहृतमर्थं संगृह्णाति। चक्षुषेति ॥ हृदयारब्धत्वं रूपाणां स्फुटयति। रूपाकारेणेति ॥ हृदये रूपाणां प्रतिष्ठितत्वे हेत्वन्तरमाह। यस्मादिति ॥ हृदयशब्दस्य मांसखण्डविषयत्वं व्याव-र्त्तयति। हृदयमिति ॥ कथं पुनर्बहिर्मुखानि रूपाणि अन्तर्हृदये स्थातुं पारयन्ति तत्राह। हृदयेण हीति ॥ तथापि कथं तेषां हृद-यप्रतिष्ठितत्वं तत्राह। वासनात्मनामिति ॥ २० ॥

किंदेवतोऽस्यां दक्षिणायां दिश्यसीति यमदे-
वत इति स यमः कस्मिन्प्रतिष्ठित इति यज्ञ इति
कस्मिन्नु यज्ञः प्रतिष्ठित इति दक्षिणायामिति
कस्मिन्नु दक्षिणा प्रतिष्ठितेति श्रद्धायामिति यदा
ह्येव श्रद्धत्तेऽथ दक्षिणां ददाति श्रद्धायाꣳ ह्येव
दक्षिणा प्रतिष्ठितेति कस्मिन्नु श्रद्धा प्रतिष्ठितेति

---

किंदेवतोऽस्यां दक्षिणायां दिश्यसीति पूर्ववत्। द-
क्षिणायां दिशि का देवता तव। यमदेवत इति। यमो
देवता मम दक्षिणादिग्भूतस्य। स यमः कस्मिन्प्रति-
ष्ठित इति। यज्ञ इति। यज्ञे कारणे स प्रतिष्ठितो यमः
सह दिशा। कथं पुनर्यज्ञस्य कार्यं यम इत्युच्यते। ऋत्वि-
ग्भिर्निष्पादितो यज्ञो दक्षिणया यजमानस्तेभ्यो यज्ञं
निष्क्रीयते। न यज्ञेन दक्षिणां दिशं सह यमेनाभिज-
यति। तेन यज्ञे यमः कार्यत्वात्प्रतिष्ठितः सह दक्षिणया
दिशा। कस्मिन्नु यज्ञः प्रतिष्ठित इति। दक्षिणायामिति।
दक्षिणया स निष्क्रीयते। तेन दक्षिणाकार्यं यज्ञः। कस्मिन्नु
दक्षिणा प्रतिष्ठितेति। श्रद्धायामिति। श्रद्धा नाम दित्सु-
त्वमास्तिक्यबुद्धिभक्तिसहिता। कथं तस्यां प्रतिष्ठिता

---

पूर्ववदित्युक्तमेव व्यनक्ति। दक्षिणायामिति॥ यमस्य यज्ञकार्य-
त्वमप्रसिद्धमिति शङ्कित्वा व्युत्पादयति। कथमित्यादिना॥ तस्य यज्ञ-
कार्यत्वे फलितमाह। तेनेति॥ यज्ञस्य दक्षिणायां प्रतिष्ठितत्वं साध-
यति। दक्षिणयेति॥ कार्यञ्च कारणे प्रतिष्ठितमिति शेषः। दक्षि-

हृदय इति होवाच हृदयेन हि श्रद्धां जानाति हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २१ ॥

किं देवतोऽस्यां प्रतीच्यां दिश्यसीति वरुणदेवत इति स वरुणः कस्मिन्प्रतिष्ठित इत्यप्स्विति

---

दक्षिणा। यस्माद्यदा ह्येव श्रद्दधतेऽथ दक्षिणां ददाति ना-श्रद्दधद्दक्षिणां ददाति। तस्माच्छ्रद्धायां ह्येव दक्षिणा प्रति-ष्ठितेति। कस्मिन्नु श्रद्धा प्रतिष्ठितेति हृदय इति होवाच। हृदयस्य हि वृत्तिः श्रद्धा। यस्माद्धृदयेन हि श्रद्धां जानाति वृत्तिश्च वृत्तिमति प्रतिष्ठिता भवति। तस्माद्धृ-दये ह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद्याज्ञवल्क्य ॥२१॥

किंदेवतोऽस्यां प्रतीच्यां दिश्यसीति। तस्यां वरुणो ऽधिदेवता मम। स वरुणः कस्मिन्प्रतिष्ठित इत्यप्स्विति। अपां हि वरुणः कार्यं श्रद्धा वा आपः। श्रद्धातो वरुणम-सृजतेति श्रुतेः। कस्मिन्नापः प्रतिष्ठिता इति। रेतसीति

---

णायाः श्रद्धाप्रतिष्ठितत्वं प्रकटयति। यस्मादिति॥ हृदये का प्रति-ष्ठितेत्यत्र हेतुमाह। हृदयस्येति। हृदयस्याश्रयत्वाच्च श्रद्धायास्तत्प्रति-ष्ठितत्वमित्याह। हृदयेन हीति। हृदयस्य श्रद्धावृत्तिरस्तु तथापि प्रकृते किमायातं तदाह। वृत्तिश्चेति॥ २१॥

रेतसो हृदयकार्य्यत्वं साधयति। काम इति॥ तथापि कथं रेतो हृदयस्य कार्य्यं तदाह। कामिनो हीति॥ तत्रैव लोकप्रसिद्धिं प्रमाणयति। तस्मादिति। अपिशब्दः सम्भावनार्थः अव-

कस्मिन्न्वापः प्रतिष्ठिता इति रेतसीति कस्मिन्नु रेतः प्रतिष्ठितमिति हृदय इति तस्मादपि प्रतिरूपं जातमाहुर्हृदयादिव सृप्तो हृदयादिव निर्मित इति हृदये ह्येव रेतः प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २२ ॥ किंदेवतोऽस्यामुदीच्यां दिश्यसीति सोमदेवत इति स सोमः कस्मिन्प्रतिष्ठित इति दीक्षायामिति कस्मिन्नु दीक्षा प्रतिष्ठितेति सत्य इति तस्मादपि दीक्षितमाहुः सत्यं वदेति सत्ये ह्येव दीक्षा प्रतिष्ठितेति कस्मिन्नु सत्यं प्रतिष्ठितमिति हृदय इति होवाच हृदयेन हि

रेतसा ह्यापः सृष्टा इति श्रुतेः । कस्मिन्नु रेतः प्रतिष्ठितमिति । हृदय इति । यस्माद्धृदयस्य कार्यं रेतः कामो हृदयस्य वृत्तिः । कामिनो हि हृदयाद्रेतोऽधिस्कन्दति । तस्मादपि प्रतिरूपमनुरूपं पुत्रं जातमाहुर्लौकिका अस्य पितुर्हृदयादिवायं पुत्रः सृप्तो विनिःसृतो हृदयादिव निर्मितो यथा सुवर्णेन निर्मितः कुण्डलः । तस्माद्धृदये ह्येव रेतः प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २२ ॥ किंदेवतोऽस्यामुदीच्यां दिश्यसीति । सोमदेवत इति । लतां सोमं देवतां चैकीकृत्य निर्देशः । स सोमः कस्मिन्प्रतिष्ठित

---

धारणार्थो वा ॥ २२ ॥ दीक्षायां सोमस्य प्रतिष्ठितत्वं साधयति ॥ दीक्षितो हीत्यादिना ॥ दीक्षायाः सत्ये प्रतिष्ठितत्वमप्रसिद्धमिति शङ्कित्वा समाधत्ते । कथमित्यादिना । अपिशब्दोऽवधारणार्थः ॥ सत्यं वदेति वदतामभिप्रा-

सत्यं जानाति हृदये ह्येव सत्यं प्रतिष्ठितं भव-
तीत्येवमेवैतद्याज्ञवल्क्य ॥ २३ ॥

किंदेवतोऽस्यां ध्रुवायां दिश्यसीत्यग्निदेवत इति सोऽग्निः कस्मिन्प्रतिष्ठित इति वाचीति

---

इति। दीक्षायामिति। दीक्षितो हि यजमानः सोमं क्रीणाति। क्रीतेन सोमेनेष्ट्वा ज्ञानवानुत्तरां दिशं प्रतिपद्यते। सोमदेवताधिष्ठितां सौम्याम्। कस्मिन्नु दीक्षा प्रतिष्ठितेति। सत्य इति। कथम्। यस्मात्सत्ये दीक्षा प्रतिष्ठिता तस्मादपि दीक्षितमाहुः सत्यं वदेति। कारणभ्रेषे कार्यभ्रेषो माभूदिति सत्ये ह्येव दीक्षा प्रतिष्ठितेति। कस्मिन्नु सत्यं प्रतिष्ठितमिति। हृदय इति होवाच। हृदयेन हि सत्यं जानाति। तस्माद्धृदये ह्येव सत्यं प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २३ ॥

किंदेवतोऽस्यां ध्रुवायां दिश्यसीति। मेरोः समन्ततो वसतामव्यभिचारादूर्ध्वा दिग् ध्रुवेत्युच्यते। अग्निदेवत इति। ऊर्ध्वायां हि प्रकाशभूयस्त्वं प्रकाशश्चाग्निः सोऽग्निः

---

यमाह। कारणेति॥ भ्रेषो भ्रंशो नाश इति तेषामभिप्राय इति शेषः॥ प्रकृतोपसंहारः। सत्ये हीति॥ २३॥

कथं पुनरूर्ध्वा दिगवस्थिता ध्रुवेत्युच्यते तत्राह। मेरोरिति॥ तत्राग्नेर्देवतात्वं प्रकटयति। ऊर्ध्वायां हीति॥ दिशो वेदेत्यादिश्रुत्या जगतो विभागेन पञ्चधात्वं ध्यानार्थमुक्तं इदानीं विभागवादिन्याः श्रुतेरभिप्रायमाह; तत्रेति। यथोक्ते विभागे सतीत यावत्॥ उक्तमर्थं हृङ्क्षति। सदेवा इति। तत्रावान्तरविभागमाह

कस्मिन्नु वाक् प्रतिष्ठितेति हृदय इति कस्मिन्नु हृदयं प्रतिष्ठितमिति ॥ २४ ॥ अहल्लिकेति

---

कस्मिन्प्रतिष्ठित इति वाचीति । कस्मिन्नु वाक् प्रतिष्ठितेति हृदय इति । तत्र याज्ञवल्क्यः सर्व्वासु दिक्षु विप्रसृतेन हृदयेन सर्व्वा दिश आत्मत्वेनाभिसम्पन्नः सदेवाः सप्रतिष्ठा दिशश्चात्मभूतास्तस्य नामरूपकर्म्मात्मभूतस्य याज्ञवल्क्यस्य । यद्रूपं तत्प्राच्या दिशा सह हृदयभूतं याज्ञवल्क्यस्य । यत्केवलं कर्म्म पुत्रोत्पादनलक्षणञ्च ज्ञानसहितं च सहफलेनाधिष्ठात्रीभिश्च देवताभिर्दक्षिणा प्रतीच्युदीच्य. कर्म्मफलात्मिका हृदयमेवापन्नास्तस्य । ध्रुवया दिशा सह नाम सर्वं वाग्द्वारेण हृदयमेवापन्नम् । एतावद्धीदं सर्वं यद्रूपं वा कर्म्म वा नाम वेति सर्वं हृदयमेत-

---

यद्रूपमिति । आद्ये पर्याये हृदये रूपप्रपञ्चोपसंहारो दर्शितो हृदये ह्येव रूपाणीति श्रुतेरित्यर्थः ॥ दक्षिणायामित्यादिपर्यायत्रयेण तत्रैव कर्म्मोपसंहार उक्त इत्याह । यत्केवलमिति । यद्धि केवलं कर्म्म तत्फलादिभिः सह दक्षिणादिगात्मकं हृद्युपसंह्रियते । यद्दक्षिणादिद्वारा हृदये प्रतिष्ठितत्वोक्तेर्दक्षिणस्या दिशस्तत्फलत्वात्पुत्रजन्माख्यं च कर्म्म प्रतीच्यात्मकं तत्रैवोपसंहृतं हृदये ह्येव रेतः प्रतिष्ठितमिति श्रुतेः पुत्रजन्मनश्च तत्कार्य्यत्वाज्ज्ञानसहितमपि कर्म्म फलप्रतिष्ठा देवताभिःसहोदीच्यात्मकम् । तत्रैवोपसंहृतं सोमदेवताया दीक्षादिद्वारा तत्प्रतिष्ठित्वश्रुतेरेवं दिक्त्रये सर्वं कर्म्म हृदि संहृतमित्यर्थः ॥ पञ्चम पर्यायस्य तात्पर्य्यमाह । ध्रुवयेति ॥ नामरूपकर्म्मस्वरूपसंहृतेष्वपि किञ्चिदुपसंहर्त्तव्यान्तरमवशिष्टमस्तीत्याशङ्क्य निराकरोति एतावद्धीति ॥ [illegible]-

होवाच याज्ञवल्क्यो यत्रैतदन्यत्रास्मन्मन्यासै यद्ध्येतदन्यत्रास्मत्स्याच्छ्वानो वैनद्द्युर्वयाꣳसि वैनद्विमथ्नीरन्निति ॥ २५ ॥

---

त्सर्वात्मकं हृदयं पृच्छ्यते कस्मिन् हृदयं प्रतिष्ठितमिति ॥ २४ ॥ अहल्लिकेति होवाच याज्ञवल्क्यो नामान्तरेण सम्बोधनं कृतवान्। यत्र यस्मिन्काले एतद्धृदयमात्मास्य शरीरस्यान्यत्र क्वचिद्देशान्तरेऽस्मत्तो वर्त्तत इति मन्यासै मन्यसे। यद्धि यदि ह्येतद्धृदयमन्यत्रास्मत्स्याद्भवेच्छ्वानो वा एनच्छरीरं तदाद्युर्वयांसि वा पक्षिणो वा एनद्वि मथ्नीरन्विलोडयेयुर्विकर्षेरन्निति। तस्मान्मयि शरीरे हृदयं प्रतिष्ठितमित्यर्थः। शरीरस्यापि नामरूपकर्म्मात्मकत्वाद्धृदये प्रतिष्ठितत्वम् ॥ २५ ॥

---

न्तरमुत्थापयति। तत्सर्वात्मकमिति ॥ २४ ॥ हृदयपदेन मांसाद्याधारवदहल्लिकशब्देनापि हृदयाधिकरणं विवक्ष्यते वाक्यच्छायासाम्यादित्याशङ्क्याह। नामान्तरेणेति। अहनि लीयत इति शिष्टत्वप्रेतवाचिनेति शेषः ॥ देहे हृदयं प्रतिष्ठितमिति व्युत्पादयति। यत्रेत्यादिना तस्मिन्काले शरीरं मृतं स्यादिति शेषः ॥ शरीरस्य हृदयाश्रयत्वं विशदयति। यद्धीत्यादिना। देहादन्यत्र हृदयस्यावस्थाने यथोक्तदोषमिति शब्देन परामृश्य फलितमाह। इतीत्यादिना ॥ देहस्तर्हि कुत्र प्रतिष्ठित इत्यत आह। शरीरस्येति ॥ वृत्तमनूद्य प्रश्नान्तरमुपादत्ते। हृदयेति ॥ २५ ॥

कस्मिन्नु त्वञ्चात्मा च प्रतिष्ठितौ स्थ इति प्राण इति कस्मिन्नु प्राणः प्रतिष्ठित इत्यपान इति कस्मिन्न्वपानः प्रतिष्ठित इति व्यान इति कस्मिन्नु

---

हृदयशरीरयोरेवमन्योऽन्यप्रतिष्ठोक्ता कार्य्यकरणयोरतस्त्वां पृच्छामि। कस्मिन्नु त्वं च शरीरमात्मा च तव हृदयं प्रतिष्ठितौ स्थ इति। प्राण इति। देहात्मानौ प्राणे प्रतिष्ठितौ स्यातां प्राणवृत्तौ। कस्मिन्नु प्राणः प्रतिष्ठित इत्यपान इति। सापि प्राणवृत्तिः प्राङ्केव प्रेयादपानवृत्त्या चेन्न निगृह्यते। कस्मिन्न्वपानः प्रतिष्ठित इति। व्यान इति। साप्यपानवृत्तिरध एव यायात्। प्राणवृत्तिश्च प्राङ्केव मध्यस्थया चेद्व्यानवृत्त्या न निगृह्यते। कस्मिन्न्व्यानः प्रतिष्ठित इति। उदान इति। सर्व्वास्तिस्रोऽपि वृत्तय उदाने कीलस्थानीये चेन्न निबद्धा विष्वग्भवेयुः। कस्मिन्नुदानः प्रतिष्ठित इति समान इति। समानप्रतिष्ठा ह्येताः सर्व्वा वृत्तयः। एतदुक्तं भवति शरीरहृदयवायवोऽन्यो-

---

प्राणशब्दस्य सूत्रविषयत्वं व्यवच्छेत्तुं वृत्तिविशेषणं प्राणस्यापाने प्रतिष्ठितत्वं व्यतिरेकद्वारा स्फोरयति। सापीति॥ प्राणापानयोरुभयोरपि व्यानाधीनत्वं साधयति। साप्यपानेति॥ तिसृणां वृत्तीनामुक्तानामुदाने निबद्धत्वं दर्शयति। सर्वा इति। विष्वङ्ङिति नानागतित्वोक्तिः॥ कस्मिन् हृदयमित्यादेः समानान्तस्य तात्पर्य्यमाह। एतदिति। तेषां प्रवर्त्तकं दर्शयति। विज्ञानमयेति॥ स एष इत्यादेस्तात्पर्य्यमाह। सर्व्वमिति। यस्य कूटस्थदृष्टिमात्रस्यान्तर्यामित्वकल्पनाधिष्ठानस्याज्ञानशब्दाप्रशासने द्यावापृथिव्यादि स्थितं स परमात्मैव प्रत्यगात्मेति तत्पदयोरर्थ

व्यानः प्रतिष्ठित इत्युदान इति कस्मिन्नुदानः प्रतिष्ठित इति समान इति स एष नेति नेत्यात्मा ऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्य्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यति ।

---

न्यप्रतिष्ठाः सङ्घातेन नियता वर्त्तन्ते विज्ञानमयार्थप्रयुक्ता इति । सर्वमेतद्येन नियतं यस्मिन्प्रतिष्ठितमाकाशान्तमोतञ्च प्रोतञ्च तस्य निरुपाधिकस्य साक्षादपरोक्षाद्ब्रह्मणो निर्द्देशः कर्त्तव्य इत्ययमारम्भः । स एष । स यो नेति नेतीति निर्द्दिष्टो मधुकाण्ड एष सः । सोऽयमात्माऽगृह्यो न गृह्यः । कथम् । यस्मात् सर्वकार्यधर्म्मातीतस्तस्मादगृह्यः । कुतो यस्मान्न हि गृह्यते । यद्धि करणगोचरं व्याकृतं वस्तु तद्ग्रहणगोचरमिदन्तु तद्विपरीतमात्मतत्त्वम् । तथाऽशीर्य्यो यद्धि मूर्त्तं संहतं शरीरादि तच्छीर्य्यतेऽयन्तु तद्विपरीतोऽतो न हि शीर्य्यते । असङ्गोऽमूर्त्तो मूर्त्तान्तरेण यः सम्बध्यमानः सज्यतेऽयञ्च तद्विपरीतोऽतो न हि सज्यते । तथाऽसितः अबद्धो यद्धि मूर्त्तं तद्बध्यते । इदन्तु तद्वि-

---

विरुद्धत्वादिह । स एष इति ॥ निषेधद्वयं मूर्त्तामूर्त्तब्राह्मणे व्याख्यातमित्याह । स यो नेति । य मधुकाण्डे चतुर्थे नेति नेतीति निषेधमुखेन निर्द्दिष्टः स एष कूर्चब्राह्मणे तन्मुखेनैव वक्ष्यत इति योजना ॥ निषेधद्वारा निर्द्दिष्टमेव स्पष्टयति । सोऽयमिति । कार्य्यधर्माःशब्दादयोऽशनादयश्च ॥ सूत्रयुक्तं हेतुमवतार्य्य व्याचष्टे । कुत इत्यादिना ॥ तद्विपरीतत्वं कर्णगोचरत्वं न चक्षुषेत्यादिश्रुतेः तद्विपरीतत्वादमूर्त्तत्वादिति यावत् ॥

एतान्यष्टावायतनान्यष्टौ लोका अष्टौ देवा अष्टौ पुरुषाः स यस्तान्पुरुषान्निरुह्य प्रत्युह्यात्य-

---

परीतत्वाद्बद्धत्वान्न व्ययतेऽतो न रिष्यति । ग्रहणशरण-सङ्गबन्धकार्य्यधर्म्मरहितत्वान्न रिष्यति । न हिंसामापद्यते न विनश्यतीत्यर्थः । क्रममतिक्रम्यौपनिषदस्य पुरुषस्याख्यायिकातोऽपकृष्य श्रुत्या स्वेन रूपेण त्वरया निर्देशः कृतः ॥

ततः पुनराख्यायिकामेवाश्रित्याह । एतानि यान्युक्तान्यष्टावायतनानि पृथिव्येव यस्यायतनमित्येवमादीनि अष्टौ लोका अग्निलोकादयोऽष्टौ देवा अमृतमिति होवाचेत्येवमादयोऽष्टौ पुरुषाः शारीरः पुरुष इत्यादयः । स यः कश्चित्तान् पुरुषान् शारीरप्रभृतीन्निरुह्य निश्चयेनोह्य गमयित्वाष्टचतुष्कभेदेन लोकस्थितिमुपपाद्य पुनः प्राचीदिग्द्वारेण प्रत्युह्य स्वात्मनि हृदयेऽत्यक्रामदतिक्रान्तवानुपाधिधर्मं हृदयाद्यात्मत्वं स्वेनैवात्मना व्यवस्थितो

---

पूर्व्वत्राप्युभयत्र तद्वैपरीत्यमेतदेवातःशब्दार्थं स्फुटयन्नुक्तमुपपादयति । ग्रहेणेति । कार्य्यधर्माः शब्दादयोऽशनादयश्च प्रागुक्ताः । ननु शाकल्ययाज्ञवल्क्ययोः संवादात्मिकेयमाख्यायिका तत्र कथं शाकल्येनापृष्टमात्मानं याज्ञवल्क्यो व्याचष्टे तत्राह । क्रममिति ॥

विज्ञानादिवाक्ये वक्ष्यमाणत्वात्किमित्यत्र निर्देश इत्याशङ्क्याह । त्वरयेति ॥ एतान्यष्टावित्यादिवाक्यस्य पूर्वेणासङ्गतिमाशङ्क्याह । ततः पुनरिति ॥ निश्चयेन गमयित्वेत्यत्र तदेव स्फुटयति । अष्टाविति ॥ प्रत्युह्योपसंहृत्येति यावत् । औपनिषदत्वं पुरुषस्य व्युत्पादयति । उपनिषत्स्वे-

कामस्तऽत्वौपनिषदं पुरुषं पृच्छामि तञ्चेन्मे न विवक्ष्यसि मूर्धा ते विपतिष्यतीति। तᳪं ह न मेने शाकल्यस्तस्य ह मूर्धा विपपातापि हास्य परिमोषिणोऽस्थीन्यपजह्रुरन्यन्मन्यमानाः ॥ २६ ॥

---

य औपनिषदः पुरुषोऽशनायादिवर्जित उपनिषत्स्वेवविज्ञेयो नान्यप्रमाणगम्यस्तं त्वा त्वां विद्याभिमानिनं पुरुषं पृच्छामि। तञ्चेद्यदि मे न विवक्ष्यसि विस्पष्टं न कथयिष्यसि मूर्धा ते विपतिष्यतीति। तन्त्वौपनिषदं पुरुषं शाकल्यो न मेने ह न विज्ञातवान् किल। तस्य ह मूर्धा विपपात विपतितः। समाप्ताख्यायिका। श्रुतिवचनं तं ह न मेने इत्यादि। किञ्चापि हास्य परिमोषिणस्तस्करा अस्थीन्यपि संस्कारार्थं शिष्यैर्नीयमानानि गृहान्प्रत्यपजह्रुरपहृतवन्तः। किं निमित्तमन्यद्धनं नीयमानं मन्यमानाः। पूर्ववृत्ता ह्याख्यायिकेह सूचिताष्टाध्याय्यां किल शाकल्येन। याज्ञवल्क्यस्य समानान्त एव संवादो निर्वृत्तः। तत्र

---

-वेति ॥ तं हेत्यादिना याज्ञवल्क्यस्य वा मध्यमस्य वा वाक्यमिति शङ्कां वारयति। समाप्तेति। ब्रह्मविद्विद्वेषे परलोकविरोधोऽपि स्यादित्याह। किञ्चेति॥ मूर्धा ते विपतिष्यतीति मूर्ध्नि पतिते शापेन किमित्यग्निहोत्राग्निसंस्कारमपि शाकल्यो न प्राप्तवानित्याशङ्क्याह॥ पूर्ववृत्तेति तामेवाख्यायिकामनुक्रामति। अष्टाध्याय्यामिति। अष्टाध्यायी बृहदारण्यकात्प्राचीना कर्मविषया। पुरे पुरुषे चेत्यतिरिक्ते देयेऽतिथौ पशव्य तिथिम्भून्ये काले ऽस्थीनि च। नेति च न शब्दोऽयर्थः। उपवादी परि-

अथ होवाच ब्राह्मणा भगवन्तो यो वः कामयते स मा पृच्छतु सर्व्वे वा मा पृच्छत यो वः कामयते

याज्ञवल्क्येन शापो दत्त.। पुरेऽतिथ्ये मरिष्यसि। न तेऽस्थीनि च गृहान्प्राप्स्यन्तीति स तथैव ममार। तस्य ह्यप्यन्यन्मन्यमानाः परिमोषिणोऽस्थीन्यपजह्रुः। तस्मान्नोपवादी स्यादुत ह्येवंवित्परो भवतीति। सैषाख्यायिकाऽऽचारार्थं सूचिता। विद्या स्तुता ॥ २६ ॥

यस्येह। यस्य नेति नेत्यन्यप्रतिषेधद्वारेण ब्रह्मणो निर्देशः कृतस्तत्र विधिमुखेन कथं निर्देशः कर्त्तव्य इति पुनराख्यायिकामेवाश्रित्याह मूलञ्च जगतो वक्तव्यमिति। आख्यायिकासम्बन्धस्तु ब्रह्मविदो ब्राह्मणान् जित्वा गोधनं हर्त्तव्यमिति न्यायं मत्वाह॥ अथ होवाच। अथाऽनन्तरं तूष्णींभूतेषु ब्राह्मणेषु ह उवाच। हे ब्राह्मणाः भगवन्त इत्येवं सम्बोध्य यो वो युष्माकं मध्ये कामयते

भवकर्त्ता॥ तच्छब्दार्थमाह। उत ह्येति। किमितीयमाख्यायिकात्र विद्याप्रकरणे सूचितेत्याशङ्क्याह। सैषेति॥ ब्रह्मविदि विनीतेन भवितव्यमित्याचारः। महती हीयं ब्रह्मविद्या। यत्तद्विज्ञानवरादिमात्रामर्षितुर्नात्मधिकविरोधः स्यादिति विद्या स्तुतिः ॥ २६ ॥

अथ हेत्याद्युत्तरग्रन्थमवतारयति। यस्येत्यादिना॥ जगतो मूलञ्च वक्तव्यमित्याख्यायिकामेवाश्रित्याहेति सम्बन्धः॥ आख्यायिका किमर्थेत्यत आह। आख्यायिकेति। इति शब्दः सम्बन्धसमाप्त्यर्थः॥ ननु ब्राह्मणेषु तूष्णीम्भूतेषु प्रतिषेद्धुरभावाद्गोधनं हर्त्तव्यं किमिति तान् प्रति याज्ञवल्क्योऽवदीदित्यत आह। न्यायं मत्वेति। ब्रह्मस्वं हि

तं वः पृच्छामि सर्व्वान्वा वः पृच्छामीति ते ह ब्राह्मणा न दधृषुः ॥ २७ ॥

तान् हैतैः श्लोकैः पप्रच्छ । यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा । तस्य लोमानि पर्णानि

---

इच्छति याज्ञवल्क्यं पृच्छामीति स मा मामागत्य पृच्छतु । सर्वे वा मा पृच्छत । सर्वे वा यूयं मा मां पृच्छत । यो वः कामयते याज्ञवल्क्यो मां पृच्छत्विति तं वः पृच्छामि । सर्व्वान्वा वो युष्मानहं पृच्छामि । ते ह ब्राह्मणा न दधृषुस्ते ब्राह्मणा एवमुक्ता अपि न प्रगल्भाः संवृत्ताः किञ्चिदपि प्रत्युत्तरं वक्तुम् ॥ २७ ॥

तेष्वप्रगल्भभूतेषु ब्राह्मणेषु तान् ह एतैर्वक्ष्यमाणैः श्लोकैः पप्रच्छ पृष्टवान् । यथा लोके वृक्षो वनस्पतिः । वृक्षस्य विशेषणं वनस्पतिरिति । तथैव पुरुषोऽमृषा । अमृषा सत्यमेतत् । तस्य लोमानि । तस्य पुरुषस्य लोमानीतरस्य वनस्पतेः पर्णानि । त्वगस्योत्पाटिका । वहिस्त्वक् अस्य पुरुषस्येतर-

---

ब्राह्मणानुमतिमनापाद्य नीयमानमनर्थाय स्यादित्यभिप्रायः । सम्बोध्योवाचेति सम्बन्धः । यो व इति प्रतीकमादाय व्याचष्टे । युष्माकमिति ॥ व्याख्यातभागमनूद्य व्याख्येयमादाय व्याकरोति । यो व इत्यादिना ॥ यथोक्तप्रश्नानन्तरं ब्राह्मणानामप्रतिभां दर्शयति । ते हीति ॥ २७ ॥

स्वकीयज्ञानप्रकर्षप्रकटनार्थमेव प्रश्नान्तरमवतारयति । तेष्विति ॥ वृक्षो वनस्पतिरिति पर्य्यायत्वात्पुनरुक्तिरित्याशङ्क्याह । वृक्षस्येति । तच्च वस्य महत्त्वमाहेत्यपौनरुक्तिः ॥ पुरुषस्य वृक्षसाधर्म्यमेतदित्युच्यते ॥

त्वग्यस्योत्पाटिका वहिः ॥ त्वच एवास्य रुधिरं प्रस्यन्दि वत्त्व उत्पटः। तस्मात्तदातृण्णात्प्रैति रसो वृक्षादिवाहतात् ॥ मांसान्यस्य शकराणि किनाटं स्नाव तत्स्थिरं। अस्थीन्यन्तरतो दारूणि

---

स्योत्पाटिका वनस्पतेस्त्वच एव सकाशादस्य पुरुषस्य रुधिरं प्रस्यन्दि वनस्पतेः। त्वच उत्पटस्त्वच एवोत्स्फुटति। यस्मादेवं सर्वं समानमेव वनस्पतेः पुरुषस्य च तस्मात्तदातृण्णाद्धिंसितात्प्रैति तद्रुधिरं निर्गच्छति वृक्षादिवाहताच्छिन्नाद्रसः। एवं मांसान्यस्य पुरुषस्य वनस्पतेस्तानि शकराणि शकलानीत्यर्थः। किनाटम्। वृक्षस्य किनाटं नाम शकलेभ्योऽभ्यन्तरं वल्कलरूपं काष्ठसंलग्नं तत्स्नावत्पुरुषस्य तत्स्थिरं तत्किनाटं स्नाववद्दृढं हि तत्। अस्थीनि। पुरुषस्य स्नाव्नोऽभ्यन्तरतोऽस्थीनि भवन्ति। तथा किनाटस्याभ्यन्तरतो दारूणि काष्ठानि। मज्जा। मज्जैव वनस्पतेः पुरुषस्य च मज्जोपमा कृता। मज्जाया उपमा मज्जोपमा

---

साधर्म्यमेव स्फुटयति ॥ तस्येत्यादिना। नीरसा त्वगुत्पाटिकेत्युच्यते ॥ उत्पटो वृक्षनिर्यासः ॥ विशेषाभावमेवाभिनयति। यथेति ॥ साधर्म्यं सति वैधर्म्यं वक्तुमशक्यमित्यावयेनाह ॥ यद्यपीति ॥ इदमपि साधर्म्यमेव किं न स्यादित्याशङ्क्याह। यदेति। तस्मादिति। एतस्माद्विशेषणात् प्राग्यद्विशेषणमुक्तं तत्सर्वमुभयोः सामान्यमवगतमिति सम्बन्धः ॥ वृक्णस्याङ्कुरेति शेषः। मा भूत्तस्य प्ररोहणमिति चेन्नेत्याह। भवितव्यञ्चेति ध्रुवं जन्म मृतस्य चेतीत्यर्थः ॥ जीवतो हि रेतो जायते स

मज्जा मज्जोपमा कृता ॥ यद्वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः । मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥ रेतस इति मा वोचत जीवतस्तत्प्रजायते । धानारुह इव वै वृक्षोऽञ्जसा

---

नान्यो विशेषोऽस्तीत्यर्थः ॥ यथा वनस्पतेर्मज्जा तथा पुरुषस्य यथा पुरुषस्य तथा वनस्पतेः । यद्यदि वृक्षो वृक्णश्छिन्नो रोहति पुनः प्ररोहति प्रादुर्भवति मूलात्पुनर्नवतरः पूर्वस्मादभिनवतरो यदेतस्माद्विशेषणात्प्राग्वनस्पतेः पुरुषस्य च सर्वं सामान्यमवगतम् । अयन्तु वनस्पतौ विशेषो दृश्यते यच्छिन्नस्य प्ररोहणम् । न तु पुरुषे मृत्युना वृक्णे पुनः प्ररोहणं दृश्यते । भवितव्यञ्च कुतश्चित्प्ररोहणेन । तस्माद्वः पृच्छामि मर्त्यो मनुष्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति मृतस्य पुरुषस्य कुतः प्ररोहणमित्यर्थः । यदि चेदेवं वदथ रेतसः प्ररोहतीति मा वोचत मैवं वक्तुमर्हथ । कस्माद्यस्माज्जीवतः पुरुषात्तद्रेतः प्रजायते न मृतात् ।

---

एव कुतो भवतीति विचार्यते । न चाविद्धेन लिङ्गस्य साधनं न च पुरुषान्तरादिति वाच्यं एकाकिद्वावन्यतरप्रयोगानुपपत्तेरिति मन्वानो हेतुमाह । यस्मादिति ॥ वैधर्म्यान्तरमाह । अपि चेति ॥ काण्डरुहोऽपीत्यपेरर्थः । वैशब्दः प्रसिद्धिद्योतक इत्यभिप्रेत्याह । वै इव इति । अञ्जसेत्यादेरर्थमुक्त्वा वाक्यार्थमाह । धानातोऽपीति ॥ तथापि कथं वैधर्म्यमित्याशङ्क्याह । यद्यपीति ॥ पुरुषस्यापि पुनरुत्पत्तिर्माभूदित्याशङ्क्य पूर्वोक्तं निगमयति । तस्मादिति । स्वभावतोऽत्र स्थापयति जात इति प्रदर्श्याद्य

प्रेत्य सम्भवः ॥ यत्समूलमावृहेयुर्वृक्षं न पुनराभवेत् । मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥ जात एव न जायते कोऽन्वेनं जनयेत्पुनः । विज्ञानमानन्दं ब्रह्म रातिर्दातुः

---

अपि च धानारुहो धानाबीजं बीजरुहोऽपि वृक्षो भवति न केवलं काण्डरुह एव । इवशब्दोऽनर्थकः । वै वृक्षोऽञ्जसा साक्षात्प्रेत्य मृत्वा सम्भवो धानातोऽपि प्रेत्य सम्भवो भवेदञ्जसापुनर्भवस्ततः । यद्यदि सह मूलेन धानया वोद्वृहेयुरुद्यच्छेयुरुत्पाटयेयुर्वृक्षं न पुनराभवेत्पुनरागत्य न भवेत्तस्माद्वः पृच्छामि । सर्वस्यैव जगतो मूलं मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति जात एवेति मन्यध्वं यदि किमत्र प्रष्टव्यमिति । जनिष्यतो हि सम्भवः प्रष्टव्यो न जातस्यायं तु जात एवातोऽस्मिन्विषये प्रश्न एव नोपपद्यत इति चेत् । न । किन्तर्हि मृतः पुनरपि जायत एवान्यथा कृताभ्यागमकृतनाशप्रसङ्गात् । अतो वः पृच्छामि कोऽन्वेनं

---

समाप्त्यर्थः । तदेव स्फुटयति । जनिष्यतो हीति ॥ न जायत इति भागेनोत्तरमाह । नेत्यादिना ॥ स्वभाववादे दोषमाह ॥ अन्यथेति ॥ स्वभावासम्भवे फलितमाह । अत इति ॥ उक्तमेव स्फुटयति । जगत इति ॥ ब्रह्मविदां श्रेष्ठत्वे याज्ञवल्क्यस्य सिद्धे फलितमाह । अत इति समाप्ताख्यायिकेति ॥ ब्राह्मणाश्च सर्वे यथायथं जग्मुरित्यर्थः । विज्ञानादिवाक्यमुत्थापयति । यज्जगत इत्यादिना ॥ विज्ञानशब्दस्य करणादिविषयत्वं वारयति । विज्ञप्तिरिति ॥ आनन्दविशेषणकृत्यं दर्शयति ।

परायणं। तिष्ठमानस्य तद्विद इति ॥ २८ ॥ नवमं ब्राह्मणं॥ ९ ॥ इति बृहदारण्यके पञ्चमोऽध्यायः। उपनिषत्सु तृतीयोऽध्यायः॥ ५ ॥

---

मृतं पुनर्जनयेत्। तत्र विजघ्नुर्ब्राह्मणा यतो मृतः पुनः प्ररोहति जगतो मूलं न विज्ञातं ब्राह्मणैः। अतो ब्रह्मिष्ठत्वात् हृता गावो याज्ञवल्क्येन जिता ब्राह्मणाः। समाप्ताख्यायिका॥ यज्जगतो मूलं येन च शब्देन साक्षाद्व्यपदिश्यते ब्रह्म। यद्याज्ञवल्क्यो ब्राह्मणान्पृष्टवान् ततः स्वेन रूपेण श्रुतिरस्मभ्यमाह। विज्ञानं विज्ञप्तिर्विज्ञानं तच्चानन्दं न विषयविज्ञानवद्दुःखानुविद्धम्। किन्तर्हि प्रसन्नं शिवमतुलमनायासं नितान्ततृप्तमेकरसमित्यर्थः। किन्तद्ब्रह्मोभयविशेषणवद्रातिः रातेः षष्ठ्यर्थे प्रथमा धनस्येत्यर्थो धनस्य दातुः कर्म्मकृतो यजमानस्य परमयनं परागतिः कर्म्मफलस्य प्रदातृत्वात्। किञ्च व्युत्थायैषणाभ्यस्तस्मिन्नेव ब्रह्मणि तिष्ठत-

---

नेत्यादिना॥ प्रसन्नं दुःखहेतुकामक्रोधादिना सम्बन्धरहितं शिवं कामादिकारणेनाज्ञानेनापि सम्बन्धशून्यं सातिशयत्वप्रयुक्तदुःखराहित्यमाह। अतुलमिति॥ साधनसाध्यत्वाधीनदुःखवैधुर्य्यमाह। अनायासमिति॥ दुःखनिवृत्तिमात्रं सुखमिति पक्षं प्रतिक्षिपति नित्यतृप्तमिति॥ आनन्दो ज्ञानमिति ब्रह्मण्याकारभेदमाशङ्क्याह। एकरसमिति॥ फलमत उपपत्तेरिति न्यायेन ब्रह्मणो जगन्मूलत्वमाह। रातेरित्यादिना॥ ब्रह्मसंस्थोऽमृतत्वमेतीति श्रुत्यन्तरमाश्रित्य तत्स्थे

कर्म्मकृत्तद्ब्रह्म वेत्तीति तद्विद्य तस्य तिष्ठमानस्य च तद्विदो ब्रह्मविद इत्यर्थः परायणमिति ॥ २८ ॥

अत्रेदं विचार्यते । आनन्दशब्दो लोके सुखवाची प्रसिद्धः । अत्र च ब्रह्मणो विशेषणत्वेन आनन्दशब्दः । श्रूयते आनन्दं ब्रह्मेति । श्रुत्यन्तरे चानन्दो ब्रह्मेति व्यजानात् । आनन्दं ब्रह्मणो विद्वान् । यदेष आकाश आनन्दः । यो वै भूमा तत्सुखमिति च । एष परमानन्द इत्येवमाद्याः संवेद्ये च सुख आनन्दशब्दः प्रसिद्धः । ब्रह्मानन्दश्च यदि संवेद्यः स्याद्युक्ता एते ब्रह्मण्यानन्दशब्दाः । नन्वेवं श्रुतिप्रामाण्यात्संवेद्यानन्दस्वरूपमेव ब्रह्म किं तत्र विचार्यमिति । न । विरुद्धश्रुतिवाक्यदर्शनात् । सत्यमानन्दशब्दो ब्रह्मणि श्रूयते विज्ञानप्रतिषेधश्चैकत्वे । यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येद्विजानीयात्तं केन विजानीयाद्यत्र नान्यत्पश्यति नान्यद्विजानाति । प्राज्ञेनात्मना सम्परिष्वक्तो

---

सुक्तानि यत्प्रत्यक्षमुपदिश्यति । किञ्चेति । अक्षरव्याख्यानसमाप्तिरितिशब्दः ॥ २८ ॥

सच्चिदानन्दात्मकं ब्रह्म विद्याविद्याभ्यां बन्धमोक्षास्पदमित्युक्तम् । इदानीं ब्रह्मानन्दविचारमवतारयन्विगीतमर्थमाह । अत्रेति ॥ तथापि प्रकृते वाक्ये किमायातमिति तदाह । अत्रेति ॥ न च केवलमत्रैवानन्दशब्दो ब्रह्मविशेषणार्थकत्वेन श्रुतः । किन्तु तैत्तिरीयकादावपीत्याह । श्रुत्यन्तरे चेति ॥ ब्रह्मविशेषणत्वेनानन्दशब्दः श्रूयत इति सम्बन्धः ॥ अन्याः श्रुतीरेवोदाहरति । आनन्द इत्यादिना ॥ एवमाद्याः श्रुतय इति शेषः । तथापि कथं विचारसिद्धिस्तत्राह । संवेद्य इति ॥ लोकप्रसिद्धेरद्वैतश्रुतेश्च ब्रह्मण्यानन्दः संवेद्योऽसंवेद्यो वेति विचारः

न साध्यं किं च न वेदेत्यादिविरुद्धश्रुतिवाक्यदर्शनात्तेन कर्त्तव्यो विचारः ॥

तस्माद्युक्तं वेदवाक्यार्थनिर्णयाय विचारयितुम्। मोक्षवादिविप्रतिपत्तेश्च। साङ्ख्या वैशेषिकाश्च मोक्षवादिनो नास्ति मोक्षे सुखं संवेद्यमित्येवं प्रतिपन्नाः। अन्ये निरतिशयसुखं स्वसंवेद्यमिति। किन्तावद्युक्तमानन्दादिश्रवणात् जक्षन्क्रीडन्रममाणः स यदि पितृलोककामो भवति। स सर्वज्ञः सर्ववित्। सर्व्वान् कामान्समश्नुत इत्यादिश्रुतिभ्यो मोक्षे सुखं संवेद्यमिति। नन्वेकत्वे कारकविभागाभावा-

---

कर्त्तव्य इत्यर्थः ॥ उभयत्र फलं दर्शयति। ब्रह्मानन्दस्येति ॥

अन्यथा लोकवेदयोः पदार्थभेदादविशिष्टस्तु वाक्यार्थ इति न्यायशिरोमणेऽसंवेद्यत्वं पुनरद्वैतश्रुतिरविरुद्धेति भावः ॥ विचारमाक्षिपति। नन्विति ॥ विरुद्धश्रुत्यर्थनिर्णयार्थं विचारकर्त्तव्यतां दर्शयति नेति ॥ सङ्ग्रहवाक्यं विवृणोति। सत्यमित्यादिना ॥ एकत्वे सति विज्ञानप्रतिषेधश्रुतिमेवोदाहरति। यत्रेत्यादिना। इत्यादिश्रवणमिति शेषः ॥ फलितमाह। विरुद्धश्रुतीति ॥ श्रुतिविप्रतिपत्तेर्विचारकर्त्तव्यतामुपसंहरति। तस्मादिति। तत्रैव हेत्वन्तरमाह। मोक्षेति ॥ तामेव विप्रतिपत्तिं विवृणोति। सङ्ख्या इति ॥ विमर्शपूर्व्वकं पूर्व्वपक्षं गृह्णाति। किन्तावदित्यादिना ॥ आनन्दादिश्रवणाद्विज्ञानमानन्दं ब्रह्मेति श्रुतेर्मोक्षे सुखं संवेद्यमिति युक्तमिति सम्बन्धः ॥ तत्रैव वाक्यान्तराण्युदाहरति। जक्षन्नित्यादिना ॥ पूर्व्वपक्षमाक्षिपति नन्विति ॥ मोक्षे चेदिष्यते सुखज्ञानं तर्हि तदानेककारकसाध्यं वाच्यं क्रियात्वात्पाकादिवत्सर्व्वैकत्वे च मोक्षे कारकविभागाभावान्न सुखसंवेदनं भवतीत्यर्थः ॥ जन्यस्य कारकापेक्षायामपि सुखज्ञानस्याजन्यत्वान्न तदपेक्षेत्याशङ्क्याह। क्रियायश्चेति ॥

द्विज्ञानानुपपत्तिः । क्रियाया ह्यनेककारकसाध्यत्वाद्विज्ञानस्य च क्रियात्वात् । नैष दोषः । शब्दप्रामाण्याद्भवेद्विज्ञानमानन्दविषये । विज्ञानमानन्दमित्यादीन्यानन्दस्वरूपस्यासंवेद्यत्वेऽनुपपन्नानि वचनानीत्यवोचाम । ननु वचनेनाप्यग्नेः शैत्यमुदकस्य चौष्ण्यं न क्रियत एव ज्ञापकत्वाद्वचनानाम् । न च देशान्तरेऽग्निः शीत इति शक्यते ज्ञापयितुमगम्ये वा देशान्तर उष्णमुदकमिति । न प्रत्यगात्मन्यानन्दविज्ञानदर्शनान्न विज्ञानमानन्दमित्येवमादीनां वचनानाम् । शीतोऽग्निरित्यादिवाक्यवत् प्रत्यक्षा-

---

या क्रिया सानेककारकसाध्येति व्याप्तेर्गमनादावगतत्वज्ज्ञानस्यापि धात्वर्थेन क्रियात्वादनेककारकसाध्यतासिद्धेरित्यर्थः । श्रुतिप्रामाण्यमाश्रित्य पूर्ववादी परिहरति । नैष दोष इति ॥ तदेव स्फुटयति । विज्ञानमिति ॥ अद्वये ब्रह्मणि श्रुतिप्रामाण्यादानन्दज्ञानमुक्तमाक्षिपति । नन्विति ॥ अद्वैतश्रुतिविरोधाद्ब्रह्मणि विज्ञानक्रियाकारकविभागापेक्षा नोपपद्यते । न हि विज्ञानमानन्दमित्यादिवचनानि मानान्तरविरोधेन विज्ञानक्रियां ब्रह्मण्युत्पादयन्ति । तेषां ज्ञापकत्वाज्ज्ञापकस्य चाविरोधापेक्षत्वादन्यथाति-प्रसङ्गादित्यर्थः । लौकिकज्ञानस्य क्रियात्वेऽपि मोक्षे सुखज्ञानं क्रियैव न भवति ॥ तत्र विज्ञानादिवाक्यस्याद्वैतश्रुतिविरोधोऽस्तीत्याशङ्क्याह । न चेति । पयःपावकयोः सार्वत्रैकरूप्यवद्विज्ञानस्यापि लोकवेदयोरेकरूप्यमेवेति भावः । मानान्तरविरोधादात्मन्यानन्दज्ञानस्य सत्त्वमेव वा निषिध्यन्ते । तस्य क्रियात्वं वा निराक्रियते । तत्राद्यं दूषयति । नेत्यादिना ॥ तदेव स्पष्टयति । न विज्ञानमिति ॥ सुखज्ञानस्य गुणत्वाङ्गीकारात् क्रियात्वनिराकरणमिष्टमेवेति मत्वाह । अनुभूयते त्विति ॥ अनुभवमेवाभिनयति । सुख्यहमिति ॥ तथापि श्रुतिविरोधः स्यादित्याशङ्क्य प्रत्यक्षानुसारेण सापि नेतव्येत्याशयेनाह । तस्मादिति ॥ आत्मन्यान-

दिविरुद्धार्थप्रतिपादकत्वम्। अनुभूयते त्वविरुद्धार्थता। सुख्यहमिति सुखात्मकमात्मानं स्वयमेव वेदयते। तस्मात्सुतरां प्रत्यक्षा विरुद्धार्थता। तस्मादानन्दं ब्रह्मविज्ञानात्मकं सत्स्वयमेव वेदयते॥

तथानन्दप्रतिपादकाः श्रुतयः समञ्जसाः स्युर्जक्षत्क्रीडन्रममाण इत्येवमाद्याः पूर्वोक्ताः। न। कार्य्यकारणाभावेऽनुपपत्तेर्विज्ञानस्य। शरीरवियोगो हि मोक्ष आत्यन्तिकः। शरीराभावे च करणानुपपत्तिराश्रयाभावात्। ततश्च विज्ञानानुपपत्तिरकार्य्यकरणत्वात्। देहाद्यभावे च विज्ञानोत्पत्तौ सर्वेषां कार्य्यकरणोपादानानर्थक्यप्रसङ्गः। एकत्वविरोधाच्च। परश्चेत् ब्रह्मानन्दात्मकमात्मानं नित्य-

---

न्त्वज्ञानस्य क्रियात्वानङ्गीकारात्कारकभेदापेक्षाभावादित्यर्थः। मुख्यत्वपक्षे च प्रत्यक्षस्यानुगुणत्वादागमस्य विरोधिनस्तदनुसारेण नेयत्वाद्विरुद्धत्वादस्य भूयस्त्वादित्याशयः। अविरुद्धार्थता विज्ञानादिश्रुतेरिति शेषः। सुखसुखिभावेऽपि नाद्वैतश्रुतिः शक्या नेतुमित्याशङ्क्य स्ववेद्यत्वपक्षमाश्रित्याह। तस्मादानन्दमिति॥

यथा कथञ्चिद्ब्रह्मण्यानन्दस्य वेद्यत्वे श्रुतीनामानुगुण्यमस्तीत्याह। तथेति। आनन्दो वेद्यो ब्रह्मणीति चोदिते सिद्धान्तमाह। नेति। आगन्तुकमनागन्तुकं वा ज्ञानं मुक्तावानन्दं गोचरयति नाद्य इत्याह। कार्य्येति॥ अनुपपत्तिमेव स्फोरयति। शरीरेति॥ कार्य्यकरणयोरभावेऽपि मोक्षे ब्रह्मानन्दज्ञानं जनिष्यते संसारे हि हेत्वपेक्षेत्याशङ्क्याह॥ देहादीति॥ द्वितीयं दूषयति। एकत्वेति॥ न हि ब्रह्मस्वरूपज्ञानेनैव वेद्यानन्दरूपं भवितुमुत्सहते॥ विषयविषयिणोरेकत्वविरोधात्ततश्चानागन्तुकमपि ज्ञानं मुक्तौ नानन्दमधिकरोतीत्यर्थः। किञ्च ब्रह्म वा मुक्तो वा संसारी वा ब्रह्मानन्दं गोचरयेत्तत्राद्यमनुवदति। परश्चेदिति॥

विज्ञानत्वाद्भिन्नतरमेव विजानीयात्। तत्र संसार्य्यपि संसार-विनिर्मुक्तः स्वाभाव्यं प्रतिपद्येत। जलाशय इवोदकाञ्जलिः क्षिप्तो न पृथक्त्वेन व्यवतिष्ठते। आनन्दात्मकब्रह्मविज्ञानाय। तदा मुक्त आनन्दात्मकमात्मानं वेदयत इत्येतदनर्थकं वाक्यम्। अथ ब्रह्मानन्दमन्यः सम्मुक्तो वेदयते प्रत्यगात्मानन्दं वाहमस्म्यानन्दस्वरूप इति। तदैकत्वविरोधः। तथा च सति सर्वश्रुतिविरोधः। तृतीया च कल्पना नोपपद्यते। किञ्चान्यद्ब्रह्मणश्च निरन्तरात्मानन्दविज्ञाने विज्ञानाविज्ञानकल्पनानर्थक्यं निरन्तरश्चेदात्मानन्दविषयं ब्रह्मणो विज्ञानं तदेव तस्य स्वभाव इतरात्मानन्दं विजानातीति कल्पनानुपपन्ना। अतद्विज्ञानप्रसङ्गे हि

तस्मिन् पक्षे न ब्रह्मरूपानन्दं वेत्ति। तेनैक्यादेकत्र विषयविषयित्वानुपपत्तेरुक्तत्वादिति दूषयति। तत्रेति॥ नापि संसारी ब्रह्मानन्दं गोचरयति। स खल्वनिवृत्ते संसारे संसारिणमात्मानमभिमन्यमानो न ब्रह्मानन्दमाकलयितुमलम्। संसारे निवृत्ते तु ततो विनिर्मुक्तो ब्रह्मस्वाभाव्यं प्रतिपद्यमानस्तदानन्दं तद्वदेव विषयीकर्त्तुं नार्हतीति तृतीयं प्रत्याह। संसार्य्यपीति॥ मुक्तोऽपि ब्रह्मणो भिन्नोऽभिन्नो वेति विकल्प्याभेदपक्षमनुभाषते॥ जलेति॥ ब्रह्माभिन्नस्य मुक्तस्य तदानन्दविषयीकरणं मुक्तन्यायेन निरस्यति। तदेति॥ भेदपक्षमनुवदति। अथेति॥ ब्रह्मानन्दं प्रत्यगात्मानमिति सम्बन्धः। वेदनप्रकारमभिनयति। अहमिति॥ तत्त्वमस्यादिश्रुतिविरोधेन निराकरोति। तदेति॥ मुक्तो ब्रह्मणः सकाशाद्भिन्नोऽभिन्नो वा मा भूद्भिन्नाभिन्नस्तु स्यादित्याशङ्क्याह। तृतीयेति॥ सर्वत्र भेदाभेदवादस्य दूषितत्वादित्यर्थः। ब्रह्मणः स्वानन्दस्यावेद्यत्वे हेत्वन्तरमाह। किञ्चान्यदिति॥ तदेवोपपादयति। निरन्तरश्चेदिति॥ व्याख्यातप्रयोगस्य तर्हि कार्थवत्त्वं तत्राह। अतद्विज्ञानेति। देवदत्तो

कल्पनाया अर्थवत्त्वम्। यथा नं परश्च वेत्तीति। न हि दृष्ट्याद्यासक्तमनसो नैरन्तर्येण ज्ञानाज्ञानकल्पनाया अर्थवत्त्वम्॥

अथ विच्छिन्नमात्मानं विजानातीति। विज्ञानस्यात्मविज्ञानच्छिद्रेऽन्यविषयत्वप्रसङ्गे आत्मनश्च क्रियावत्त्वम्। ततश्चानित्यत्वप्रसङ्गः। तस्माद्विज्ञानमानन्दमिति स्वरूपान्वाख्यानपरैव श्रुतिर्नात्मानन्दसंवेद्यत्वार्था। जक्षत्क्रीडन्रममाणादिश्रुतिविरोधी संवेद्यत्व इति चेन्न। सर्वात्मैकत्वे यथा प्राप्तानुवादित्वात्। मुक्तस्य सर्वात्मभावे सति यच्च क्वचिद्योगिषु देवेषु वा जक्षणादि प्राप्तं तद्यथा प्राप्तमेवा-

---

त्यबुद्धिपूर्व्वकारित्वावस्थायां स्वात्मानमन्यञ्च विविच्य न जानाति तत्त्वदित्यभययाथात्वदर्शनात्तत्राख्यातप्रयोगो युज्यते नैवं ब्रह्मण्यज्ञानप्रसङ्गोऽस्ति नित्यज्ञानस्वभावत्वात्। तथा च तत्राख्यातप्रयोगो नार्थवानित्यर्थः॥ ब्रह्मण्याख्यातप्रयोगानर्थक्यं दृष्टान्तेन स्पष्टयति। न हीति॥

प्रत्यगात्मनि नित्यज्ञानत्वासिद्धिं शङ्कयति। अथेति॥ विच्छिन्नमिति॥ क्रियाविशेषणं परिहरति। विज्ञानस्येति॥ आत्मनो विज्ञानस्य छिद्रमन्तराऽसत्त्वावस्था तदापि विज्ञानमस्ति चेत्तस्यान्यविषयत्वप्रसङ्गस्तथा च यत्रान्यत्पश्यतीत्यादिश्रुतेरात्मनो मर्त्यत्वापत्तिर्न चेत्तदा विज्ञानं तदा पाषाणवदचेतनत्वं विप्रतिपत्त्यनङ्गीकारादित्यर्थः। आत्मनो नित्यज्ञानवत्त्वे दोषान्तरमाह। आत्मनश्चेति॥ आनन्दज्ञाने ब्रह्मणि विषयविषयित्वायोगश्चेत्कथं विज्ञानादिवाक्यमित्याशङ्क्योपसंहरति। तस्मादिति॥ ब्रह्मण्यानन्दस्यावेद्यत्वे श्रुतिविरोधमुक्तं स्मारयति। जक्षदिति॥ सर्वात्मनो मुक्तस्यैक्ये सति योग्यादिषु यथा जक्षणादि प्राप्तं तथैव तदनुवादित्वादस्याः श्रुतेर्न विरोधोऽस्तीति परिहरति। नेत्यादिना॥ तदेव प्रपञ्चयति। मुक्तस्येति॥ किमनुवा-

न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान्पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान्मुदः प्रमुदः सृजते न तत्र

---

रूपेणावभासयद्दृश्यते। तेनात्रायं पुरुषः स्वयं ज्योतिर्भवतीति सिद्धम्॥ ९॥

नन्वत्र कथं पुरुषः स्वयं ज्योतिर्येन जागरित इव ग्राह्यग्राहकादिलक्षणः सर्वो व्यवहारो दृश्यते। चक्षुराद्यनुग्राहकाश्चादित्याद्या लोकास्तथैव दृश्यन्ते यथा जागरिते। तत्र कथं विशेषोऽवधारणं क्रियते। अत्रायं पुरुषः स्वयं ज्योतिर्भवतीत्युच्यते वैलक्षण्यात् स्वप्नदर्शनस्य। जागरिते ह्येन्द्रियबुद्धिमन आलोकादिव्यापारसङ्कीर्णमात्मज्योतिः। इह तु स्वप्न इन्द्रियाभावात्तदनुग्राहकादित्याद्यालोकाभावाच्च विविक्तं केवलं भवति। तस्माद्विलक्षणम्। ननु तथैव विषया उपलभ्यन्ते स्वप्नेऽपि। यथा जागरिते तत्र कथमिन्द्रियाभावाद्वैलक्षण्यमुच्यत इति।

---

स्वप्नावस्थायामात्मनोऽवभासकान्तराभावे फलितमाह। तेनेति॥ ९॥

यदुक्तं स्वप्ने स्वयं ज्योतिरात्मेति तत्प्रकारान्तरेणाक्षिपति। नन्विति॥ अवस्थाद्वये विशेषाभावकृतं चोद्यं दूषयति। उच्यत इति। वैलक्षण्यं स्फुटयति। जागरिते हीति। मनस्तु स्वप्ने सदपि विषयत्वान्न स्वयं ज्योतिष्ट्वविघातीति भावः॥ उक्तं वैलक्षण्यं प्रतीतिमाश्रित्याक्षिपति। नन्विति न तत्रेत्यादिवाक्यं व्याकुर्वन्नुत्तरमाह। शृण्विति। प्रतीतिं घटयति॥ अथ चेति। रथादि सृष्टिमाक्षिपति। कथं पुनरिति। वास-

वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्ताः पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्त्ता ॥ १० ॥

---

शृणु । न तत्र विषयाः स्वप्ने रथादिलक्षणाः । तथा न रथयोगा रथे योज्यन्त इति रथयोगा अश्वादयस्तत्र न विद्यन्ते । न च पन्थानो रथमार्गा भवन्ति । अथ च रथान् रथयोगान् पथश्च सृजते स्वयम् । कथं पुनः सृजते रथादिसाधनानां वृक्षादीनामभावे । ननूक्तमस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्म्मायेत्यन्तःकरणवृत्तिरस्य लोकस्य वासनामात्रा तामपादाय रथादिवासनारूपान्तःकरणवृत्तिस्तदुपलब्धिनिमित्तेन कर्मणा चोद्यमाना दृश्यत्वेन व्यवतिष्ठते तदुच्यते । स्वयं निर्मायेति । तदेवाह रथादीन् सृजत इति । ननु तत्र करणं वा करणानुग्राहकाणि वादित्यादिज्योतींषि तदवभास्या वा रथादयो विषया विद्यन्ते तद्वासनामात्रन्तु केवलं तदुपलब्धिकर्म्मनिमित्तचोदितोद्भूतान्तःकरणवृत्त्या-

---

नामथोत्कृष्टेष्विष्टेत्युत्तरमाह । उच्यत इति ॥ तदुपलब्धिनिमित्तेनेत्यत्र तच्छब्देन वासनात्मिका मनोवृत्तिरेवोक्ता । उक्तमेनं प्रपञ्चयति । नन्वित्यादिना ॥ तदुपलब्धिर्वासनोपलब्धिस्तत्र यत्कर्मनिमित्तं तेन चोदिततया योद्भूतान्तःकरणवृत्तिग्राहकावस्था तदाश्रयं तदात्मकं तद्वासनारूपं दृश्यत इति योजना ॥ तथापि कथमात्मज्योतिः स्वप्ने केवलं सिध्यति तत्राह । तद्यस्येति ॥ तथा बोधादर्शिर्विविक्तो भवति तथा दृश्यायाः बुद्धेर्विविक्तमात्मज्योतिरिति कैवल्यं साधयति । आशरीरेणेति ॥ तथा रथाद्यानन्दादीनि वास्तु ॥ सुखान्येव

अयं दृश्यते। तद्यस्य ज्योतिषो दृश्यन्ते लुप्तदृशस्तदात्मज्योतिरव केवलमसिरिव कोशाद्विविक्तम्। तथा न तत्रानन्दाः सुखविशेषाः मुदो हर्षाः पुत्रादिलाभनिमित्ताः प्रमुदस्त एव प्रकर्षोपेताः॥

अथ चानन्दादीन् सृजते। तथा न तत्र वेशान्ताः पल्वलाः पुष्करिण्यस्तडागाः स्रवन्त्यो नद्यो भवन्ति। अथ वेशान्तादीन् सृजते वासनामात्ररूपान्। यस्मात् स हि कर्त्ता। तद्वासनाश्रयचित्तवृत्त्युद्भवनिमित्तकर्म्महेतुत्वेनेत्यवोचाम तस्य कर्त्तृत्वं न तु साक्षादेव तत्र क्रिया सम्भवति तत्र साधनाभावात्। न हि कारकमन्तरेण क्रिया सम्भवति। न च तत्र हस्तपादादीनि क्रियाकारकाणि सम्भवन्ति। यत्र तु तानि विद्यन्ते जागरिते तत्रात्मज्योतिरवभासितैः कार्य्यकरणैर्यथादिवासनाश्रयान्तःकरणवृत्त्युद्भवनिमित्तं कर्म निर्वर्त्त्यते तेनोच्यते स हि कर्त्तेति। तदुक्तमा-

---

शिष्यन्त इति विशेषः सुखसामान्यानीत्यर्थः॥ तथेत्यानन्दाद्यभावो दृष्टान्तितः। क्षुल्लीयांसि सरांसि पल्वलशब्देनोच्यते। स हि कर्त्तेत्यत्र हि शब्दो यः स्मादित्युक्तस्तस्मात्सृजतीति शेषः॥

कुतोऽस्य कर्त्तृत्वं सहकार्यभावादित्याशङ्क्याह। तद्वासनेति॥ तच्छब्देन वेशान्तादिग्रहणम्। तदीयवासनाधारश्चित्तपरिणामस्तेनोद्भवति यत्कर्म तस्य सृज्यमाननिदानत्वेनेति यावत्॥ मुख्यं कर्त्तृत्वं वारयति। नत्विति॥ तत्रेति स्वप्नोक्तिः। साधनाभावेऽपि स्वप्ने क्रिया किं न स्यादित्याशङ्क्याह। न हीति। तर्हि स्वप्ने कान्यपि भविष्यन्ति नेत्याह। न चेति तर्हि पूर्वोक्तमपि कर्त्तृत्वं कथमिति चेत्तत्राह। यत्रत्विति॥ उक्तेऽर्थे वाक्योपक्रममनुकूलयति। तदुक्तमिति॥ उपक्रमे मुख्यं कर्त्तृत्वं दृह-

तदेते श्लोका भवन्ति। स्वप्नेन शारीरमभि प्रहत्यासुप्तः सुप्तानभिचाकशीति। शुक्रमादाय

---

त्मनैवायं ज्योतिषास्ते पल्ययते कर्म्म कुरुत इति। तत्रापि न परमार्थतः स्वतः कर्त्तृत्वं चैतन्यज्योतिषावभासकत्व-व्यतिरेकेण। यच्चैतन्यात्मज्योतिषान्तःकरणद्वारेणावभास-यति। कार्य्यकरणानि तदवभासितानि कर्म्मसु व्याप्रियन्ते कार्य्यकरणानि। तत्र कर्त्तृत्वमुपचर्य्यत आत्मनः। तदुक्तं ध्यायतीव लेलायतीवेति तदेवानूद्यते स हि कर्त्तेतीह हेत्वर्थम्॥ १०॥

तदेतस्मिन्नुक्तेऽर्थे एते श्लोका मन्त्रा भवन्ति। स्वप्नेन स्वप्नभावेन शारीरं शरीरमभिप्रहत्य निश्चेष्टमापाद्या-सुप्तः स्वयमलुप्तदृगादिशक्तिस्वाभाव्यात् सुप्तान्वासनाकारा-भूतानन्तःकरणवृत्त्याश्रयान् बाह्याध्यात्मिकान् सर्वानेव भावान् स्वेन रूपेण प्रत्यस्तमितान् सुप्तानभिचाकशीत्य-

---

त्वौपचारिकमिति विशेषमाशङ्क्याह। तत्रापीति॥ परमार्थतश्चैतन्यज्यो-तिषो व्यापारवदुपाध्यवभासकत्वव्यतिरेकेण स्वतो न कर्त्तृत्वं वाक्योपक्र-मेऽपि विवक्षितमित्यर्थः॥ आत्मनो वाक्योपक्रमे कर्त्तृत्वमौपचारिक-मित्युपसंहरति। यदिति॥ स हि कर्त्तेत्यौपचारिकं कर्त्तृत्वमित्युच्यते चेत्तस्य ध्यायतीवेत्यादिनोक्तत्वात्पुनरुक्तिरित्याशङ्क्याह। तदुक्तमिति॥ अनुवादे प्रयोजनमाह। हेत्वर्थमिति॥ स्वप्ने रथादिसृष्टाविति शेषः॥१०॥

तदेते श्लोका भवन्तीत्येतत्प्रतीकं गृहीत्वा व्याचष्टे। एते इति। उक्तोऽर्थः स्वयंज्योतिष्ट्वादिः। शरीरमिति स्वार्थे वृद्धिः। स्वयमसुप्तत्वे हेतुमाह। अलुप्तेति॥ व्याख्येयं पदमादाय व्याचष्टे। सुप्तानि-

पुनरेति स्थानꣳ हिरण्मयः पुरुष एकहꣳसः ॥ ११ ॥ प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा । स ईयतेऽमृतो यत्र कामꣳ हिरण्मयः पुरुष एकहꣳसः ॥ १२ ॥ स्वप्नान्त

---

लुप्तयाऽऽत्मदृष्ट्या पश्यत्यवभासयतीत्यर्थः । शुक्रं शुद्धं ज्योतिष्मदिन्द्रियमात्रारूपमादाय गृहीत्वा पुनः कर्मणा जागरितस्थानमेत्यागच्छति हिरण्मयो हिरण्मय इव चैतन्यज्योतिःस्वभावः पौरुषः पुरुष एकहंसः एक एव हन्तीत्येकहंसः । एको जाग्रत्स्वप्नेहलोकपरलोकादीन् गच्छतीत्येकहंसः ॥ ११ ॥ तथा प्राणेन पञ्चवृत्तिना रक्षन् परिपालयन्नन्यथा मृतभ्रान्तिः स्यादवरं निकृष्टमनेकाशुचिसङ्घातत्वादत्यन्तबीभत्सं कुलायं नीडं शरीरं स्वयं तु बहिस्तस्मात्कुलायाच्चरित्वा । यद्यपि शरीरस्थ एव स्वप्नं पश्यति तथापि तत्सम्बन्धाभावात्तत्स्थ इवाकाशो बहिश्चरित्वेत्युच्यते । अमृतः स्वयममरणधर्मा ईयते गच्छति । यत्र कामं यत्र यत्र कामो विषयेषूद्भूतवृत्तिर्भवति तं तं कामं वासनारूपेणोद्भूतं गच्छति ॥ १२ ॥ किञ्च स्वप्नान्ते

---

त्यादिना ॥ उक्तमनूद्य पदान्तरमवतार्य व्याकरोति । सुप्तानभिचाकशीतीति ॥ तथाशब्दः स्वप्नगतविशेषसमुच्चयार्थः । किमिति स्वप्ने प्राणेन शरीरमात्मा पालयति तत्राह । अन्यथेति ॥ बहिश्चरित्वेत्ययुक्तं शरीरस्थस्य स्वप्नोपलम्भादित्याशङ्क्याह । यद्यपीति ॥ तत्सम्बन्धाभावाद्बहिश्चरित्वेत्युच्यते इति सम्बन्धः ॥ देहस्यस्यैव तदसम्बन्धे दृष्टान्तमाह ।

उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि ।
उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन् ॥ १३ ॥
आराममस्य पश्यन्ति न तं पश्यति कश्चनेति ।
तन्नायतं हु बोधयेदित्याः ॥

---

स्वप्नस्थाने उच्चावचमुच्चं देवादिभावमवचं तिर्य्यगादिभावं निकृष्टं तदुच्चावचमीयमानो गम्यमानः प्राप्नुवन्रूपाणि देवो द्योतनावान् कुरुते निवर्त्तयतीति वासनारूपाणि बह्नन्यसङ्ख्येयानि । उत इव अपि स्त्रीभिः सह मोदमान इव जक्षदिव हसन्निव वयस्यैः । उत इव अपि भयानि बिभेत्येभ्य इति भयानि सिंहव्याघ्रादीनि पश्यन्निव ॥ १३ ॥

आराममारमणमाक्रीडामनेन निर्म्मितां वासनारूपामस्यात्मनः पश्यन्ति सर्वे जनाः । ग्रामं नगरं स्त्रियमन्नाद्यमित्यादिवासनानिर्म्मितमाक्रीडनरूपं न तं पश्यति । तं न पश्यति कश्चन । कष्टंभो वर्त्ततेऽत्यन्तविविक्तं दृष्टिगोचरमापन्नमप्यहो भाग्यहीनता लोकस्य यच्छक्यदर्शनमप्यात्मानं तं न पश्यति । लोकं प्रत्यनुक्रोशं दर्शयति श्रुतिः ।

---

ततस्थ इति । स्वप्नस्थं विशेषान्तरमाह । किञ्चेति ॥ उच्चावचं विपर्यीकृत्य देन तेनात्मना स्वेनैव स्वयं गम्यमान इति यावत् ॥११॥१२॥१३॥

आरामं विवृणोति । ग्राममित्यादिना ॥ न तमित्यादेस्तात्पर्य्यमाह । कष्टमिति ॥ दृष्टिगोचरापन्नमपि न पश्यतीति सम्बन्धः । कष्टमित्यादिनोक्तं प्रपञ्चयति । अहो इति ॥ श्लोकानां तात्पर्यमुपसंहरति । अत्यन्तेति । वाक्यान्तरमादाय तात्पर्यमुक्त्वाकाङ्क्षापूर्वकमक्षराणि व्याकरोति ।

दुर्भिषज्यꣳ हास्मै भवति यमेष न प्रतिपद्यते ।

अत्यन्तविविक्तः स्वयं ज्योतिरात्मा स्वप्ने भवतीत्यभिप्रायः । तं नायतं बोधयेदित्याहुः । प्रसिद्धिरपि लोके विद्यते स्वप्न आत्मज्योतिषो व्यतिरिक्तत्वम् । कथम् । तमात्मानं सुप्तमायतं सहसा भृशं न बोधयेदित्याहुरेवं कथयन्ति चिकित्सकादयो जना लोके । नूनं ते पश्यन्ति जाग्रद्देहादिन्द्रियद्वारतोऽपसृत्य केवलो बहिर्वर्त्तत इति यत आहुः ।

तं नायतं बोधयेदिति । तत्र च दोषं पश्यन्ति । भृशं ह्यसौ बोध्यमानः । तानीन्द्रियद्वाराणि सहसा प्रतिबोध्यमानो न प्रतिपद्यत इति । तदेतदाह दुर्भिषज्यं हास्मै भवति यमेष न प्रतिपद्यत इति । तमिन्द्रियद्वारदेशं यस्माद्देशाच्छुक्रमादायापसृतस्तमिन्द्रियदेशमेष आत्मा पुनर्न प्रतिपद्यते । कदाचिद्व्यत्यासेनेन्द्रियमात्राः प्रवेशयति । तत

---

तत्रेत्यादिना ॥ तेषामभिप्रायमाह । नूनमिति ॥ इन्द्रियाख्येव द्वाराण्यस्येतीन्द्रियद्वारो जाग्रद्देहस्तस्मादिति यावत् ॥

तथापि सहसासौ बोध्यतां का हानिरित्याशङ्क्याह । तत्रेति । सहसा बोध्यमानत्वं सप्तम्यर्थः । किमत्र प्रमाणमित्याशङ्क्यानन्तरवाक्यमवतार्य व्याचष्टे । तदेतदाहेत्यादिना ॥ पुनरप्रतिपत्तौ दोषप्रसङ्गं दर्शयति । कदाचिदिति ॥ व्यत्यासप्रवेशस्य कार्यं दर्शयन्दुर्भिषज्यमित्यादि व्याचष्टे । तत इति ॥ उक्तां प्रसिद्धिमुपसंहरति । तस्मादिति ॥ वृत्तमनूद्य मतान्तरमुत्थापयति । स्वप्नो भूत्वेत्यादिना । इति शब्दो यस्मादर्थे ॥ तदेव मतान्तरं स्फोरयति । नेत्यादिना ॥ उक्तमङ्गीकृत्य फलं

**अथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत्पश्यति तानि सुप्त इत्यत्रायं पुरुषः**

---

आन्ध्यबाधिर्यादिदोषप्राप्तौ दुर्भिषजं दुःखमभिपद्यमानता ह्यस्मै देहाय भवति दुःखेन चिकित्सनीयोऽसौ देहो भवतीत्यर्थः। तस्मात्प्रसिद्धयापि स्वप्ने स्वयं ज्योतिष्ट्वमस्य गम्यते। स्वप्नो भूत्वातिक्रान्तो मृत्योरूपाणीति। तस्मात् स्वप्ने स्वयं ज्योतिरात्मा अथो अपि खल्वन्य आहुर्जागरितदेश एवास्यैष यः स्वप्नः। न सन्ध्यं स्थानान्तरमिहलोकपरलोकाभ्यां व्यतिरिक्तम्। किं तर्हि इहलोक एव जागरितदेशः। यद्येवं किञ्चातः शृणुतो यद्भवति यदा जागरितदेश एवायं स्वप्नस्तदायमात्मा कार्य्यकरणेभ्यो न व्यावृत्तस्तैर्मिश्रीभूतः। अतो न स्वयं ज्योतिरात्मेत्यतः स्वयं ज्योतिष्ट्वबाधनायान्य आहुर्जागरितदेश एवास्यैष इति। तत्र च हेतुमाचक्षते। जागरितदेशत्वे यानि हि यस्माद्धस्त्या-

---

ष्टृच्छति। यद्येवमिति॥ स्वप्नो जागरितदेश इत्येवं यदीष्टमतश्च किं स्यादिति प्रश्नार्थः॥ फलं प्रतिज्ञाय प्रकटयति। शृणिवति॥ मतान्तरोपन्यासस्य स्वमतविरोधित्वमाह। इत्यत इति॥ स्वप्नस्य जाग्रद्देशत्वं दूषयति। तदसदिति॥ तस्य जाग्रद्देशत्वाभावे फलितमाह। तस्मादिति॥ स्वप्ने वाह्यज्योतिषः सम्भवो नास्तीत्यत्र प्रमाणमाह। तदुक्तमिति॥ वाह्यज्योतिरभावेऽपि स्वप्ने व्यवहारदर्शनात्तत्र स्वयं ज्योतिष्ट्वमात्मनो दुष्परिहार्यमित्युपसंहरति। तस्मादिति॥ कथं पुनर्विद्यायामनुक्तायां सहस्रदानवचनमित्याशङ्क्य वृत्तं कीर्त्तयति। स्वयं ज्योतिरिति। मृत्योरूपाण्यतिक्रामतीत्यत्र च कार्यकरणव्यतिरिक्तत्वमात्मनो दर्शितमि-

स्वयं ज्योतिर्भवति सोऽहं भगवते सहस्रं ददाम्यत ऊर्द्ध्वं विमोक्षाय ब्रूहीति ॥ १४ ॥

---

दीनि पदार्थजातानि जाग्रज्जागरितदेशे पश्यति लौकिकस्तान्येव सुप्तोऽपि पश्यतीति । तदसत् इन्द्रियोपरमात् । उपरतेषु हीन्द्रियेषु स्वप्नान् पश्यति । तस्मान्नान्यस्य ज्योतिषस्तत्र सम्भवोऽस्ति । तदुक्तं न तत्र रथा न रथयोगा इत्यादि । तस्मादत्रायं पुरुषः स्वयं ज्योतिर्भवतीत्येव स्वयं ज्योतिरात्मास्तीति स्वप्ननिदर्शनेन प्रदर्शितम् । अतिक्रामति मृत्यो रूपाणीति च । क्रमेण सञ्चरन्निहलोकपरलोकादीनिहलोकपरलोकादिव्यतिरिक्तः । तथा जाग्रत्स्वप्नकुलायाभ्यां व्यतिरिक्तः । तत्र च क्रमसञ्चारान्नित्यश्चेत्येतत्प्रतिपादितं याज्ञवल्क्येन । अतो विद्यानिष्क्रियार्थं सहस्रं ददामीत्याह जनकः । सोऽहमेवं बोधितस्त्वया भगवते तुभ्यं सहस्रं

---

त्याह । अतिक्रामतीति ॥ लोकद्वयसञ्चारवशादुक्तमर्थमनुद्रवति । क्रमेणेति ॥ आदिशब्दस्तत्तद्देहादिविषयः । स्थानद्वयसञ्चारवशादुक्तमनुभाषते । तथेति ॥ इहलोकपरलोकाभ्यामिवेति यावत् । लोकद्वये स्थानद्वये च क्रमसञ्चारप्रयुक्तमर्थान्तरमाह । तत्र चेति ॥ आत्मनः स्वयं ज्योतिषो देहादिव्यतिरिक्तस्य नित्यस्य स्थापितत्वादित्यतः शब्दार्थः । कामप्रश्नस्य निर्णीतत्वान्निराकाङ्क्षत्वमिति शङ्कां वारयति । विमोक्षायेति ॥ सम्यग्बोधस्तद्धेतुरिति यावत् । ननु स एव प्रागुक्तो नासौ वक्तव्योऽस्ति तत्राह । तदुपयोगीति ॥ अयमित्युक्तात्मप्रत्ययोक्तिः । तादर्थ्यात्पदार्थज्ञानस्य वाक्यार्थज्ञानशेषत्वादिति यावत् ॥ पदार्थस्य वाक्यार्थवहिर्भावं दूषयति । तदेकदेश एवेति ॥ कामप्रश्नो नाद्यापि निर्णीत इत्यतो-

स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च ।

ददामि। विमोक्षय कामप्रश्नो मयाभिप्रेतः। तदुपयोग्योऽयं तादर्थ्यात्तदेकदेश एव। अतस्त्वां नियोक्ष्यामि समस्तकामप्रश्ननिर्णयश्रवणेन विमोक्षायात ऊर्द्ध्वं ब्रूहि। येन संसाराद्विप्रमुच्येयम्। त्वत्प्रसादाद्विमोक्षपदार्थैकदेश-निर्णयहेतोः सहस्रदानम् ॥ १४ ॥

यत्प्रस्तुतमात्मनैवायं ज्योतिषाऽऽस्त इति तत्प्रत्यक्षतः प्रतिपादितम्। अत्रायं पुरुषः स्वयं ज्योतिर्भवतीति। स्वप्ने यत्तूक्तं स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्योरूपाणीति। तत्रैतदाशङ्क्यते। मृत्योरूपाण्येवातिक्रामति तन्मृत्युम्। प्रत्यक्षं ह्येतत्। स्वप्ने कार्यकरणव्यावृत्तस्यापि मोदत्रासादिदर्शनम्। तस्मान्नूनं नैवायं मृत्युमतिक्रामति कर्म्मणो हि मृत्योः

त्तरवाक्यं गमकमित्याह। अत इति॥ कामप्रश्नस्यानिर्णीतत्वादिति यावत्। तेनापेक्षितेन हेतुनेत्यर्थः॥ विमोक्षशब्दस्य सम्यग्ज्ञानविषयत्वं सूचयति। येनेति॥ सम्यग्ज्ञानप्राप्तौ गुरुप्रसादस्य प्राधान्यं दर्शयति। त्वत्प्रसादादिति॥ ननु विमोक्षपदार्थो निर्णीतोऽन्यथा सहस्रदानस्याकस्मिकत्वप्रसङ्गादत आह। विमोक्षेति॥ १४॥

उत्तरकण्डिकामवतारयितुं वृत्तं कीर्त्तयति। यत्प्रस्तुतमिति॥ आत्मनैवेत्यादिना यदात्मनः स्वयं ज्योतिष्ट्वं ब्राह्मणादौ प्रस्तुतं तदत्रायमित्यादिना प्रत्यक्षतः स्वप्ने प्रतिपादितमिति सम्बन्धः। वृत्तमर्थान्तरमनूद्य चोद्यमुत्थापयति॥ यत्तूक्तमिति॥ मृत्युं नातिक्रामतीत्यत्र हेतुमाह। प्रत्यक्षं हीति। इच्छाद्वेषादिरादिशब्दार्थः॥ तथापि कुतो

कार्य्यं मोदकामादि दृश्यते। यदि च मृत्युना ग्रह एवायं स्वभावतस्ततो विमोक्षो नोपपद्यते। न हि स्वभावात् कश्चि-द्विमुच्यते। अथ स्वभावो न भवति मृत्युस्ततस्तस्मान्मोक्ष उपपत्स्यते। यथासौ मृत्युरात्मीयो धर्मो न भवति ततः प्रदर्शनायात ऊर्द्धं विमोक्षाय ब्रूहीत्येवं जनकेन पर्य्यनु-युक्तो याज्ञवल्क्यस्तद्विदर्शयिषया प्रवर्त्तते। स वै प्रकृतः स्वयं ज्योतिः पुरुषः। एष यः स्वप्ने दर्शित एतस्मिन् संप्रसादे सम्यक् प्रसीदत्यस्मिन्निति सम्प्रसादः। जागरिते देहेन्द्रिय-व्यापारशतसन्निपातजं हित्वा कालुष्यं तेभ्यो विप्रमुक्त ईष-त्प्रसीदति स्वप्ने। इह तु सुषुप्ते सम्यक् प्रसीदतीत्यतः सुषुप्तं सम्प्रसाद उच्यते। तीर्णो हि तदा सर्वान् शोकान् भवति।

---

मृत्युर्नातिक्रामति तत्राह। तस्मादिति॥ कार्य्यस्य कारणादन्यत्र प्रवृ-त्त्ययोगादिति यावत्॥ उक्तमुपपादयति। कर्म्मणो हीति॥ अतः स्वप्नं गतो मृत्युं कर्माख्यं नातिक्रामतीति शेषः॥ मा तर्हि मृत्योरतिक्रमो-ऽभूत्को दोषस्तत्राह। यदि चेति। स्वभावादपि मृत्योर्विमुक्तिमाशङ्क्याह। न हीति॥ उक्तं हि न हि स्वभावो भावानां व्यावर्त्तेतौष्ण्यवद्रवेरिति। कथं तर्हि मोक्षोपपत्तिरित्याशङ्क्याह। अथेति॥ एषा च शङ्का प्रागेव राज्ञा कृतेति दर्शयन्नुत्तरमुत्थापयति। यथेत्यादिना॥ तद्विदर्शयिष-येत्यत्र तच्छब्देन मृत्योरतिक्रमणं गृह्यते॥ वैशब्दस्य प्रसिद्धार्थत्वमुपेत्य सशब्दार्थमाह। स वै प्रकृत इति॥ एषशब्दमनूद्य व्याकरोति। एष इति॥ सम्यक्प्रसादे स्थित्वा मृत्युमतिक्रामतीति शेषः। सुषुप्तस्य सम्प्र-सादत्वं साधयति। जागरित इत्यादिना। तत्र वाक्यशेषमनुकूलयति। तीर्णो हीति। अस्तु सम्यक् प्रसादः सुषुप्तं स्थानं तथापि किमायात-मित्यत आह॥ स वा इति॥ पूर्वोक्तेन क्रमेण सम्यक् प्रसादे सुषुप्ते

सलिल एको द्रष्टेति हि वक्ष्यति। सुषुप्तस्थमात्मानं स वा एष एतस्मिन् सम्प्रसादे क्रमेण सम्प्रसन्नः सन् सुषुप्ते स्थित्वा कथं सम्प्रसन्नः। स्वप्नात् सुषुप्तं प्रविविक्षुः स्वप्नावस्थ एव रत्वा रतिमनुभूय मित्रबन्धुजनदर्शनादिना चरित्वा विहृत्या-नेकधा चरणफलं श्रममुपलभ्येत्यर्थः। दृष्ट्वैव न कृत्वेत्यर्थः। पुण्यञ्च पुण्यफलं पापञ्च पापफलम्। न तु पुण्यपापयोः सा-क्षाद्दर्शनमस्तीत्यवोचाम। तस्मान्न पुण्यपापाभ्यामनुबद्धः। यो हि करोति पुण्यपापे स ताभ्यामनुबध्यते। न हि दर्शन-मात्रेणैतदनुबद्धः स्यात्। तस्मात् स्वप्नो भूत्वा मृत्युमतिक्रा-मत्येव न मृत्युरूपाण्येव केवलम्। अतो न मृत्योरात्मस्व-भावत्वाशङ्का। मृत्युश्चेत् स्वभावोऽस्य स्वप्नेऽपि कुर्यात्। नतु

---

स्थित्वा सम्यक् प्रसन्नः सन् मृत्युमतिक्रामतीत्यर्थः॥ उक्तमर्थमुपपाद-यितुमाकाङ्क्षामाह। कथमिति॥ रत्वेत्यादि व्याकुर्वन्नुपरिहरति। स्व-प्नादिति॥ पुण्यपापशब्दयोर्यथाश्रुतार्थत्वमाशङ्क्याह। न त्विति। अ-वोचाम भयानृपात्मन आनन्दांश्च पश्यतीत्यत्रेति शेषः। पुण्यपापयो-र्दर्शनमेव न करणमित्यत्र फलितमाह। तस्मादिति। तद्द्रष्टुरपि तदनुबन्धः स्यादित्याशङ्क्यातिप्रसङ्गान्मैवमित्याह। यो हीत्यादिना॥ पुण्यपापाभ्यामात्मनोऽसंस्पर्शे फलितमाह। तस्मादिति॥ मृत्योरति-क्रमणे किं स्यादित्याशङ्क्याह॥ अतो नेति॥ मृत्योरस्वभावत्वमुपपा-दयति॥ मृत्युश्चेदिति। इष्टापत्तिमाशङ्क्याह। न त्विति॥ अनन्वा-गतवाक्यादसङ्गवाक्याच्चेत्यर्थः॥ मोक्षशास्त्रप्रामाण्यादपि मृत्योरस्वभाव-त्वमित्याह। न त्विति॥ अभावादिति छेदः। तस्याः स्वभावत्वे लक्षणं कथयति। अत इति॥ मृत्युमेव व्याचष्टे। पुण्यपापाभ्या-मिति। स्वप्ने मृत्योः स्वभावत्वाभावेऽपि जाग्रदवस्थायां कर्तृत्वमात्मनः स्वभावः। तथा च नियमेन तस्य मृत्योरतिक्रमो न सिध्यतीति शङ्कते।

पुनः प्रतिन्यायं प्रतियोन्या द्रवति स्वप्नायैव

करोति स्वभावश्चेत् क्रियाऽस्य निर्मोक्षतैव स्यात्। न तु स्वभावः स्वप्नेऽभावात्। अतो विमोक्षोऽस्योपपद्यते मृत्योः पुण्यपापाभ्यां न तु जागरितेऽस्य स्वभाव एव। न हि बुद्ध्याद्युपाधिकृतं हि तत्। तच्च प्रतिपादितं साहृश्यात्। ध्यायतीव लेलायतीवेति॥

तस्मादेकान्तेनैव स्वप्ने मृत्युरूपातिक्रमणाच्च स्वाभाविकत्वाशङ्काऽनिर्मोक्षता वा। तत्र चरित्वापि चरणफलं श्रममुपलभ्येत्यर्थः। सम्प्रसादानुभवोत्तरकालं पुनः प्रतिन्यायं यथान्यायं यथागतं नि आयो न्यायः। अयनमायो निगमनं पुनः पूर्वगमनवैपरीत्येन यदागमनं स प्रतिन्यायः यथागतं पुनरागच्छतीत्यर्थः। प्रतियोनि यथास्थानं स्वप्नस्थानम्। स्वप्नस्थानाद्धि सुषुप्तिं प्रतिपन्नः। स यथास्थानमेव पुनरागच्छतीति। प्रतियोन्या द्रवति स्वप्नायैव

---

न त्विति। औपाधिकत्वात्कर्तृत्वस्य स्वाभाविकत्वाभावादात्मनो मृत्योरतिक्रमः सम्भवतीति परिहरति॥ नेति॥ कथमौपाधिकत्वं कर्तृत्वस्य सिद्धवदुच्यते तत्राह। तच्चेति। ध्यायतीवेत्यादौ साहश्यवाचकादिवशब्दादौपाधिकं कर्तृत्वस्य प्रागेव दर्शितमित्यर्थः। जागरितेऽपि कर्तृत्वस्य स्वाभाविकत्वाभावे फलितमाह॥ तस्मादिति॥

मृत्योः स्वाभाविकत्वाशङ्काभावकृतं फलमाह। अनिर्मोक्षता वेति। वाशब्दो नञ् कर्षणार्थः॥ पुण्यञ्च पापञ्चेत्येतदन्तं वाक्यं व्याख्याय पुनरित्यादि व्याचष्टे। तत्र इति। स्वप्नाद्युत्थाय सुषुप्तिमनुभूयोत्तरकालमिति यावत्। स्थानात् स्थानान्तरप्राप्त्यभ्यासं वक्तुं पुनःशब्दः।

स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य । सोऽहं भग-

---

स्वप्नस्थानायैव । ननु स्वप्ने न करोति पुण्यपापे तयोः फलमेव पश्यतीति कथमवगम्यते । यथा जागरिते तथा करोत्येवं स्वप्नेऽपि तुल्यत्वाद्दर्शनस्येति । न । यत आह स आत्मा यत्किञ्चित्तत्र स्वप्ने पश्यति पुण्यपापफलम् । अनन्वागतोऽननुबद्धस्तेन दृष्टेन भवति । नैवानुबद्धो भवतीति । यदि हि स्वप्ने कृतमेव तेन स्यात्तेनानुबध्येत । स्वप्नादुत्थितोऽपि समन्वागतः स्यात् । न च तल्लोके स्वप्नकृतकर्म्मणाऽनन्वागतत्वप्रसिद्धिः । न हि स्वप्नकृतेनागसाऽऽगस्कारिणमात्मानं मन्यते कश्चित् । न च स्वप्नदृष्टागः श्रुत्वा लोकस्तं गर्हयति परिहरति

---

प्रविन्यायमित्यस्यावयवार्थमुक्त्वा विवक्षितमर्थमाह । पुनरिति ॥ सम्प्रसादादूर्द्ध्वमिति यावत् । जागरितात् स्वप्नं ततः सुषुप्तं गच्छतीति पूर्वगमनं ततो वैपरीत्येन सुषुप्तात् स्वप्नं जागरितं वा गच्छतीति यदागमनं स प्रतिन्यायस्तमेव सङ्क्षिपति ॥ यथेति । यथा स्थानमाद्रवतीत्यत्र तद्विवक्षोति । स्वप्नस्थानादिति ॥ उक्तेऽर्थे वाक्यं पातयति । प्रतियोनीति ॥ किमर्थं यथा स्थानमागमनं तदाह । स्वप्नस्थानायैवेति ॥ स यदित्यादिवाक्यस्य व्यावर्त्त्यामाशङ्कामाह । नन्विति ॥ तत्र वाक्यमुत्तरत्वेनावतार्य्य व्याकरोति । यत आहेति ॥ अननुबद्ध इत्यस्यार्थं स्फुटयति । नैवेति ॥ स यदित्यादिवाक्यस्याक्षरार्थमुक्त्वा तात्पर्य्यमाह । यदि हीति ॥ तेनात्मनेति यावत् । स्वप्ने कृतं कर्म्म पुनस्तेनेत्युक्तं अनुबन्धे दोषमाह । स्वप्नादिति ॥ इष्टापत्तिमाशङ्क्याह । न चेति ॥ स्वप्नकृतेन कर्म्मणा जाग्रद्रूपस्य पुरुषस्यान्वागतत्वप्रसिद्धिरिति यदुच्यते तन्न व्यवहारभूमौ सम्प्रतिपन्नमित्यर्थः । स्वप्नदृष्टेन नापहृतस्य न समान्तिरितात्र स्वानुभव

वते सहस्रं ददाम्यत ऊर्द्ध्वं विमोचायैव ब्रूहीति ॥ १५ ॥

---

वा। अतोऽनन्वागत एव तेन भवति। तस्मात्स्वप्ने कुर्वन्निवो पलभ्यते न तु क्रियाऽस्ति परमार्थतः। उतेव स्त्रीभिः सह मोदमान इवेति। श्लोक उक्तः। आख्यातारश्च स्वप्नस्य सहैव शब्देनाचक्षते। हस्तिनोऽद्य घटीकृता धावन्तीव मया दृष्टा इति। अतो न तस्य कर्तृत्वमिति। कथं पुनरस्याऽकर्तृत्वमिति। कार्यकरणैर्मूर्त्तैः संश्लेषो मूर्त्तस्य स तु क्रियाहेतुर्दृष्टः। न ह्यमूर्त्तः कश्चित् क्रियावान्दृश्यतेऽमूर्त्तश्चात्मातोऽसङ्गो यस्माच्चासङ्गो ह्ययं पुरुषस्तस्मादन्वागतस्तेन स्वप्नदृष्टेन। अत एव न क्रियाकर्तृत्वमस्य कथञ्चिदुपपद्यते। कार्यकरणसंश्लेषेण हि कर्तृत्वं स्यात्स च संश्लेषः संयोगोऽस्य

---

दर्शयति। न हीति॥ यथोक्तेऽनुभवे लोकस्यापि सम्मतिं दर्शयति। न चेति। तत्र फलितमाह। अत इति॥ कथं तर्हि स्वप्ने कर्तृत्वप्रतीतिस्तत्राह। तस्मादिति॥ स्वप्नस्याभासत्वान्न तत्र वस्तुतोऽस्ति क्रियेत्याह। उतेवेति॥ तदाभासत्वे लोकप्रसिद्धिमनुकूलयति। आख्यातारश्चेति॥ स्वप्नस्याभासत्वे फलितमाह। अत इति। अनन्वागतवाक्यं प्रतिज्ञारूपं व्याख्यायासङ्गवाक्यं हेतुरूपमवतारयितुमाकाङ्क्षामाह। कथमिति। मूर्त्तस्य मूर्त्तान्तरेण संयोगे क्रियोपलम्भादमूर्त्तस्य तदभावादात्मनश्चामूर्त्तत्वेनासंयोगः क्रियायोगादकर्त्तृत्वसिद्धिरित्युत्तरं हेतुवाक्यार्थकथनपूर्वकं कथयति। कार्यकरणैरित्यादिना। आत्मनोऽसङ्गत्वेनाकर्तृत्वमुक्तं समर्थयते। अत एवेति॥ अतःशब्दार्थं विशदयति। कार्येति॥ क्रियावत्त्वाभावे जन्ममरणादिराहित्यं कौटस्थ्यं फलतीत्याह। तस्मादिति। कर्मप्रविवेकमुक्तमङ्गीकरोति। एवमिति। तत्प्रविविक्तात्मज्ञाने

स वा एष एतस्मिन् स्वप्ने रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्या द्रवति बुद्धान्तायैव स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञ-

---

नास्ति यतोऽसङ्गो ह्ययं पुरुषः। तस्मादस्मृत एवमेवैतद्याज्ञवल्क्य। सोऽहं भगवते सहस्रं ददाम्यत ऊर्द्ध्वं विमोक्षायैव ब्रूहि। मोक्षपदार्थैकदेशस्य कर्म्मप्रविवेकस्य सम्यग्दर्शितत्वादत ऊर्द्ध्वं विमोक्षायैव ब्रूहीति ॥ १५ ॥

तत्रासङ्गो ह्ययं पुरुष इत्यसङ्गताकर्त्तृत्वे हेतुरुक्तः। उक्तञ्च पूर्वं कामवशात् स ईयते यत्र काममिति। कामश्च सङ्गोऽतोऽसिद्धो हेतुरुक्तः। असङ्गो ह्ययं पुरुष इति। न त्वेतदस्ति। कथं तर्ह्यसङ्ग एवेत्येतदुच्यते। स वा एष एतस्मिन् स्वप्ने स वै एष पुरुषः सम्प्रसादात्प्रत्यागतः स्वप्ने रत्वा

---

दार्थं सूचयति। सोऽहमिति॥ नैराकाङ्क्षं व्यावर्त्तयति। अत इति। कथं तर्हि सहस्रदानमितप्राशङ्क्याह। मोक्षेति॥ कामप्रविवेकविषयनियोगमभिप्रेत्य पुनरनुक्रामति। अत ऊर्द्ध्वमिति ॥ १५ ॥

उत्तरकण्डिकाव्यावर्त्त्यां शङ्कामाह। तत्रेति॥ पूर्वकण्डिकासम्बन्धार्थः। भयत्वकर्तृत्वहेतुरसङ्गत्वं किन्तावतेत्याशङ्क्याह। उक्तञ्चेति। पूर्वश्लोकोपन्यासदशायामिति यावत्। कर्मवशात् स्वप्नहेतुकर्मसामर्थ्यादित्यर्थः। आत्मनः स्वप्ने कामकर्मसम्बन्धेऽपि किमिति नासङ्गत्वं तत्राह। कामश्चेति॥ हेत्वसिद्धिं परिहरति। न त्विति॥ न चेद्धेतोरसिद्धत्वं किं तर्हि कथं तत्सिद्धिरिति पृच्छति। कथमिति॥ हेतुसम-

वल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्द्ध्वं विमोक्षायैव ब्रूहीति ॥ १६ ॥

स वा एष एतस्मिन् बुद्धान्ते रत्वा चरित्वा

चरित्वा यथा कामं दृष्ट्वैव पुण्यञ्च पापञ्चेति सर्वं पूर्ववद्बुद्धान्तायैव जागरितस्थानाय। तस्मादसङ्ग एवायं पुरुषः। यदि स्वप्ने सङ्गवान् स्यात् कामी ततस्तत्सङ्गजैर्दोषैर्बुद्धान्ताय प्रत्यागतो लिप्येत ॥ १६ ॥

यथासौ स्वप्नेऽसङ्गत्वात्स्वप्नसङ्गजैर्दोषैर्जागरिते प्रत्यागतो न लिप्यते। एवं जागरितसङ्गजैरपि दोषैर्न लिप्यत एव बुद्धान्ते। तदेतदुच्यते। स वा एष एतस्मिन् बुद्धान्ते जागरिते रत्वा चरित्वेत्यादि पूर्ववत्। यत्तत्र बुद्धान्ते किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इति। ननु दृष्ट्वैवेति कथमवधार्यते करोति च तत्र पुण्यपापे तत्फलञ्च

र्थेनार्थमुत्तरग्रन्थमुत्थापयति। असङ्ग इति। प्रतियोन्याद्रवतीत्येतदन्तं सर्वमित्युक्तम्। स्वप्ने कर्तृत्वाभावस्तच्छब्दार्थः। उक्तमसङ्गत्वं व्यतिरेकमुखेन विशदयति ॥ यदीति ॥ सङ्गवानित्यस्य व्याख्यानम्। कामीति। तत्सङ्गजैस्तत्र स्वप्नविषयविशेषेषु कामाख्यसङ्गवशादुत्पन्नैरपराधैरिति यावत्। न तु लिप्यते प्रायश्चित्तविधानस्यापि स्वप्नदृष्टवताशुभाशङ्कानिवर्हणार्थत्वाद्वस्तुवृत्तानुसारित्वाभावादिति शेषः ॥ १६ ॥

उक्तमर्थं दृष्टान्तीकृत्य जागरितेऽपि निर्लेपत्वमात्मनो दर्शयति यथेत्यादिना ॥ तत्र प्रमाणमाह। तदेतदिति ॥ जाग्रदवस्थायामुक्तमकर्तृत्वमाक्षिपति। नन्विति ॥ तत्र कल्पितं कर्तृत्वमित्युत्तरमाह। नेत्यादिना ॥ तदेव विवृणोति। आत्मनैवेति। स्वतोऽकर्तृत्वे वाक्योपक्रमं संवादयति। तथा चेति ॥ वाक्यार्थं संगृह्णाति। बुद्ध्यादीति। कर्तृ-

**दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नान्तायैव ॥ १७ ॥**

पश्यति। न कारकावभासकत्वेन कर्तृत्वोपपत्तेः। आत्मनैवायं ज्योतिषाऽऽस्त इत्यादिनात्मज्योतिषावभासितः कार्य्यकरणसङ्घातो व्यवहरति। तेनास्य कर्तृत्वमुपचर्यते न स्वतः कर्तृत्वम्। तथाचोक्तं ध्यायतीव लेलायतीवेति। बुद्ध्याद्युपाधिकृतमेव न स्वतः। इह तु परमार्थापेक्षयोपाधिनिरपेक्षमुच्यते। दृष्ट्वैव पुण्यञ्च पापञ्च न कृत्वेति तेन न पूर्वापरव्याघाताशङ्का। यस्मान्निरुपाधिकः परमार्थतो न करोति न लिप्यते क्रियाफलेन। तथा च व्यासेन भगवतोक्तम्। अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः। शरीरस्थोऽपि कौन्तेय न करोति न लिप्यत इति। तथा सहस्रदानन्तु कामप्रश्नविवेकस्यादर्शितत्वात्। तथा स वा एष एतस्मिन् स्वप्ने स वा एष एतस्मिन् बुद्धान्त इत्येताभ्यां कण्डिकाभ्यामसङ्गतैव प्रतिपादिता। यस्माद्बुद्धान्ते कृते न

---

त्वमिति शेषः। नन्वौपाधिकं कर्तृत्वं पूर्वमुक्तमिदानीं तन्निराकरणे पूर्वोत्तरविरोधः स्यादित्यत्राह। इह त्विति॥ उपाधिनिरपेक्षः कर्तृत्वाभाव इति शेषः। तेनेत्युक्तं हेतुं स्फुटयति। यस्मादिति। आत्मनो लेपाभावे भगवद्वाक्यमपि प्रमाणमित्याह। तथा चेति। अवस्थात्रयेऽपि असङ्गत्वमनन्वागतत्वं चात्मनः सिद्धञ्चेद्विमोक्षपदार्थस्य निर्णीतत्वाज्जनकस्य नैराकाङ्क्षमित्याशङ्क्याह। तथेति॥ यथा मोक्षैकदेशस्य कर्मविवेकस्य दर्शितत्वात्पूर्वत्र सहस्रदानमुक्तं तथात्रापि तदेकदेशस्य कामविवेकस्य दर्शितत्वात्तद्दानं न तु कामप्रश्नस्य निर्णीतत्वादित्यर्थः। द्वितीततीयकण्डिकयोस्तात्पर्य्यं सङ्गृह्णाति। तथेत्यादिना। यथा प्रथमकण्डि-

स्वप्नान्तगतः सम्प्रसन्नोऽसम्बद्धो भवति पुण्यादिकार्यादर्शनात् तस्मात्त्रिष्वपि स्थानेषु स्वतोऽसङ्ग एवायम्। अतोऽमृतः स्थानत्रयधर्मविलक्षणः प्रतियोन्या द्रवति स्वप्नान्तायैव सम्प्रसादायेत्यर्थः। दर्शनवृत्तेः स्वप्नस्य स्वप्नशब्देनाभिधानदर्शनादन्तशब्देन च विशेषणोपपत्तेः। एतस्मा अन्ताय धावतीति च सुषुप्तं दर्शयिष्यति। यदि पुनरेवमुच्यते स्वप्नान्ते रत्वा चरित्वा एतावुभावन्तावनुसञ्चरति। स्वप्नान्तञ्च बुद्धान्तञ्चेति दर्शनात् स्वप्नान्तायैवेत्यत्रापि दर्शनवृत्तिरेव स्वप्नदर्शन इति। तथापि न किञ्चिद्दुष्यति असङ्गता हि सिषाधयिषिता सिध्यत्येव। यस्माज्जागरिते दृष्ट्वैव पुण्यस्य पापस्य रत्वा चरित्वा च स्वप्नान्तभावतो न जागरितदोषेणानुगतो भवति॥ १८॥

---

तया कर्मविवेकः प्रतिपादितस्तथेति यावत्। कण्डिकात्रितयार्थं सङ्क्षिप्योपसंहरति। यस्मादिति। अवस्थात्रयेऽप्यसङ्गत्वे किं सिद्धमिति तदाह। अत इति। प्रतीकमादाय स्वप्नान्तशब्दार्थमाह। प्रतियोन्येति। अयं पुनस्तस्य सुषुप्तविषयत्वमत आह। दर्शनवृत्तेरिति। दर्शनं वासनामयं तस्य वृत्तिर्यस्मिन्निति व्युत्पत्त्या स्वप्नो दर्शनवृत्तिस्तस्य स्वप्नशब्देनैव सिद्धत्वादन्तशब्दवैयर्थ्यात्तस्यान्तो लयो यस्मिन्निति व्युत्पत्त्या स्वप्नान्तशब्देन सुषुप्तपक्षे चान्तशब्देन स्वप्नव्यावृत्त्युपपत्तेरत्र सुषुप्तस्थानमेव स्वप्नान्तशब्दितमित्यर्थः। तत्रैव वाक्यशेषानुगुण्यमाह। एतस्मा इति। स्वप्नान्तशब्दस्य स्वप्ने प्रयोगदर्शनादिहापि तस्यैव तेन ग्रहणमिति पक्षान्तरमुत्थाप्याङ्गीकरोति। यदीत्यादिना। सिषाधयिषितार्थसिद्धौ हेतुमाह। यस्मादिति॥ १७॥

तद्यथा महामत्स्य उभे कूलेऽनुसञ्चरति पूर्वं चापरं चैवमेवायं पुरुष एतावुभावन्तावनुसञ्चरति स्वप्नान्तं च बुद्धान्तं च ॥ १८ ॥

एवमयं पुरुष आत्मा स्वयं ज्योतिः कार्य्यकरणविलक्षणस्तत्प्रयोजकाभ्यां कामकर्म्मभ्यां विलक्षणो यस्मादसङ्गो ह्ययं पुरुषोऽसङ्गत्वादित्ययमर्थः । स वा एष एतस्मिन् सम्प्रसाद इत्याद्याभिस्तिसृभिः कण्डिकाभिः प्रतिपादितः । तत्रासङ्गतैवात्मनः कुतो यस्माज्जागरितात् स्वप्नं स्वप्नाच्च सम्प्रसादः सम्प्रसादाच्च पुनः स्वप्नं क्रमेण बुद्धान्तं जागरितं बुद्धान्ताच्च पुनः स्वप्नान्तमित्येवमनुक्रमसञ्चारेण स्थानत्रयस्य व्यतिरेकः साधितः पूर्व्वञ्चोपन्यस्तोऽयमर्थः । स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्योरूपाणीति । तं विस्तरेण प्रतिपाद्य केवलं दृष्टान्तमात्रमवशिष्टं तद्वक्ष्यामीत्यारभ्यते । तत्रैतस्मिन्यथा प्रदर्शितोऽर्थदृष्टान्तोऽयमुपादीयते यथा लोके महामत्स्यो महांश्चासौ मत्स्यश्च नादेयेन स्रोतसाऽहार्य्य इत्यर्थः । स्रोतश्च विष्टम्भयति । स्वच्छन्दचारी उभे कूले नद्याः

कण्डिकात्रयेण सिद्धमर्थमनुवदति । एवमिति ॥ आत्मनः स्थानत्रयसञ्चारादसिद्धोऽसङ्गत्वहेतुरित्याशङ्क्याह । तत्रेति । प्रतिज्ञाहेत्वोर्हेतुनिर्धारणे सप्तम्यर्थः ॥ सप्रयोजकत्वाद्देहद्वयाद्वैलक्षण्यन्तु दूरनिरस्तमित्येवमभिप्रायः ॥ एवञ्चोदितहेतुसमर्थनार्थं महामत्स्यवाक्यमिति कृतिमभिप्रेत्य सङ्गत्यन्तरमाह । पूर्वञ्चेति ॥ यथा प्रदर्शितोऽर्थोऽसङ्गत्वं कार्यकरणविनिर्मुक्तत्वञ्च त-

तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विप-

---

पूर्व्वञ्चापरञ्चानुक्रमेण सञ्चरति। स सञ्चरन्नपि कूलद्वयं तन्मध्यवर्त्तिनोदकस्रोतोवेगेन न परवशीक्रियते। एवमेवा-यं पुरुष एतावुभा वन्ता अनुसञ्चरति। कौ तौ। स्वप्ना-न्तञ्च बुद्धान्तञ्च। दृष्टान्तप्रदर्शनफलं तु मृत्युरूपः कार्य्यकरणसङ्घातः। स ह तत्प्रयोजकाभ्यामनात्मधर्म्मो ऽयञ्चात्मा तस्माद्विलक्षण इति विस्तरतो व्याख्यातम्॥१८॥

अत्र च स्थानत्रयानुसञ्चारेण स्वयं ज्योतिष आत्मनः कार्य्यकरणसङ्घातव्यतिरिक्तस्य कामकर्म्मभ्यां विविक्ततोक्ता। अतो नायं संसारधर्म्मवानुपाधिनिमित्तमेव तस्य संसारित्व-मविद्याध्यारोपितमित्येष समुदायार्थ उक्तः। तत्र च जाग्रत्-स्वप्नसुषुप्तस्थानानां त्रयाणां विप्रकीर्णरूप उक्तो न पुञ्जीकृ-त्यैकत्वदर्शितः। यस्माज्जागरिते संसक्तः स मृत्युः स कार्य्य करणसङ्घात उपलक्ष्यतेऽविद्यया। स्वप्ने तु कामसंयुक्तो

---

कार्यत्वप्रकम्प्रत्वं स्वमसङ्ग्न्द धारित्वं प्रकटयति। सञ्चरन्नपीति॥ किं पुनर्दृ-ष्टान्तेन दार्ष्टान्तिके लभ्यते तदाह। दृष्टान्तेति॥१८॥

श्येनवाक्यमवतारयितुं वृत्तं कीर्त्तयति। अत्र चेति॥ पूर्वसन्दर्भः स्थाप्यर्थः। देहद्वयेन सप्रयोजकेन वस्तुतोऽसम्बन्धे फलितमाह। अत इति। कथं तर्हि तत्र संसारित्वधीरित्याशङ्क्याह। उपाधीति॥ औपा-धिकस्यापि वस्तुत्वमाशङ्क्याह। अविद्येति॥ वृत्तमनूद्योत्तरग्रन्थम-वतारयन् भूमिकामाह। तत्रेति॥ स्थानत्रयसम्बन्धित्वे विप्रकीर्णं विश्लिष्टं रूपमस्येत्यात्मा तथा पुञ्जीकृत्य विवक्षितं सर्वविशेषप्रमादायेति या-वत्। एकत्वेति वाक्योक्तिः। तत्र हेतुं वदन् जाग्रद्वाक्येन विवक्षितात्मो-

रिपत्य श्रान्तः संहत्य पक्षौ सल्लयायैव ध्रियत एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र

---

मृत्युरूपविनिर्म्मुक्त उपलभ्यते पुनर्बुद्धान्तमागतो बुद्धान्ताच्च। सुषुप्ते सम्प्रसन्नोऽसङ्गो भवतीत्यसङ्गतापि दृश्यते। एकवाक्यतया तूपसंह्रियमाणं फलं नित्यमुक्तबुद्धशुद्धस्वभावतास्य नैकत्र पुञ्जीकृत्य प्रदर्शितेति तत्प्रदर्शनाय कण्डिकारभ्यते। सुषुप्ते ह्येवं रूपतास्य वक्ष्यमाणा इति। तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माभयं रूपमिति। यस्मादेवं रूपं विलक्षणं सुषुप्तं प्रविवक्षितमिति तत्कथमित्याह दृष्टान्तेनास्यार्थस्य प्रकटीभावो भवतीति। तत्र दृष्टान्त उपादीयते। तद्यथास्मिन्नाकाशे भौतिके श्येनो वा सुपर्णो वा। सुपर्णशब्देन क्षिप्रः श्येन उच्यते। यथाकाशेऽस्मिन् विहृत्य विपरिपत्य श्रान्तो नानापरिपतनल-

---

क्तिरित्याह। यस्मादिति॥ स्वप्नान्तादेर्दृश्यमानरूपस्य मिथ्यात्वं सूचयति॥ अविद्ययेति। स्वप्नवाक्योऽविवक्षितत्वात्तद्विधिमाशङ्क्याह। स्वप्ने इति॥ तर्हि सुषुप्तवाक्ये तद्विधिर्नेत्याह। सुषुप्ते पुनरिति। तथाप्यविद्यानिर्मोकेन प्रतिभातीति भावः॥ एवं पातनिकां कृत्वा श्येनवाक्यमादत्ते। एकवाक्यतयेति। पूर्ववाक्यानामिति शेषः॥ कुत्र तर्हि यथोक्तमात्मरूपं पुञ्जीकृत्य प्रदर्श्यते तत्राह। सुषुप्ते हीति॥ तत्राभयमित्यविद्यारहित्यमुच्यते सा च सुषुप्ते स्वरूपेण सत्यपि नाभिव्यक्ता भातीति द्रष्टव्यम्। यस्मात्सुषुप्ते यथोक्तमात्मरूपं वक्ष्यते तस्मादिति यावत्। एवं रूपमित्येतदेव प्रकटयति। विलक्षणमिति॥ कार्यकरणविनिर्मुक्तं कामकर्माविद्यारहितमित्यर्थः। स्थानद्वयं हित्वा

## सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति ॥ १९ ॥

श्रमेण कर्म्मणा परिखिन्नः संहत्य पक्षौ सङ्गमय्य सम्प्रसार्य्य पक्षौ सम्यग्लीयतेऽस्मिन्निति संलायो नीडो नीडायैव ध्रियते स्वात्मनैव धार्य्यते स्वयमेव यथायं दृष्टान्त एवमेवायं पुरुष एतस्मा एतस्मै अन्ताय धावति अन्तशब्दवाच्यस्य विशेषणम्। यत्र यत्र यस्मिन्नन्ते सुप्तो न कञ्चन न कञ्चिदपि कामं कामयते। तथा न कञ्चन स्वप्नं पश्यति न कञ्चन काममिति। स्वप्नबुद्धान्तयोरविशेषेण सर्व्वः कामः प्रतिषिध्यते कञ्चनेत्यविशेषिताभिधानात्। तथा न कञ्चन स्वप्नमिति। जागरितेऽपि यद्दर्शनं तदपि स्वप्नं मन्यन्ते। श्रुतिरत आह न कञ्चन स्वप्नं पश्यतीति। तथा च श्रुत्यन्तरं तस्य त्रय आवसथास्त्रयः स्वप्ना इति यथा दृष्टान्ते पक्षिणः परिपतनजश्रमापनुत्तये स्वनीडोपसर्पणमेवं जाग्र-

---

कथं सुषुप्तं प्रवेष्टुमिच्छतीति पृच्छति। तत्कथमिति ॥ स्वप्नादौ दुःखानुभवात्तत्त्यागेन सुषुप्तं प्राप्नोतीत्याह। श्येनेति ॥ अथोत्तरा श्रुतिः स्थानात् स्थानान्तरप्राप्तिमभिधत्तां तथापि किं दृष्टान्तवचनेनेत्याशङ्क्याह। दृष्टान्तेनेति ॥ अस्यार्थस्य सुषुप्तिप्राप्तिरूपस्येत्येतत्। स एवार्थस्तत्रेति सप्तम्यर्थः ॥ परमात्माकाशं व्यावर्त्तयितुं भौतिकविशेषणम्। महाकायो मन्दवेगः श्येनः सुपर्णस्तु वेगवानल्पविग्रह इति भेदः। धारणे सौकर्य्यं वक्तुं स्वयमेवेत्युक्तम्। स्वप्नजागरितयोरवसानमन्तमत्तात् ब्रह्म। तथा न कञ्चन स्वप्नमिति स्वप्नजागरितयोरविशेषेण सर्वं दर्शनं निषिध्यत इति शेषः। स्वप्नविशेषात् स्वाप्नदर्शननिषेधेऽपि कुतो जाग्रद्दर्शनं निषिध्यते तत्राह। जागरिते-

ता वा अस्यैता हिता नाम नाड्यो यथा केशः

स्वप्नयोः कार्य्यकरण संयोगजक्रियाफलैः संयुज्यमानस्य पक्षिणः परिपतनज इव श्रमो भवति तच्छ्रमापनुत्तये स्वात्मनो नीड़मायतनं सर्व्वसंसारधर्म्म विलक्षणं सर्व्वक्रिया-कारकफलायासशून्यं स्वयमात्मानं प्रविशति ॥ १८ ॥

यद्यस्यायं स्वभावः सर्व्वसंसारधर्म्मशून्यतापरोपाधि-निमित्तञ्चास्य संसारधर्म्मित्वम्। यन्निमित्तञ्चास्य परोपाधिकृतं संसारधर्म्मित्वं सा चाविद्या। तस्या अविद्यायाः किं स्वाभाविकत्वमाहोस्वित्कामकर्म्मादिवदागन्तुकत्वम्। यदि चागन्तुकत्वं ततो विमोक्ष उपपद्यते तस्याश्चागन्तुकत्वे कोपपत्तिः कथं वा नात्मधर्म्मोऽविद्येति। सर्व्वानर्थबीजभूताया अविद्यायाः सतत्त्वावधारणार्थं परा कण्डिकाऽऽरभ्यते। ता

ऽपीति। कथमयमभिप्रायः श्रुतेरवगत इत्याशङ्क्याविशेषणसामर्थ्यादित्याह। अत आहेति। जागरितस्यापि स्वप्नत्वं श्रुत्यन्तरं सम्वादयति। तथा चेति॥ दृष्टान्तदार्ष्टान्तिकयोर्विवक्षितमंशं दर्शयति। यथेत्यादिना। संयुज्यमानस्य चेतनस्येति शेषः। सर्वसंसारधर्मविलक्षणमिति विशेषणं व्याचष्टे। सर्वेति॥ १८॥

श्येनवाक्येनात्मनः सौक्ष्म्यं रूपमुक्तमिदानीं नाडीखण्डस्य सम्बन्धं वक्तुं चोदयति॥ यद्यस्येति। परः सन्नुपाधिर्बुद्ध्यादिरसङ्गत्वतः स्वतो बुद्ध्यादिसम्बन्धासम्भवमुपेत्याह। यन्निमित्तञ्चेति॥ सिद्धान्ताभिप्रायमनूद्य पूर्ववादी विकल्पयति। तस्या इति। आगन्तुकत्वमस्वाभाविकत्वम्। आद्ये मोक्षानुपपत्तिं विवक्षित्वाह। यदि चेति। अस्तु तर्हि द्वितीयोऽत्र मोक्षोपपत्तेरित्याशङ्क्याह। तस्याश्चेति। माभूदविद्यात्म-

सहस्रधा भिन्नस्तावताऽणिम्ना तिष्ठन्ति शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा

वा अस्य शिरःपाण्यादिलक्षणस्य पुरुषस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावता तावत्परिमाणेनाणिम्नाऽणुत्वेन तिष्ठन्ति ताश्च शुक्लस्य रसस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा एतैः शुक्लत्वादिभी रसविशेषैः पूर्णा इत्यर्थः। एते च रसानां वर्णविशेषा वातपित्तश्लेष्मणामितरेतरसंयोगवैषम्यविशेषाद्विचित्रा बहवश्च भवन्ति। तास्वेवंविधासु नाड़ीषु सूक्ष्मासु वालाग्रसहस्रभेदपरिमाणासु शुक्लादिरसपूर्णासु सकलदेहव्यापिनीषु सप्तदशकं लिङ्गं वर्त्तते। तदाश्रिताः सर्वा वासना उच्चावचसंसारधर्म्मानुभवजनितास्तल्लिङ्गं वासनाश्रयं सूक्ष्मत्वात्स्वच्छं स्फटिकमणिकल्पं नाड़ीगतरसोपाधि संसर्गवशाद्धर्म्माधर्म्मप्रेरितोद्भूतहृत्तिविशेषं स्त्रीरथहस्त्याद्याकार-

---

स्वभावस्तद्धर्मस्तु स्याद्धर्मान्तराभावादित्याह। कथं वेति। तत्रोत्तरत्वेनोत्तरग्रन्थमुत्थापयति। सर्वानिर्यं ति। तासां परमसूक्ष्मत्वं दृष्टान्तेन दर्शयति। यथेति। कथमन्नरसस्य वर्णविशेषप्राप्तिरित्याशङ्क्याह। वातेति। भुक्तस्यान्नस्य परिणामविशेषो वातबाहुल्ये नीलो भवति पित्ताधिक्ये पिङ्गलो जायते श्लेष्मातिशये शुक्लो भवति पित्ताल्पत्वे हरितः साम्ये च धातूनां लोहित इति तेषां मिथः संयोगवैषम्यात्तत्साम्याच्च विचित्रा बहवश्चान्नरसा भवन्ति तद्व्याप्तानां नाडीनामपि तादृशो वर्णो जायते। अरुणाः शिरा वातवहाः नीलाः पित्तवहाः शिरा असृग्वहास्तु रोहिण्यो गौर्य्यः श्लेष्मवहाः शिरा इति सौश्रुतेर्दर्शनादित्यर्थः।

**अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छाय-यति गर्त्तमिव पतति ॥**

---

विशेषैर्वासनादिभिः प्रत्यवभासते। अथैवं सति यत्र यस्मिन् काले केचन शात्रवा अन्ये वा तस्करा मामागत्य घ्नन्तीति मृषैव वासनानिमित्तः प्रत्ययोऽविद्याख्यो जायते तदे-तदुच्यते। एनं सुप्तदृशं घ्नन्तीवेति। तथा जिनन्तीव वशं कुर्व्वन्तीव। न केचन घ्नन्ति नापि वशीकुर्व्वन्ति केवलन्त्व-विद्यावासनोद्भवनिमित्तं भ्रान्तिमात्रम्। यथा हस्ती चैनं विच्छाययति विच्छादयति विद्रावयति धावतीवेत्यर्थो गर्त्तमिव पतति गर्त्तं जीर्णकूपादिकमिव पतन्तमात्मान-मुपलक्षयति। तादृशी ह्यस्य मृषा वासनोद्भवति। अत्यन्त-निकृष्टा धर्म्मोद्भासितान्तःकरणवृत्त्याश्रया दुःखरूपत्वात्। किं बहुना यदेव जाग्रद्भयं पश्यति हस्त्यादिलक्षणं तदेव

---

नाडीस्वरूपं निरूप्य तत्र जागरिते लिङ्गशरीरस्य वृत्तिं दर्शयति। तास्विति। एवम्विधास्वित्यस्यैव विवरणम्। सूक्ष्मास्वित्यादि। पञ्चभूतानि दशेन्द्रियाणि प्राणोऽन्तःकरणमिति सप्तदशकम्। जागरिते लिङ्गशरीरस्य स्थितिमुक्त्वा स्वाप्नीं तत्स्थितिमाह। तल्लिङ्गमिति। विवक्षितां स्वप्ने स्थितिमुक्त्वा सूत्राक्षराणि योजयति। अथेत्यादिना। स्वप्ने धर्मा-दिनिमित्तवशान्मिथ्यैव लिङ्गं नानाकारमवभासते तन्मिथ्याज्ञानं लिङ्गा-नुगतमूलाविद्याकार्यत्वादविद्येति स्थिते सतीत्यथशब्दार्थमाह। एवं सतीति। तस्मिन् काले स्वप्नदर्शनं निश्चेयमिति शेषः। इवशब्दार्थमाह। नेत्यादिना॥ उक्तोदाहरणेन समुच्चित्योदाहर-णान्तरमाह। तथेति॥ गर्त्तादिपतनप्रतिपत्तौ हेतुमाह।

यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यते भयरूपमत्रास्मिन् स्वप्ने विनैव हस्त्यादिरूपं भयमविद्यावासनया मृषैवोद्भूतया मन्यते।

अथ पुनर्यत्राविद्यापकृष्यमाणा विद्या चोत्कृष्यमाणा किंविषया किंलक्षणा वेत्युच्यतेऽथ पुनर्यत्र यस्मिन् काले देव इव स्वयं भवति देवताविषया विद्या यदोद्भूता जागरितकाले तदोद्भूतया वासनया देवमिवात्मानं मन्यते स्वप्नेऽपि तदुच्यते। देव इव राजेव राज्यस्थोऽभिषिक्तः स्वप्नेऽपि राजाहमिति मन्यते। राजवासनावासित एवमत्यन्तप्रक्षीयमाणा विद्योद्भूता च विद्या सर्व्वात्मविषया। तदा स्वप्नेऽपि तद्भावभावितोऽहमेवेदं सर्व्वमस्मीति मन्यते। स यः सर्व्वात्मभावः सोऽस्यात्मनः परमो लोकः परम आत्मभावः स्वाभाविकः। यत्तु सर्व्वात्मभा-

तादृशी हीति। तादृशत्वं विशदयति। अत्यन्तेति॥ यथोक्तवासनाप्रभवत्वं कथं गर्त्तपतनादेरवगतिमित्याशङ्क्याह। दुःखेति॥

यदेवेत्यादिश्रुतेरर्थमाह। किं बहुनेति॥ भयमित्यस्य भयरूपमिति व्याख्यानम्। भयं रूप्यते तेन तत्कारणं तथा हस्त्यादि नास्ति चेत्कथं स्वप्ने भातीत्याशङ्क्याह। अविद्येति॥ अथ यत्र देव इवेत्यादेस्तात्पर्य्यमाह। अथेति॥ तत्र तस्याः फलमुच्यत इति शेषः। तात्पर्य्योक्त्याथशब्दार्थमुक्त्वा विद्याया विषयस्वरूपे प्रश्नपूर्व्वकं वदन् यत्रेत्यादेरर्थमाह। किं विषयेति। इवशब्दप्रयोगात् स्वप्न एवोक्त इति शङ्कां वारयति। देवतेति। विद्येत्युपास्तिरुक्ता। अभिषिक्तो राज्यस्थो जाग्रदवस्थायामिति शेषः। अहमेवेदमित्याद्यवतारयति। एवमिति॥ यथा विद्यायामपकृष्यमाणायां

ऽथ यत्र देव इव राजेवाहमेवेदꣳ सर्व्वोऽस्मीति मन्यते सोऽस्य परमो लोकः ॥ २० ॥

वादर्वाग्बालाग्रमात्रमप्यन्यत्वेन दृश्यते नाहमस्मीति । तद्वस्थाऽविद्या तयाऽविद्यया ये प्रत्युपस्थापिता अनात्मभावा लोकास्तेऽपरमाः स्थावरान्तास्तान् संव्यवहारविषयाल्लोकानपेक्ष्य यः अयं सर्व्वात्मभावः समस्तोऽनन्तरो वाह्यः सोऽस्य परमो लोकस्तस्मादपकृष्यमाणायामविद्यायां विद्यायाञ्च काष्ठां गतायां सर्व्वात्मभावो मोक्षः । यथा स्वयं ज्योतिष्ट्वं स्वप्ने प्रत्यक्षतं उपलभ्यते तद्वद्विद्याफलमुपलभ्यत इत्यर्थः । तथाऽविद्यायामप्युत्कृष्यमाणायां तिरोधीयमानायाञ्च विद्यायामविद्यायाः फलं प्रत्यक्षत उपलभ्यते । अथ यत्रैनं घ्नन्तीव जिनन्तीवेति । त एते विद्याविद्ये कार्य्ये सर्व्वात्मभावः परिच्छिन्नात्मभावश्च । विद्यया शुद्धया सर्व्वात्मा भवति । अविद्यया चासर्व्वो भवति । अन्यतः कुतश्चित्प्रविभक्तो भवति ।

---

कार्यमुक्तं तद्वदित्यर्थः । यदेति जागरितोक्तिः । इदं चैतन्यमहं चिन्मात्रमेव न तु मदतिरिक्तोनास्ति तस्मादहं पूर्णोऽस्मीति जानातीत्यर्थः । सर्वात्मभावस्य परमत्वमुपपादयति । यच्चित्यादिना । तत्र तेनाकारेणाविद्यावस्थितेत्याह । तदवस्थेति । तस्याः कार्यमाह । तयेति । समस्तत्वं पूर्णत्वमनन्तरत्वमेकरसत्वम् । अवाह्यत्वं प्रत्युक्तम् । योऽयं यथोक्तो लोकः सोऽस्यात्मनो लोकान्पूर्व्वोक्तानपेक्ष्य परम इति सम्बन्धः वाक्यार्थमुपसंहरति । तस्मादिति । मोक्षो विद्याफलमित्युत्तरत्र सम्बन्धः । तस्य प्रत्यक्षत्वं दृष्टान्तेन स्पष्टयति । यथेति । विद्याफलवदविद्याफलमपि स्वप्ने प्रत्यक्षमित्युक्तमनुवदति । तथेति । विद्याफलमवि-

यतो विभक्तो भवति तेन विरुध्यते। विरुद्धत्वाद्धन्यते जीयते विच्छाद्यते चासर्व्वविषयत्वे च भिन्नत्वादेतद्भवति समस्तश्च सन् कुतो भिद्यते केन विरुद्धते येन विरुध्येत विरोधाभावात् केन हन्यते जीयते विच्छाद्यते च।

अत इदमविद्यायाः सतत्त्वमुक्तं भवति। सर्व्वात्मानं सन्तमसर्व्वात्मत्वेन ग्राहयत्यात्मनोऽन्यद्वस्त्वन्तरमविद्यमानं प्रत्युपस्थापयति। आत्मनः सर्वमापादयति। ततस्तद्विषयः कामो भवति। यतो भिद्यते कामतः क्रियामुपादत्ते ततः फलं। तदेतदुक्तं वक्ष्यमाणं च यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीत्यादि। इदमविद्यायाः सतत्त्वं सह कार्येण प्रदर्शितम्। विद्यायाश्च कार्यं सर्व्वात्मभावः प्रदर्शितोऽ

---

द्याफलञ्चेत्युक्तमुपसंहरति। त एते इति। उक्तं फलद्वयं विभजते। विद्ययेति। असर्वो भवतीत्यं तत्प्रकटयति। अन्यत इति। प्रविभागे फलमाह। यत इति। विरोधफलं कथयति। विरुद्धत्वादिति॥

अविद्याकार्यं निगमयति। असर्वेति। अविद्यायाश्चेत्परिच्छिन्नफलत्वं तदा तस्य भिन्नत्वादेव यथोक्तं विरोधादि दुर्वारमित्यर्थः। विद्याफलं निगमयति। समस्तस्त्विति। नन्वविद्यायाः सतत्त्वं निरूपयितुमारब्धं न च तदद्यापि दर्शितं यथा च किं कृतं स्यादत आह। अत इति। कार्यवशादिति यावत्। इदं शब्दार्थमेव स्फुटयति। सर्वात्मानमिति॥ ग्राहकत्वमेव व्यनक्ति। आत्मन इति। वस्त्वन्तरोपस्थितिफलमाह। तत इति। कामस्य कार्यमाह॥ कामत इति। क्रियातः फलं लभते तद्भोगकाले च रागादिना क्रियामादधातीत्यविच्छिन्नः संसारस्तद्यावन्न सम्यग्ज्ञानं तावन्मिथ्याज्ञाननिदानमविद्या दुर्वारेत्याह॥ तत इति॥ भेददर्शननिदानमविद्येति अविद्य सूत्रे दृष्टमित्याह। तदेतदिति॥

**तद्वा अस्यैतदतिच्छन्दा अपहतपाप्मा ऽभयꣳ रूपम् ।**

विद्याविपर्य्ययेण । सा चाविद्या नात्मनः स्वाभाविको धर्म्मः। यस्माद्विद्यायामुत्कृष्यमाणायां स्वयमपचीयमाना सती काष्ठां गतायां विद्यायां परिनिष्ठिते सर्व्वात्मभावे सर्व्वात्मना निवर्त्तते रज्ज्वामिव सर्पज्ञानं रज्जुनिश्चये । तच्चोक्तं । यत्र त्वस्य सर्व्वमात्मैवाभूत्तत्केन कं पश्येदित्यादि । तस्मान्नात्मधर्म्मोऽविद्या । न हि स्वाभाविकस्योच्छित्तिः कदाचिदप्युपपद्यते सवितुरिवौष्ण्यप्रकाशयोः । तस्मात्तस्य मोक्ष उपपद्यते ॥ २० ॥

इदानीं योऽसौ सर्व्वात्मभावो मोक्षो विद्याफलं क्रियाकारकफलशून्यं स प्रत्यक्षतो निर्दिश्यते । यत्राविद्याकाम

---

तत्रैव वाक्यशेषमनुकूलयति । वक्ष्यमाणश्चेति । अविद्यात्मनः स्वभावो न वेति विचारे किं निर्णीतं भवतीत्याशङ्क्य वृत्तं कीर्त्तयति । इदमिति । अविद्यायाः परिच्छिन्नफलत्वमस्ति ततो वैपरीत्येन विद्यायाः कार्यमुक्तं स च सर्वात्मभावो दर्शित इति योजना ॥ सम्प्रति निर्णीतमर्थं दर्शयति । सा चेति । ज्ञाने सत्यविद्यानिवृत्तिरित्यत्र वाक्यशेषं प्रमाणयति । तच्चेति ॥ अविद्या नात्मनः स्वभावो निवर्त्त्यत्वाद्रज्जुसर्पवदित्याह । तस्मादिति । निवर्त्त्यत्वेऽप्यात्मस्वभावत्वे का हानिरित्याशङ्क्याह । न हीति ॥ अविद्यायाः स्वाभाविकत्वाभावे फलितमाह । तस्मादिति ॥ २० ॥

तद्वा अस्यैतदित्यनन्तरवाक्यतात्पर्यमाह । इदानीमिति । विद्याविद्ययोस्तत्फलयोश्च प्रदर्शनानन्तरमिति यावत् ॥ मोक्षमेव विशिनष्टि ॥ यत्रेति ॥ पदद्वयस्यान्वयं दर्शयन्विवक्षितमर्थमाह । तदेतदिति ।

कर्म्माणि न सन्ति। तदेतत्प्रस्तुतं यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यतीति। तद्वै अस्य रूपम्। यः सर्व्वात्मभावः सोऽस्य परमो लोक इत्युक्तस्तदतिच्छन्दा अतिच्छन्दमित्यर्थः। रूपपरत्वाच्छन्दः कामोऽतिगतः छन्दोऽस्मिन् रूपे तदतिच्छन्दं रूपम्। अन्योऽसौ असन्तः छन्दःशब्दो गायत्र्यादिछन्दोवाची। अयन्तु कामवचनोऽतः स्वरान्त एव। तथाप्यतिच्छन्दा इति पाठः स्वाध्यायधर्म्मो द्रष्टव्यः। अस्ति च लोके कामवचनप्रयुक्तः छन्दःशब्दः स्वच्छन्दः परच्छन्द इत्यादौ अतोऽतिच्छन्दमित्येवमुपनेयं कामवर्जितमेतद्रूपमित्यस्मिन्नर्थे। तथापहतपाप्मा। पाप्मशब्देन धर्माधर्म्मावुच्येते। पाप्मभिः संसृज्यते। पाप्मनो

---

यत्रेत्यन्तशब्दितं ब्रह्मोच्यते। व्याख्यातं पदद्वयमनूद्य षष्ठशब्दस्य प्रकृतार्थत्वं मन्वानो रूपशब्देन षष्ठ्याः सम्बन्धं दर्शयति। तदिति। अतिच्छन्दमिति प्रयोगे हेतुमाह। रूपपरत्वादिति॥ कथमतिच्छन्दमित्यात्मरूपं विवक्ष्यते तत्राह। छन्द इति॥ छन्दःशब्दस्य गायत्र्यादिच्छन्दोविषयस्य कथं कामविषयत्वमित्याशङ्क्याह। अन्योऽसाविति॥ गायत्र्यादिविषयत्वं त्यक्त्वा छन्दःशब्दस्य कामविषयत्वमतःशब्दार्थः। यद्यात्मरूपं कामवर्जितमित्येतदत्र विवक्षितं किमिति तर्हि दैर्घ्यं प्रयुज्यते तत्राह। तथापीति। स्वाध्यायधर्म्मत्वं छान्दसत्वम्। हृद्यव्यवहारमन्तरेण कामवाचित्वं छन्दःशब्दस्य कथमित्याशङ्क्याह। अस्ति चेति॥ तस्य कामवचनत्वे सति सिद्धं पदरूपमनूद्य तस्यार्थमुपसंहरति॥ अत इति। तथा कामवर्जितत्ववदित्येतत्। नन्वत्राधर्मवर्जितत्वमेव प्रतीयते न धर्म्मवर्ज्जितत्वं

विजहातीत्युक्तत्वात्। अपहतपाप्मा धर्म्माधर्म्मवर्जितमित्ये तत्किञ्चाभयं। भयं हि नामाविद्याकार्य्यम्। अविद्यया भयं मन्यत इति ह्युक्तं। तत्कार्य्यद्वारेण कारणप्रतिषेधोऽयमभयं रूपमित्यविद्यावर्जितमित्येतत्। यदेतद्विद्याफलं सर्व्वात्मभावस्तदेतदतिच्छन्दापहतपाप्मा भयं रूपं सर्व्वसंसारधर्म्मवर्जितमतो भयं रूपमेतत्। इदञ्च पूर्वमेवोपन्यस्तमतो तानन्तरब्राह्मणसमाप्तौ। अभयं वै जनक प्राप्तोऽसीत्यागमतः। इह तु तर्कतः प्रपञ्चितं। दर्शितागमार्थप्रत्ययदार्ढ्याय। अयमात्मा स्वयं चैतन्यज्योतिःस्वभावः सर्व्वं स्वेन चैतन्यज्योतिषावभासयति। स यत्तत्र किञ्चित्पश्यति रमते चरति जानाति चेत्युक्तम्। अतः स्थितञ्चैतत् न्यायतो नित्यं स्वरूपं चैतन्यज्योतिष्ट्वमात्मनः।

---

पाप्मशब्दस्य अधर्म्ममात्रवचनत्वादत आह। पाप्मशब्देनेति॥ उपक्रमानुसारेण पाप्मशब्दयोर्भयविषयत्वे विशेषणमनूद्य विवचितमर्थं कथयति। अपहतेति। तर्हि कार्यमेवाविद्याया निषिध्यते नेत्याह॥ तत्कार्येति। तस्मादर्थे तच्छब्दः। वाक्यार्थमुपसंहरति। यदेतदिति कूर्चब्राह्मणान्तेऽपीदमुक्तमित्याह। इदञ्चेति। आगमवशात्तत्रोक्तं चेत्किमित्यत्र पुनरुच्यते तत्राह। इह त्विति॥ सविशेषत्वं चेदात्मत्वानुपपत्तिरित्यादिस्तर्कः। आगमसिद्धे किं तर्कोपन्यासेनेत्याशङ्क्याह। दर्शितेति। स्वीवाक्यस्य सङ्गतिं वक्तुं वृत्तमनुद्रवति। अयमिति। अनन्वागतवाक्ये चात्मनश्चेतनत्वमुक्तमित्याह। स यदिति। आत्मनः सदा चैतन्यज्योतिष्ट्वं स्वरूपं न केवलमुक्तादागमादेव सिद्धं किन्तु पूर्व्वोक्तादनुमानाच्च स्थितमित्याह। अतः स्थितञ्चेति।

तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न वाह्यं

स यद्यात्माभावविनष्टः स्वेनैव रूपेण वर्त्तते कस्मादयमहमस्मीत्यात्मानं वा वहिर्वेमानि भूतानीति जाग्रत्स्वप्रयोरिव न जानातीत्यत्रोच्यते। शृणवत्राज्ञानहेतुमेकत्वमेवाज्ञानहेतुस्तत्कथमित्युच्यते। दृष्टान्तेन हि प्रत्यचीभवति विवच्चितोऽर्थ इत्याह। तत्तत्र यथा लोके प्रिययेष्टया स्त्रिया सम्परिष्वक्तः सम्यक् परिष्वक्तः कामयन्त्या कामुकः सन्नवाह्यमात्मनः किञ्चन किञ्चिदपि न वेद मत्तोऽन्यद्वस्त्विति। न चान्तरमयमहमस्मि सुखी दुःखी चेति अपरिष्वक्तस्तु तया प्रविभक्तो जानाति। सर्व्वमेव वाह्यमाभ्यन्तरञ्च। परिष्वङ्गोत्तरकालन्त्वेकत्वापत्तेर्न जानाति एवमेव यथादृष्टान्तोऽयं पुरुषः चेत्रज्ञो भूतमात्रासंसर्गतः

---

वृत्तमनूद्य सम्बन्धं वक्तुं कामस्योदयति। स यदीति॥ अत्रेति सुषुप्तिरुक्ता। चैतन्यस्वभावस्यैव सुषुप्तौ विशेषज्ञानाभावं साधयति॥ उच्यत इति। सुषुप्तिः सप्तम्यर्थः। अज्ञानं विशेषज्ञानाभावः। कोऽसावज्ञानहेतुस्तमाह। एकत्वमिति। जीवस्य परेणात्मना यदेकत्वं तत् कथं सुषुप्तौ विशेषज्ञानाभावे कारणं तस्मिन् सत्यपि चैतन्यस्वभावानिवृत्तेरिति शङ्कते। तत्कथमिति॥ तत्र स्त्रीवाक्यमुत्तरत्वेनोत्थापयति। उच्यत इति। तत्र दृष्टान्तभागमाचष्टे। दृष्टान्तेनेति॥ एकत्वकृतो विशेषज्ञानाभावो विवच्चितोऽर्थः। परिष्वङ्गप्रयुक्तसुखाभिनिवेशादज्ञानं किमिति कल्प्यते स्वाभाविकमेव तत् किं न स्यादित्याशङ्क्याह। अपरिष्वक्तस्त्विति॥ तर्हि परिष्वङ्गवतोऽपि स्वभावविपरिलोपासम्भवाद्विशेषविज्ञानं स्यादिति चेन्नेत्याह। परिष्वङ्गेति। स्त्रीपुंसलक्षणयोर्व्यामिश्रत्वं

किञ्चन वेद नान्तरमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्॥

सैन्धवखिल्यवत् विभक्तो जलादौ चन्द्रादिप्रतिबिम्बवत्कार्य्यकरणे इह प्रविष्टः सोऽयं पुरुषः प्राज्ञेन परमार्थेन स्वाभाविकेन स्वेनात्मना परेण ज्योतिषा सम्परिष्वक्तः सम्यक् परिष्वक्त एकीभूतो निरन्तरः सर्व्वात्मा न बाह्य किञ्चन वस्त्वन्तरं नाप्यान्तरमात्मन्ययमहमस्मि सुखी दुःखी वेति वेद तत्र चैतन्यज्योतिःस्वभावत्वे कस्मादिह न जानातीति यदप्राचीस्तत्रायं हेतुर्मयोक्तः। एकत्वं यथा स्त्रीपुंसयोः सम्परिष्वक्तयोः। तत्रार्थान्नानात्वं विशेषविज्ञानहेतुरित्युक्तं भवति॥

---

परिष्वङ्गस्तदुत्तरकालं सम्भोगफलप्राप्तिरेकत्वापत्तिस्तदवशाद्विशेषाज्ञानमित्यर्थः। दार्ष्टान्तिकं व्याकरोति। एवमेवेति॥ भूतमात्राः शरीरेन्द्रियलक्षणास्ताभ्यश्चिदात्मनस्तादात्म्याध्यासात्तत्प्रतिबिम्बो जातस्ततो ऽभक्तवज्जातीत्यत्र दृष्टान्तमाह। सैन्धवेति। तस्य देहादौ प्रवेशं दृष्टान्तेन दर्शयति। जलादाविति। उपसर्गबललभ्यमर्थं कथयति। एकीभूत इति। तादात्म्यं व्यावर्त्तयितुं निरन्तर इत्युक्तम्। परमात्माभेदप्रयुक्तमनवच्छिन्नत्वमाह। सर्वात्मेति॥ एवं स्त्रीवाक्याक्षराणि व्याख्याय चोद्यपरिहारं प्रकटयति। तत्रेति॥ प्रत्यगात्मनीति यावत्। इहेति सुषुप्तिरुच्यते। यथा परिष्वक्तयोः स्त्रीपुंसयोरेकत्वं पुंसो विशेषविज्ञानाभावे तस्य तत्र कारणमुक्तमित्यर्थः। स्त्रीवाक्ये श्रौतमर्थमभिधायार्थिकमर्थमाह। तत्रेति॥

तद्वा अस्यैतदाप्तकाममात्मकाममकामꣳ रूपꣳ शोकान्तरम्॥ २१ ॥

नानात्वे च कारणमात्मनो वस्त्वन्तरस्य प्रत्युपस्थापिका विद्येत्युक्तं तत्र चाविद्याया यदा प्रविविक्तो भवति तदा सर्वेणैकत्वमेवास्य भवति। ततश्च ज्ञानक्रियादिकारकविभागेऽसति कुतो विशेषविज्ञानप्रादुर्भावः कामो वा सम्भवति स्वाभाविके स्वरूपस्य आत्मज्योतिषि। यस्मादेवं सर्वैकत्वमेवास्य रूपमतस्तद्वै अस्यात्मनः स्वयं ज्योतिःस्वभावस्यैतद्रूपमाप्तकामं यस्मात्समस्तमेतत्तस्मादाप्ताः कामा अस्मिन्रूपे तदिदमाप्तकामं यस्य ह्यन्यत्वेन प्रविभक्तः कामस्तदनाप्तकामं भवति। यथा जागरितावस्थायां देवदत्तादिरूपम्। न त्विदं तथा कुतश्चित्प्रविभज्यतेऽतस्तदाप्त

किं पुनर्नानात्वे कारणमिति तदाह। नानात्वे चेति। उक्तमथ योन्यामित्यादावित्यर्थः। किमेतावता सुषुप्ते विशेषविज्ञानाभावस्यायातं तत्राह। तत्रेति। विशेषविज्ञाने नानात्वं तत्र चाविद्याकारणमिति स्थिते सतीति यावत्। यदा तदेति सुषुप्तिर्विवक्षिता। प्रविविक्तत्वं कार्यकारणाविद्याविरहित्वम्। सर्वेण पूर्वेण परमात्मना सहेत्यर्थः। विज्ञानात्मा षष्ठ्योच्यते। एकत्वफलमाह। ततश्चेति॥ उक्तमुपजीव्याप्तकामवाक्यमवतार्य व्याचष्टे। यस्मादिति॥ आत्मकामत्वं समर्थयते॥ यस्मात्समस्तमिति। तदेव व्यतिरेकमुखेन विशदयति। यस्य हीत्यादिना। विशेषणान्तरमाकाङ्क्षापूर्वकमादाय व्याचष्टे। किमन्यस्मादित्यादिना॥ सुषुप्तेरन्यत्रात्मनः सकाशादन्यत्वेन प्रविभक्ता इव काम्यमानाः सुषुप्तावात्मैव कामास्तस्मादात्मकाममात्मरूपमित्येतद्दृष्टान्तेनाह। यथेति। अव-

अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा वेदा अवेदाः ॥

कामं भवति। किमन्यस्मादस्त्वन्तरात्र प्रविभज्यते आहो स्विदात्मैव तद्वस्त्वन्तरमत आह। नान्यदस्त्यात्मनः कथं यत आत्मकाममात्मैव कामा यस्मिन्रूपे येऽत्र प्रविभक्ता इवान्यत्वेन काम्यमाना यथा जाग्रत्स्वप्नयोस्तेऽस्यात्मैवा-न्यत्वप्रत्युपस्थापकहेतोरविद्याया अभावादात्मकाममत ए-वाकाममेतद्रूपं काम्यविषयाभावाच्छोकान्तरं शोकछिद्रं शोकशून्यमित्येतच्छोकमध्यमिति वा सर्वथाप्यशोकमेत-द्रूपं शोकवर्जितमित्यर्थः ॥ २१ ॥

प्रकृतः स्वयं ज्योतिरात्मा अविद्याकामकर्म्मविनिर्मुक्त इत्युक्तम्। असङ्गत्वादात्मन आगन्तुकत्वाच्च तेषां तत्रैवा

---

स्याद्वये खल्वात्मनः सकाशादन्यत्वेन प्रविभक्ता इव काम्याः काम्यन्त इति कामाः। नैवं सुषुप्तावस्थायामात्मनस्ते भिद्यन्ते किन्तु सुषुप्तस्यात्मैव कामा इत्यात्मकामं तद्रूपमित्यर्थः। तस्यात्मैवेत्यत्र हेतुमाह। अन्यत्वेनेति ॥ यद्यपि सुषुप्तेऽविद्या विद्यते तथापि न साभिव्यक्तास्तीत्यनर्थपरिहारोप-पत्तिरित्यर्थः ॥ कामानामात्माश्रयत्वपक्षं प्रतिक्षेप्तुं तृतीयं विशेष-णम् ॥ शोकमध्यं शोकस्यान्तरं प्रत्यग्भूतमिति यावत्। तर्हि शोक-वत्त्वं प्राप्तं नेत्याह। सर्वथेति ॥ पक्षद्वयेऽपि शोकशून्यमात्मरूपम्। न हि शोको येनात्मवांस्तस्य शोकवत्त्वं शोकस्यात्माधीनसत्त्वास्फुर्त्तेरात्मा-तिरेकेणाभावादित्यर्थः ॥ २१ ॥

अत्र पितेत्यादि वाक्यमवतारयितुं वृत्तमनुद्रवति ॥ प्रकृत इति। अविद्यादिनिर्म्मोके हेतुद्वयमाह। असङ्गत्वादिति ॥ यद्यपि नागन्तुकत्व-

शङ्का जायते। चैतन्यस्वभावत्वे सत्यप्येकीभावान्न जानाति स्त्रीपुंसयोरिव सम्परिष्वक्तयोरित्युक्तम्। तत्र प्रासङ्गिकमेतदुक्तं कामकर्मादिवत् स्वयं ज्योतिष्ट्वमप्यस्यात्मनो न स्वभावः। यस्मात् सम्प्रसादेनोपलभ्यत इत्याशङ्कायां प्राप्तायां तन्निराकरणाय स्त्रीपुंसयोर्दृष्टान्तोपादानेन विद्यमानस्यैवं स्वयं ज्योतिष्ट्वस्य सुषुप्तेऽग्रहणमेकीभावाद्धेतोर्न तु कामकर्मादिवदागन्तुकम्। इत्येतत्प्रासङ्गिकमभिधाय यत्प्रकृतं तदेवानुप्रवर्त्तयति। अत्र चैतत्प्रकृतमविद्याकामकर्मविनिर्मुक्तमेव तद्रूपम्। यत्सुषुप्त आत्मनो गृह्यते प्रत्यक्षत इति तदेतद्यथाभूतमेवाभिहितं सर्वसम्बन्धाधीनमेतद्रूपमिति। यस्मादत्रैतस्मिन् सुषुप्तस्थानेऽतिच्छन्दापहतपाप्माभयमेतद्रूपं तस्मादत्र पिता जनकः। तस्य च जनयितृत्वाद्यत्पितृत्वं पुत्रं प्रति तत्कर्मनिमित्तं तेन च

---

मविद्यया युक्तं तथाप्यभिव्यक्ता सानर्थहेतुरागन्तुकीति एष्टव्यम्। स्त्रीवाक्यनिरस्याशङ्कामनुवदति। तत्रेति॥ कामादिविमोके दर्शिते सतीति यावत्। स्वभावस्यापायो न सम्भवतीत्यभिप्रेत्य हेतुमाह। यस्मादिति। शङ्कोत्तरत्वेन स्त्रीवाक्यमवतार्य तत्तात्पर्यं पूर्व्वोक्तमनुकीर्त्तयति। एवं स्वयमिति। विद्यमानस्येति ह्युक्तमनूद्योत्तरग्रन्थमुत्थापयति। इत्येतदिति। स्वयं ज्योतिष्ट्वस्य स्वाभाविकत्वमेतच्छब्दार्थः॥ प्रासङ्गिकं कामादेरागन्तुकत्वोक्तिः॥ प्रसङ्गादागतमिति यावत्॥ प्रकृतमेव दर्शयति। अत्र चेति॥ अतिच्छन्दादिवाक्यं सप्तम्यर्थः। प्रत्यक्षतः स्वरूपचैतन्यवशाद्यथोक्तात्मरूपस्य सुषुप्ते गृह्यमाणस्योत्थितस्य परामर्शमवधेयम्। कामादिसम्बन्धवदात्मनस्तद्रहितमपि रूपं कल्पितमेवेत्याशङ्क्याह॥ तदेतदिति। प्रकृतमर्थमुक्तोत्तरवाक्यस्यसप्तम्यर्थमाह। अत्रैतस्मिन्निति॥

चेत्। न। अर्थानर्थयोरभिप्रायतन्त्रत्वान्मोक्षमेकं वर्जयित्वान्यस्याविद्याविषयत्वात्। पुरुषाभिप्रायतन्त्रौ ह्यर्थानर्थौ। मरणादिकाम्येष्टिदर्शनात्। तस्माद्यावदात्मज्ञानविधेराभिमुख्यं तावदेव कर्मविधयस्तस्मान्नात्मज्ञानसहभावित्वं कर्मणामित्यतः सिद्धमात्मज्ञानमात्रमेवामृतत्वसाधनमेतावदरे खल्वमृतत्वमिति। कर्मनिरपेक्षत्वाज्ज्ञानस्य॥

अतो विदुषस्तावत्पारिव्राज्यं सिद्धम्। सम्प्रदानादिकर्मकारकजात्यादिशून्या विक्रियब्रह्मात्महढप्रतिपत्तिमात्रेण वचनमन्तरेणाप्यन्न्यायतस्तथा च व्याख्यातमेतत्। येषां नोऽयमात्माऽयं लोक इति हेतुवचनेन पूर्वं विद्वांसः

---

अर्थानर्थयोरभिप्रायतन्त्रत्वं साधयति। पुरुषेति। मरणं महाप्रस्थानमित्यादि काम्यं कृत्वा जीवदवस्थायामेव महाभारतादाविष्टिविधानं दृष्टमतोऽर्थानर्थावभिप्रायकावेवेत्यर्थः। कर्मविधीनामात्मज्ञानात्प्राचीनत्वं प्रतिपादितमुपसंहरति। तस्मादिति। तथापि प्रकृते किमायातं तदाह तस्मान्नेति। तत्र प्रमाणमाह। इत्यत इति। अतःशब्दार्थं स्फुटयति। कर्मेति। ज्ञानस्य कर्मविरोधित्वे तन्निरपेक्षत्वे च सिद्धे फलितमाह। अत इति। आत्मज्ञानस्यामृतत्वे हेतुत्वाभ्युपगमादित्यादेरुक्तन्यायादात्मसाक्षात्कारस्य केवलस्य कैवल्यकारणत्वसिद्धेः सति तस्मिन् जीवन्मुक्तस्य कर्मानुष्ठानानवकाशात्तदुद्देशेन प्रवृत्तस्याधीतवेदस्य विदितपदपदार्थस्य परोक्षज्ञानवतस्तन्मात्रेण प्रमाणापेक्षामन्तरेण सिद्धं सर्वकर्मत्यागलक्षणं पारिव्राज्यं एष एव विद्वत्संन्यासो न त्वपरोक्षज्ञानवतः प्रारब्धफलप्राप्तिमन्तरेणानुष्ठेयं किञ्चिदस्तीति भावः। विध्यविषयत्वाज्ज्ञातसाक्षात्कारस्य कथं पारिव्राज्यं तत्राह। वचनमिति। विधिं विनापि फलभूतं पारिव्राज्यमित्यर्थः। सत्यां जिज्ञासायां कर्मत्यागो न

प्रजामकामयमाना व्युत्तिष्ठन्तीति पारिव्राज्यं विदुषामात्मलोकावबोधादेव तथा विविदिषोरपि सिद्धं पारिव्राज्यमेतमेवात्मानं लोकमिच्छन्तः प्रव्रजन्तीति वचनात्। कर्मणाञ्चाविद्वद्विषयत्वमवोचाम। अविद्याविषये चोत्पत्त्याप्तिविकारसंस्कारार्थानि कर्माणीत्यत आत्मा संस्कारद्वारेणात्मज्ञानसाधनत्वमपि कर्मणामवोचाम। यज्ञादिभिर्विविदिषन्तीति। अथैवं सत्यविद्वद्विषयाणामाश्रमकर्मणां बलाबलविचारणायामात्मज्ञानोत्पादनं प्रति नियत-

---

शक्यते निषेद्धुमिति यद्विविदिषासंन्यासं साधयति। तथा चेत्यादिना। विदुषामात्मसाक्षात्कारार्थिनां तत्परोक्षनिश्चयवतामिति यावत्। आत्मलोकस्यावबोधोऽपि व्युत्थानहेतुः परोक्षनिश्चय एव। सतीतरस्मिन् फलावस्थस्य व्युत्थानाद्यनुष्ठानायोगात्तदन्तरेण तत्प्राप्त्यभावाच्च। उक्तं हि॥ शमादिमदुपरतेरपि तत्त्वसाक्षात्कारे नियतं साधनत्वं तदाह। तथा चेति। एतत्पारिव्राज्यमिति सम्बन्धः। विविदिषुर्नामाधीतवेदो विचारप्रयोजकारातिकत्व.नयान् मुमुक्षुर्मोक्षसाधनं तत्त्वसाक्षात्कारमपेक्षमाणस्तस्मिन् परोक्षनिश्चयेनापि शून्यो विवक्षितस्तस्य कथं पारिव्राज्यमत आह। आत्मानमिति॥ इतश्च विविदिषासंन्यासोऽस्तीत्याह। कर्मणाञ्चेति॥ तथा चाविद्याविरुद्धां विद्यामिच्छन्नशेषाणि कर्माणि शरीरधारणमात्रकारणेतराणि त्यजेदिति शेषः। विविदिषासंन्यासे हेत्वन्तरं साधयति। अविद्याविषये चेति। चतुर्विधफलानि कर्माण्यविद्यात्वविषये परं सम्भवन्ति न त्वसाध्ये वस्तुनीत्यतो वस्तुजिज्ञासायां त्यज्यानि तानीत्यर्थः। कथं तर्हि कर्मणामुत्तमफलान्वयस्तत्राह। आत्मेति। बुद्धिशुद्धिद्वारा ज्ञानहेतुत्वात् कर्मणामस्ति प्रणाड्या परमपुरुषार्थान्वय इत्यर्थः। संन्यासः कर्मयोगश्च निःश्रेयसकरावुभाविति स्मृतेर्विविदिषूणां मुमुक्षूणां कथं पारिव्राज्यस्यैव कर्त्तव्यत्वमित्याशङ्क्याह। अथेति॥ यथा विद्वत्संन्या

मप्रधानानाममानित्वादीनां मानसानाञ्च ध्यानज्ञानवैराग्यादीनां सन्निपत्योपकारकत्वम्। हिंसारागद्वेषादिबाहुल्यात्। बहुक्लिष्टकर्मभिर्विमिश्रिता इतर इत्यतः पारिव्राज्यं मुमुक्षूणां प्रशंसन्ति। त्याग एव हि सर्व्वेषामुक्तानामपि कर्मणाम्। वैराग्यं पुनरेतस्य मोक्षस्य परमो विधिः। किन्ते धनेन किमु बन्धुभिस्ते किं ते दारै र्ब्राह्मण यो मरिष्यसि। आत्मानमन्विच्छ गुहां प्रविष्टं पितामहास्ते क्व गता पिता च। एवं साङ्ख्ययोगशास्त्रेषु

---

सस्तथा विविदिषासन्न्यासेऽपि यथोक्तरीत्या सम्भाविते सतीति यावत्। आत्मज्ञानोत्पादनं प्रत्याश्रमधर्म्माणां बलाबलविचारणायामन्तरङ्गत्वबहिरङ्गत्वचिन्ता तस्यां सत्यामित्यर्थः। अहिंसास्तेयब्रह्मचर्य्यादयो यमाः।

वैराग्यादीनामित्यादिशब्देन शमादयो गृह्यन्ते। इतरे नियमप्रधाना आश्रमधर्म्मा बहुना क्लिष्टेन पापेन कर्म्मणा सङ्कीर्णा हिंसादिप्राचुर्य्यात्। यमान् पतत्यकुर्व्वाणो नियमान् केवलान् भजन्निति स्मृतेस्तस्मात्पूर्व्वेषामन्तरङ्गत्वमुत्तरेषां वहिरङ्गत्वमित्याशयेनाह। हिंसेति। कर्म्मयोगापेक्षया तत्त्यागस्याधिकारिविशेषं प्रतिप्रशस्तत्वमुपसंहरति। इत्यत इति। तत्प्रशंसाप्रकारमेवाभिनयति। त्याग एवेति॥ उक्तानामाश्रमैरनुष्ठेयत्वेनेति शेषः। तत्त्यागे हेतुमाह। वैराग्यमिति। मोक्षस्य कर्म्मपरित्यागस्येत्यर्थः। उत्तमपुमर्थार्थिनः सन्न्यासद्वारा श्रवणादि कर्त्तव्यमित्यत्र वाक्यान्तरमुदाहरति। किन्ते धनेनेति। अथ पित्रादिभिर्गतं पन्थानमन्वेषयामि नात्मानमित्याशङ्क्याह। पितामहा इति॥ विविदिषासन्न्यासे साङ्ख्यादिसम्मतिमाह। एवमिति॥ यथाहुः साङ्ख्या ज्ञानेन चापवर्गो विपर्य्ययादिष्यते बन्ध इति विवेकख्याति पर्यन्तमज्ञानाच्चितचेष्टितमिति वा। विपर्य्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानमिति च।

च सन्न्यासो ज्ञानं प्रति प्रत्यासन्न उच्यते। कामप्रवृत्त्यभावाच्च। कामप्रवृत्तेर्हि ज्ञानप्रतिकूलता सर्वशास्त्रेषु प्रसिद्धा। तस्माद्विरक्तस्यापि मुमुक्षोर्विनापि ज्ञानेन ब्रह्मचर्य्यादेव प्रव्रजेदित्याद्युपपन्नम्। ननु सावकाशत्वादनधिकृतविषयमेतदित्युक्तम्। यावज्जीवश्रुत्युपरोधात्। नैष दोषः। नितरां सावकाशत्वाद्यावज्जीवश्रुतीनामविद्वत्कामिकर्त्तव्यतां ह्यवोचाम सर्वकर्मणाम्। ननु निरपेक्षमेव जीवननिमित्तमेव कर्त्तव्यं कर्म॥

---

योगशास्त्रविदस्त्वाहुः। अभ्यासवैराग्याभ्यां तन्निरोध इति। तत्र वैराग्येण विषयस्रोतः परिखिलीक्रियते। विवेकदर्शनाभ्यासेन कल्याणस्रोत उत्पद्यत इति च। दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञं वैराग्यमिति च। इतश्च सन्न्यासो ज्ञानं प्रतिप्रत्यासन्न इत्याह। कामेति। सन्न्यासिनः कामप्रवृत्त्यभावेऽपि कथं सन्न्यासस्य ज्ञानं प्रतिप्रत्यासन्नत्वमित्याशङ्क्याह। कामप्रवृत्तेरिति॥ इति तु काममयमानः। काम एष क्रोध एष रजोगुणसमुद्भवः। महाशनो महापाप्मा विद्ध्येनमिह वैरिणमित्यादीनि शास्त्राणि विविदिषासन्न्यासमुपसंहरति। तस्मादिति। यथोक्तस्याधिकारिणो दर्शितया विधया ज्ञानेन विनापि सन्न्यासस्य प्राप्तत्वाद्ब्रह्मचर्य्यादिवेतत्रादिविधिवाक्यमुपपन्नमिति योजना। अथ पारिव्राज्यविधानमनधिकृतविषयमुचितम्। तथा सति सावकाशत्वान्न त्वधिकृतविषयं यावज्जीवश्रुतिविरोधात्तस्या निरवकाशत्वात्सावकाशनिरवकाशयोश्च निरवकाशस्यैव बलवत्त्वादित्युक्तं शङ्कते। नन्विति॥ यावज्जीवश्रुतेर्निरवकाशत्वं दूषयति। नैष दोष इति। कथमतिशयेन सावकाशत्वं तत्राह॥ अविद्वदिति॥ जीवनमात्रं निमित्तीकृत्य चोदितं कर्म्म कथं कामिना कर्त्तव्यं तत्राह। न त्विति॥ प्रत्यवायपरिहारादेरिष्टत्वादित्यर्थः॥

प्रायेण हि पुरुषाः कामबहुलाः कामश्चानेकविषयो ऽनेककर्म्मसाधनसाध्यश्चानेकफलसाधनानि च वैदिकानि कर्म्माणि दाराग्निसम्बन्धपुरुषकर्त्तव्यानि पुनः पुनश्चानुष्ठीयमानानि बहुफलानि कृष्यादिवद्वर्षशतसमाप्तीनि च गार्हस्थ्ये वाऽरण्ये वाऽतस्तदपेक्षया यावज्जीवश्रुतयः कुर्व्वन्नेवेह कर्म्माणीति च मन्त्रवर्णः ॥

तस्मिंश्च पक्षे विश्वजित्सर्व्वमेधयोः कर्म्मपरित्यागः । यस्मिंस्तु पक्षे यावज्जीवानुष्ठानं तदा श्मशानान्तत्वं भस्मा-

---

अनुष्ठातृस्वरूपनिरूपणायामपि न जीवनमात्रं निमित्तीकृत्य कर्त्तव्यमित्याह । प्रायेणेति ॥ तथापि नित्येषु कर्म्मसु न कामनिमित्ता प्रवृत्तिस्तत्र काम्यमानफलाभावादित्याशङ्क्याह । कामश्चेति ॥ प्रत्यवायपरिहारादेरपि कामितत्त्वं युक्तमिति भावः । तथापि नित्ये कर्म्मणि काम्यमानं फलं विध्युद्देशे किञ्चिन्न श्रुतमित्याशङ्क्याह । अनेकेति ॥ कर्म्मभिरनेकैः साधनैर्यद्दुरितनिर्हरणादिसाध्यं तदेवाश्रुतमपि विध्युद्देशे साध्यं भवति, यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितमिति स्मृतेस्तद्व्यतिरेकेण प्रवृत्त्यनुपपत्तेरतो नित्योऽपि कामितफलमस्तीत्यर्थः । ननु वैदिकानां कर्म्मणां नियतफलत्वात्कामोऽपि नियतफलो युक्तस्तथाच नित्येषु तदभावान्न कामितं फलं सेत्स्यति तत्राह । अनेकफलेति ॥ अथ तानि पुरुषमात्रकर्त्तव्यानीति कुतो नियतिसन्न्याससिद्धिस्तत्राह । दारेति । नन्वविरक्तेनापि गृहिणा सकृदेव तान्यनुष्ठेयानि तावता विधेश्चरितार्थत्वात्तथा च कथं फलबाहुल्यमित्याशङ्क्याह । पुनः पुनश्चेति ॥ यावज्जीवोपबन्धाद्‌वृत्तिसिद्धिरिति भावः । तर्हि यावज्जीवश्रुतिवशादशेषाश्रमानुष्ठेयान्यनवरतमग्निहोत्रादीनि कुतो यथोक्तसन्न्यासोपपत्तिरित्याशङ्क्याह ॥ वर्षशतेति । अविरक्तगृहिविषयत्वं श्रुतिमन्त्रयोरुपसंहरति । अत इति ।

यत्तु यावज्जीवश्रुतेरपवादो विश्वजित्सर्व्वमेधयोरिति तदपि कामिगृहिविषयत्वान्न ब्रह्मचर्य्यादेव प्रव्रजेदिति विध्यपवादकमित्याह ।

अथ वंशः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपव-

न्नताच शरीरश्रेतरवर्णापेक्षया वा यावज्जीवश्रुतिर्न हि क्षत्रियवैश्ययोः पारिव्राज्यप्रतिपत्तिरस्ति तया मन्त्रैर्यस्योदितो विधिः। एकाश्रम्यत्वाचार्या इत्येवमादीनां क्षत्रियवैश्यापेक्षत्वम्। तस्मात्पुरुषसामर्थ्यज्ञानवैराग्यकामाद्यपेक्षया व्युत्थानविकल्पक्रमपारिव्राज्यप्रतिपत्तिप्रकारा न विरुध्यन्ते। अत एव नानाश्च पृथग्विधानात्पारिव्राज्य स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वेत्यादिना॥ तस्मात् सिद्धान्याश्रमान्तराण्यधिकृतानामेव॥ इति श्रीबृहदारण्यकभाष्ये षष्ठाध्यायस्य पञ्चमं ब्राह्मणम्॥५॥

अथानन्तरं याज्ञवल्कीयस्य काण्डस्य वंश आरभ्यते।

---

तस्मिंश्चेति। परोक्तं लिङ्गमपि तद्विषयत्वान्न सर्व्वस्य वेदस्य कर्मावभासत्वं द्योतयतीत्याह। यस्मिंश्चेति॥ यावज्जीवश्रुतेर्गत्यन्तरमाह। इतरेति॥ कथं सा क्षत्रियवैश्यविषयत्वेन प्रवृत्ता त्रैवर्णिकानामपि पारिव्राज्यपरिग्रहादित्याशङ्क्याह। न हीति॥ यावज्जीवश्रुतिवदेकाश्रम्यप्रतिपादकस्मृतीनामपि क्षत्रियादिविषयत्वमाह। तथेति॥ श्रुतिस्मृतीनां कर्म्मतत्त्यागार्थानां भिन्नविषयत्वे फलितमुपसंहरति। तस्मादिति॥ यत्तु काणकुब्जान्धादयोऽपि कर्म्माण्यनधिकृता अनुयाह्या एव श्रुत्येति तत्राह। अनधिकृतानाञ्चेति॥ सत्यामेव भार्य्यायां त्यक्ताग्निरुत्सन्नाग्निस्तस्यामसत्यां परित्यक्ताग्निरनग्निक इति भेदः। आश्रमान्तरविषयश्रुतिस्मृतीनामनधिकृतविषयत्वाभावे सिद्धमर्थं निगमयति। तस्मादिति॥ षष्ठे पञ्चमं ब्राह्मणम्॥ ५॥

तदेवं विचारद्वारा श्रुतिस्मृतीनामापाततो विरुद्धानामविरोधं प्रतिपाद्याथ वंश इत्यस्यार्थमाह॥ अथेति॥ साङ्गोपाङ्गस्य सफलस्यात्म-

नः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥ १ ॥ आग्निवेश्यादाग्निवेश्यो गार्ग्याद्गार्ग्यो गार्ग्याद्गार्ग्यो गौतमाद्गौतमः सैतवात्सैतवः पाराशर्य्यायणात्पाराशर्य्यायणो गार्ग्यायणाद्गार्ग्यायण उद्दालकायनादुद्दालकायनो जाबालायनाज्जाबालायनो माध्यन्दिनायनान्माध्यन्दिनायनः सौकरायणात्सौकरायणः काषायणात्काषायणः सायकायनात्सायकायनः कौशिकायनेः कौशिकायनिः ॥२ ॥ घृतकौशिकाद्घृतकौशिकः पाराशर्य्यायणात्पाराशर्य्यायणः पाराशर्य्यात्पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वा-

---

यथा मधुकाण्डस्य वंशः । व्याख्यानन्तु पूर्ववत् । ब्रह्म स्वयम्भु ब्रह्मणे नमः । ॥ ओंमिति श्रीबृहदारण्यके षष्ठाध्यायस्य वंश ब्राह्मणं षष्ठम् । इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यस्य

---

विज्ञानस्य प्रवचनानन्तर्य्यमथयद्दार्थमाह । अनन्तरमिति ॥ यथा प्रथमान्तः शिष्यो गुरुस्तु पञ्चम्यन्त इति चतुर्थान्ते व्याख्यातं तथात्रापीत्याह । व्याख्यानन्त्विति ॥ इत्थमागमोपपत्तिभ्यां सन्न्यासं वैविकर्त्तव्यताकमा-

त्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्य्यात्काप्यात्कैशोर्य्यः काप्यः कुमारहारितात्कुमार हारितो गालवाद्गालवो विदर्भी कौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्व्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वꣳसनान्मृत्युः प्राध्वꣳसनः प्रध्वꣳसनात्प्रध्वꣳसन एक ऋषेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥ ३ ॥

षष्ठं ब्राह्मणम् ॥ ६ ॥ इति बृहदारण्यके षष्ठोऽध्यायः ॥ उपनिषत्सु चतुर्थोऽध्यायः ॥ ४ ॥

---

परमहंसपरिव्राजकाचार्य्यस्य श्रीशङ्करस्य भगवतः कृतौ बृहदारण्यकटीकायां षष्ठोऽध्यायः ॥

---

तत्त्वज्ञानममृतत्वसाधनं सिद्धमित्युपसंहर्त्तुमितिशब्दः ॥ परिसमाप्तौ मङ्गलमाचरति । ब्रह्मेति ॥ ओं तत्सत् ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीमच्छुद्धानन्दभगवत्पूज्यपादशिष्य श्रीमद्भगवदानन्दज्ञानविरचितायां श्रीमद्बृहदारण्यकभाष्यटीकायां षष्ठे प्रपाठके षष्ठं ब्राह्मणम् ॥ समाप्तश्चायं षष्ठोऽध्यायः ॥

## अथ सप्तमाध्यायप्रारम्भः।

हरिः ओं ॥ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ।

---

पूर्णमद इत्यादि खिलं काण्डमारभ्यते । अध्यायचतुष्टयेन यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्व्वान्तरो निरुपाधिकोऽशनायाद्यतीतो नेति नेतीति व्यपदेश्यो निर्द्धारितो । यद्विज्ञानं केवलममृतत्वसाधनमङ्गना तस्यैवात्मनः सोपाधिकस्य शब्दार्थादिव्यवहारविषयापन्नस्य पुरस्तादनुक्तान्युपासनानि कर्म्मभिरविरुद्धानि प्रकृष्टाभ्युदयसाधनानि क्रममुक्तिभाञ्जि च यानि तानि वक्तव्यानीति परः सन्दर्भः । सर्व्वोपासनशेषत्वेनोङ्कारो दमं दानं दयामित्येतानि च विधित्सितानि । पूर्णमदः पूर्णं न कुतश्चिद्व्यावृत्तं व्याप्येत्येतन्निष्ठा च कर्त्तरि द्रष्टव्या । अद इति अपरोक्षाभिधायि सर्व्वनाम तत्परं ब्रह्मेत्यर्थः ।

---

पूर्वस्मिन्नध्याये ब्रह्मात्मज्ञानं सफलं साङ्गोपाङ्गं वादन्यायेनोक्तमिदानीं काण्डान्तरमवतारयति । पूर्णमिति ॥ पूर्वाध्यायेष्वेव सर्वस्य वक्तव्यस्य समाप्तत्वादलं खिलकाण्डारम्भेनेत्याशङ्क्य पूर्वत्रानुक्तं परिशिष्टं वस्तु खिलशब्दवाच्यमस्तीत्याहाध्यायचतुष्टयेनेति ।' सर्वान्तर इत्युक्त इति शेषः ॥ अमृतत्वसाधनं निर्द्धारितमिति पूर्वेण सम्बन्धः । शब्दार्थादीत्यादिशब्देन नामकर्मादिग्रहः । दयां शिक्षेदित्युक्तानीति शेषः ।

तत्सम्पूर्णमाकाशवत्। व्यापि निरन्तरं निरुपाधिकं च। तदेवेदं सोपाधिकं नामरूपस्थं व्यवहारापन्नं पूर्णं स्वेन रूपेण परमात्मना व्याप्येव नोपाधिपरिच्छिन्नेन विशेषात्मना। तदिदं विशेषापन्नं कार्य्यात्मकं ब्रह्म पूर्णात्कारणात्मन उदच्यते उद्रिच्यते उद्गच्छतीत्येतत्। यद्यपि कार्य्यात्मनोद्रिच्यते तथापि यत्स्वरूपं पूर्णत्वं परमात्मभावं न जहाति पूर्णमेवोद्रिच्यते। पूर्णस्य कार्य्यात्मनो ब्रह्मणः पूर्णं पूर्णत्वमादाय गृहीत्वात्मस्वरूपैकरसत्वमापाद्यविद्यया ऽविद्यया कृतं भूतमात्रोपाधिसंसर्गजन्यत्वावभासं तिरस्कृत्य पूर्णमेवानन्तरमबाह्यं प्रज्ञानघनैकरसस्वभावं केवलं ब्रह्मावशिष्यते। यदुक्तं ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेत्। तस्मात्तत्सर्वमभवदित्येषोऽस्य मन्त्रस्यार्थस्तत्र ब्रह्मेत्यस्यार्थः पूर्णमद इति। इदं पूर्णमिति। ब्रह्म वा इदमग्र

---

ओंकारादि यत्र साधनत्वेन विधित्सितं तत्पूर्वोक्तमैक्यज्ञानमनुवदति। पूर्णमिति॥ अवयवार्थमुक्त्वा समुदायार्थमाह। तत्सम्पूर्णमिति॥ अदः पूर्णमित्यनेन लक्ष्यं तत्पदार्थं दर्शयित्वा त्वंपदार्थं दर्शयति। तदेवेति॥ कथं सोपाधिकस्य पूर्णमित्याशङ्क्याह। स्वेनेति॥ व्यावर्त्त्यमाह। नोपाधीति॥ न वयमुपहितेन विशिष्टेन रूपेण पूर्णतां वर्णयामः किन्तु केवलेन स्वरूपेणेत्यर्थः। लक्ष्यौ तत्त्वंपदार्थावुक्त्वा तावेव वाच्यौ कथयति। तदिदमिति॥ कथं कार्य्यात्मनोद्रिच्यमानस्य पूर्णत्वमित्याशङ्क्याह। यद्यपीति॥ लक्ष्यपदार्थैक्यज्ञानफलमुपन्यस्यति। पूर्णस्येति॥ उपक्रमोपसंहारयोरैक्यरूपमैक्ये श्रुतितात्पर्यलिङ्गं सङ्गिरते। यदुक्तमिति॥ कथं पूर्णकण्डिकाया ब्रह्मकण्डिकया सहैका-

आसीदित्यस्यार्थः। तथा च श्रुत्युत्तरम्। यदेवेह तदमुत्र यदमुत्र तदन्विहेति॥

अतोऽदःशब्दवाच्यं पूर्णं ब्रह्म तदेवेदं पूर्णं कार्यस्थं नामरूपोपाधिसंयुक्तमविद्ययोद्रिक्तम्। तस्मादेवं परमार्थस्वरूपादन्यदिव प्रत्यवभासमानं तद्यदात्मानमेव परं पूर्णं ब्रह्म विदित्वाऽहमदः पूर्णं ब्रह्मास्मीत्येवं पूर्णमादाय तिरस्कृत्या पूर्णस्वरूपतामविद्याकृतां नामरूपोपाधिसम्पर्कजनितया ब्रह्मविद्यया पूर्णमेव केवलमवशिष्यते। तथा चोक्तम्। तस्मात्तत्सर्व्वमभवदिति॥ यः सर्व्वोपनिषदर्थो ब्रह्म स एषोऽनेन मन्त्रेणानूद्यते उत्तरसम्बन्धार्थं ब्रह्मविद्यासाधनत्वेन हि वक्ष्यमाणानि साधनान्योङ्कारदमदानदयाख्यानि विधित्सितानि खिलप्रकरणसम्बन्धात् सर्व्वोपासनाङ्ग

---

र्थत्वेनैकवाक्यत्वमित्याशङ्क्य तद्व्युत्पादयति। तत्रेत्यादिना॥ उपक्रमोपसंहारसिद्धे ब्रह्मात्मैक्ये कठश्रुतिं संवादयति। तथा चेति॥

ब्रह्मात्मनोरैक्येनैकवाक्यत्वमित्याशङ्क्योक्तमुपजीव्य वाक्यार्थमाह। अत इति॥ पूर्णं यद्ब्रह्मेति यच्छब्दो द्रष्टव्यः। उक्तमेव व्यनक्ति। तस्मादेवेति॥ संसारावस्थां दर्शयित्वा मोक्षावस्थां दर्शयति। तद्यदात्मानमिति॥ उक्तविद्याफलवाक्योपक्रममनुकूलयति। तथा चोक्तमिति॥ न केवलं ब्रह्मकाण्डकैवाक्यं मन्त्रस्यैकवाक्यत्वं किन्तु सर्वाभिरुपनिषद्भिरित्याह। यः सर्वोपनिषदर्थ इति॥ अनुवादफलमाह। उत्तरेति॥ तदेव स्फुटयति, ब्रह्मविद्येति, तस्माद्युक्तो ब्रह्मणोऽनुवाद इतिशेषः॥ कथं तर्हि सर्वोपासनशेषत्वेन विधित्सितत्वेनोंकारादीनामुक्तमत आह खिलेति॥ अद्वितीयं ब्रह्मोत्पत्त्यर्गप्रवृत्तं शास्त्रं प्रलयावस्थब्रह्मविषयं

भूतानि च। अत्रैके वर्णयन्ति। पूर्णात्कारणात्पूर्णं कार्य्य-मुद्रिच्यते। उद्रिक्तं कार्य्यं वर्त्तमानकालेऽपि पूर्णमेव पर-मार्थवस्तुभूतं द्वैतरूपेण पुनः प्रलयकाले पूर्णस्य कार्य्यस्य पूर्णतामादायात्मनिधित्वात्पूर्णमेवावशिष्यते कारणरूपम्। एवमुत्पत्तिस्थितिप्रलयेषु त्रिष्वपि कालेषु कार्य्यकारणयोः पूर्णतैव। सा चैकैव पूर्णता कार्य्यकारणयोर्भेदेनैव व्यपदिश्यते। एवञ्च तथा द्वैताद्वैतात्मकमेकं ब्रह्म। यथा किल समुद्रो जलतरङ्गफेनबुद्बुदाद्यात्मक एक एव। यथा जलं सत्यं तदुद्भवाश्च तरङ्गफेनबुद्बुदादयः समुद्रात्मभूता एवाविर्भावतिरोभावधर्म्मिणः परमार्थसत्याः। एवं सर्व्व-मिदं द्वैतं परमार्थसत्यमेव जलतरङ्गादिस्थानीयं समुद्र-जलस्थानीयन्तु परं ब्रह्म। एवञ्च किल द्वैतस्य सत्यत्वे कर्म्म-काण्डस्य प्रामाण्यं यदा पुनर्द्वैतं द्वैतमिवाविद्याकृतं मृग-

---

तृष्णिकास्तन्तु विषये प्रवृत्तं तस्यापवादः। ततो द्वैता-द्वैतरूपं ब्रह्म सर्व्वोपनिषदर्थः॥ तदेव ब्रह्मानेन मन्त्रेण सङ्क्षिप्यत इति भर्तृप्रपञ्चपक्षमुत्थापयति। अत्रेत्यादिना॥ कार्य्यकारणयोरुत्-पत्तिकाले पूर्णत्वमुक्त्वा स्थितिकालेऽपि तदाह। उद्रिक्तमिति॥ प्रल-यकालेऽपि तयोः पूर्णत्वं दर्शयति। पुनरिति॥ कालभेदेन कार्य्य-कारणयोरुक्तां पूर्णतां नियमयति। एवमिति॥ कार्य्यकारणत्वे पूर्णे चेत्तर्हि कथमद्वैतसिद्धिरित्याशङ्क्याह। सा चेति॥ कथं तर्हि तयोरुक्तं पूर्णत्वं तदाह। कार्य्यकारणयोरिति॥ एका पूर्णता व्यपदिश्यते न द्वयोरिति स्थिते लब्धमर्थमाह। एवञ्चेति॥ एकं ह्यने-कात्मकमिति विप्रतिषेधमाशङ्क्य दृष्टान्तेन निराचष्टे। यथा किलेति॥ एवमेकं ब्रह्मानेकात्मकमिति शेषः। ब्रह्मणो द्वैताद्वैतात्मकत्वेऽपि सत्यमद्वैतमसत्यमितरदित्याशङ्क्याह। यथा चेत्यादिना॥ द्वैतस्य परमा-

त्वचिकादद्वैतमद्वैतमेव परमार्थतस्तदा किल कर्म्मकाण्डं विषयाभावादप्रमाणं भवति ॥

तथा च विरोध एव स्यादेकदेशभूतोपनिषत्प्रमाणं परमार्थतोऽद्वैतवस्तुप्रतिपादकत्वात्। अप्रमाणं कर्म्मकाण्डमसद्द्वैतविषयत्वात्। तद्विरोधपरिजिहीर्षया श्रुत्यैतदुक्तं कार्य्यकारणयोः सत्यत्वं समुद्रवत् पूर्णमद इत्यादिनेति। तदसत्। विशिष्टविषयापवादविकल्पयोरसम्भवात्। न हीयं सुविवेचिता कल्पना। कस्माद्यया क्रियाविषये उत्सर्गप्राप्तस्यैकदेशोऽपवादः क्रियते। यथा अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्य इति हिंसा सर्वभूतविषयोत्सर्गेण निवारिता। तीर्थे विशिष्टविषये ज्योतिष्टोमादावनुज्ञायते। न च तथा वस्तु-

थसत्यत्वे कर्म्मकाण्डश्रुतिमनुकूलयति। एवञ्चेति ॥ विपक्षे दोषमाह। यदा पुनरिति ॥

अस्तु कर्म्मकाण्डप्रामाण्यं नेत्याह। तथाचेति। विरोधोऽध्ययनविधेरिति शेषः। तमेव विरोधं साधयति। वेदेति। कथं तर्हि विरोधसमाधिस्तत्राह। तद्विरोधेति ॥ प्राप्तं भर्तृप्रपञ्च प्रस्थानं प्रत्याचष्टे। तदसदिति ॥ विशिष्टमद्वितीयं ब्रह्म तद्विषयोत्सर्गापवादयोर्विकल्पसमुच्चययोश्चासम्भवं वक्तुं प्रतिज्ञाभागं विभजते। न हीति ॥ तत्र प्रश्नपूर्वकं हेतुं विवृणोति। कस्मादित्यादिना ॥ यथेत्यादिग्रन्थस्य न च तथेत्यादिना सम्बन्धः। क्रियायामुत्सर्गापवादसम्भावनामुदाहरति। यथेत्यादिना ॥ तथाऽन्यत्रापि क्रियायामुत्सर्गापवादौ द्रष्टव्याविति शेषः। वैधर्म्यदृष्टान्तस्य दार्ष्टान्तिकमाह। न चेति ॥ विषयभेदे सत्युत्सर्गापवादौ दृष्टौ न तावदद्वितीये ब्रह्मणि सम्भवतः। न हि ब्रह्माद्वयमेव जायते नोयते चेति सम्भावनास्पदमिति भावः। उत्सर्गापवादानुपपत्तिवद्ब्रह्मणि विकल्पानुपपत्तेश्च तदेकरसमेष्टव्यमित्याह। तथेति ॥

विषय इत्याद्वैतं यत्नोत्सर्गेण प्रतिपाद्य पुनस्तदेकदेशोऽपवदितुं शक्यते। ब्रह्मणोऽद्वैतत्वादेवैकदेशत्वानुपपत्तेस्तथा विकल्पानुपपत्तेश्च। यथातिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीति ग्रहणाग्रहणयोः पुरुषाधीनत्वाद्विकल्पो भवति। न त्विह तथा वस्तुविषये द्वैतं वा स्याददद्वैतं वेति विकल्पः सम्भवत्यपुरुषतन्त्रत्वादात्मवस्तुनो विरोधाच्च द्वैताद्वैतत्वयोरेकत्वस्य। तस्मान्न सुविवर्त्तितेयं कल्पना श्रुतिन्यायविरोधाच्च सैन्धवघनवत् प्रज्ञानैकरसघनं निरन्तरं पूर्वापरबाह्याभ्यन्तरभेदविवर्जितं सबाह्याभ्यन्तरमजं नेति नेत्यस्थूलमनणुमजमजरमभयममृतमित्येवमाद्याः श्रुतयो निश्चितार्थाः संशयविपर्य्यासाशङ्कारहिताः सर्व्वाः समुद्रे प्रक्षिप्ताः स्युरकिञ्चित्करत्वात्। तथा न्यायविरोधोऽपि सावयवस्यानेकात्मकस्य क्रियावतो नित्यत्वानुपपत्तेः। नित्यत्वञ्चात्मनः स्मृत्यादिदर्शनादनुमीयते तद्वि-

---

विकल्पानुपपत्तिमुपपादयति। यथेत्यादिना॥ सम्प्रति समुच्चयासम्भवमभिदधाति। विरोधाच्चेति॥ उत्सर्गापवादविकल्पसमुच्चयानामसम्भवान्न युक्ता ब्रह्मणो नानारसत्वकल्पनेति फलितमाह। तस्मादिति॥ परकीयकल्पनानुपपत्तौ हेत्वन्तरं प्रतिज्ञाय श्रुतिविरोधं प्रकटीकृत्य न्यायविरोधं प्रकटयति। तथेति॥ ब्रह्मणोऽनेकरसत्वे स्यादिति शेषः। नित्यत्वानुपपत्तेरात्मनो नित्यत्वाङ्गीकारविरोधः स्यादित्यध्याहारः। ननु तस्य नित्यत्वं नाङ्गीक्रियते मानाभावादिति प्रासङ्गिकामाशङ्कां प्रत्याह। नित्यत्वञ्चेति॥ स्मृत्यादिदर्शनादित्यादिशब्देन स एव तु कर्म्मानुस्मृतिशब्दविधिभ्य इत्यधिकरणोक्ता हेतवो गृह्यन्ते। अनुमीयते कल्प्यते स्वीक्रियत इति यावत्। तद्विरोधश्च स्मृत्यादिदर्शनकृता

रोधश्च प्राप्नोति। अनित्यत्वे भवत्कल्पनानर्थक्यञ्च स्फुटं। एवं चास्मिन् पक्षे कर्म्मकाण्डानर्थक्यम्। अकृताभ्यागमकृतविप्रणाशप्रसङ्गात्॥

ननु ब्रह्मणो द्वैताद्वैतात्मकत्वे समुद्रादिदृष्टान्ता विद्यन्ते कथमुच्यते भवतैकस्य द्वैताद्वैतत्वं विरुद्धमिति। न। अन्य विषयत्वात्। नित्यनिरवयववस्तुविषयं हि विरुद्धत्वमवोचाम द्वैताद्वैतत्वस्य न कार्य्यविषये सावयवे। तस्माच्छ्रुतिस्मृतिन्यायविरोधादनुपपन्नेयं कल्पना। अस्याः कल्पनाया वरमुपनिषत्परित्याग एव। अध्येयत्वाच्च न शास्त्रार्थेयं कल्पना। न हि जननमरणाद्यनर्थशतसहस्रभेदसमाकुलं

---

त्वनित्यत्वानुमानविरोधश्चेत्यर्थः, आत्मनोऽनित्यत्वे दोषान्तरमाह, भवदिति॥

कर्म्मकाण्डस्य सत्यार्थत्वं परेण कल्प्यते। तदानर्थक्यमात्मनित्यत्वे स्पष्टमेवापतेदित्युक्तमेव स्फुटयति। स्फुटमेवेति॥ ब्रह्मणो नानारसत्वे विरोधमुक्तमसहमानः चोद्यं स्मारयति। नन्विति॥ समुद्रादीनां कार्य्यत्वसावयवत्वाभ्यामनेकात्मकत्वमविरुद्धं ब्रह्मणस्तु नित्यत्वान्निरवयवत्वाच्च नानेकात्मकत्वं युक्तमिति वैषम्यमादर्शयन्नुत्तरमाह। नेत्यादिना॥ ब्रह्मणो नानारसत्वकल्पनानुपपत्तिमुपसंहरति। तस्मादिति॥ अजो नित्यः शाश्वतोऽयं पुराण इत्याद्याः स्मृतयः। ननु प्रत्यक्षाद्यविरोधेनोपनिषदां विषयसिद्ध्यर्थमेषा कल्पना क्रियते। तथा च कथं साऽनुपपन्नेत्याशङ्क्याह। अस्या इति॥ विरुद्धार्थत्वे कल्पितेऽपि तत्प्रामाण्यानुपपत्तेरविशेषादिति भावः। किञ्च ब्रह्मणो नानारसत्वं लौकिकं वैदिकं वा। नाद्यः। तस्यालौकिकत्वात्तन्नानारसत्वे लोकस्य तटस्थत्वात् न द्वितीयः। तत्र नानारसत्वस्य ध्येयत्वेन ज्ञेयत्वेन वा शास्त्रेणानुपदेशादित्याह। अध्येयत्वाच्चेति॥ तदेव स्फुटयति। न हीति॥ इतश्च नानारसं ब्रह्म न शास्त्रप्रकाश्यमित्याह। प्रज्ञानेति॥ चकारादुपदिश्यत इत्याकृष्यते

समुद्रवनादिवत्सावयवमनेकरस ब्रह्म ध्येयत्वेन विज्ञेयत्वेन वा श्रुत्योपदिश्यते। प्रज्ञानघनतास्योपदिश्यते। एकधैवानुद्रष्टव्यमिति चानेकधा दर्शनापवादाच्च मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति। यच्च श्रुत्या निन्दितं तन्न कर्त्तव्यं। यच्च न क्रियते न स शास्त्रार्थो ब्रह्मणोऽनेकरसत्वमनेकधात्वञ्च द्वैतरूपं निन्दितत्वान्न द्रष्टव्यं। अतो न शास्त्रार्थः। यत्त्वेकरसत्वं ब्रह्मणस्तद्द्रष्टव्यत्वात्प्रशस्तं। प्रशस्तत्वाच्च शास्त्रार्थो भवितुमर्हति। यत्तूक्तं वेदैकदेशस्याप्रामाण्यं कर्म्मविषये द्वैताभावादद्वैते च प्रामाण्यमिति तन्न यथाप्राप्त उपदेशार्थत्वात्। न हि द्वैतमद्वैतं वा वस्तु जातमात्रमेव पुरुषं ज्ञापयित्वा पश्चात्कर्म्म वा ब्रह्मविद्या-

---

अनेकधा दर्शनापवादाच्च नानारसं ब्रह्म शास्त्रार्थो न भवतीति शेषः। भेददर्शनस्य निन्दितत्वे लब्धमर्थमाह। यच्चेति॥ अकर्त्तव्यत्वे प्राप्तमर्थं कथयति। यच्च नेति। सामान्यन्यायं प्रकृते योजयति। ब्रह्मण इति॥ कस्तर्हि शास्त्रार्थस्तत्राह। यत्त्विति॥ ब्रह्मैकरसे प्रागुक्तं दोषमनुभाषते। यत्तूक्तमिति। कर्मकाण्डस्य कर्मविषयेन प्रामाण्यमसद्द्वैतविषयत्वाद्ब्रह्मकाण्डस्य त्वद्वैते प्रामाण्यं परमार्थाद्वैतवस्तुप्रतिपादकत्वात्तथा च विरोधोऽध्ययनविधेरित्यनुवादार्थः। कर्मकाण्डप्रामाण्यं प्रत्याचष्टे। तन्नेति॥ प्रसिद्धं भेदमादाय तत्रैव विधिनिषेधोपदेशस्य प्रवृत्तिनिवृत्तिद्वारार्थवत्त्वान्न कर्म्मकाण्डानर्थक्यमित्यर्थः। ननु शास्त्रमेवादौ भेदं बोधयित्वा पश्चादभ्युदयसाधनं कर्मोपदिशति। तथा च नास्ति भेदस्यान्यतः प्राप्तिरत आह। नहीति। यथा हि शास्त्रं जातमात्रं पुरुषं प्रत्यद्वैतं वस्तु बोधयित्वा पश्चाद्ब्रह्मविद्यामुपदिशतीति नेष्यते तथा प्रथममेव पुरुषं प्रति द्वैतं बोधयित्वा कर्म्म पुनर्बोधयतीत्यपि नाभ्युपेयं प्रथमतो भेदवेदनावस्थायामस्य शास्त्रानधिकारित्वा-

श्चोपदिशति शास्त्रं न चोपदेशार्हं द्वैतं जातमात्रं प्राणि-
बुद्धिगम्यत्वात् ॥

न च द्वैतस्यानृतत्वबुद्धिः प्रथममेव कस्यचित्स्यात्। येन
द्वैतस्य सत्यत्वमुपदिश्य पश्चादात्मनः प्रामाण्यं प्रतिपादये-
च्छास्त्रम्। नापि पाषण्डिभिरपि प्रस्थापिताः शास्त्रस्य
प्रामाण्यं न गृह्णीयुः। तस्माद्यथा प्राप्तमेव द्वैतमविद्याकृतं
स्वाभाविकमुपादाय स्वाभाविक्यैवाविद्यया युक्ताय राग-
द्वेषादिदोषवते यथाभिमतपुरुषार्थसाधनं कर्मोपदि-

---

दित्यर्थः। द्वैतस्योपदेशार्हत्वमङ्गीकृत्योक्तं तदेव नास्तीत्याह। न चेति॥
ननु द्वैतस्य सत्यबुद्ध्यभावे श्रुतेरुक्तानुष्ठानाय पुंसां प्रवृत्त्यनुपपत्तेः
स्वप्रामाण्यसिद्ध्यर्थमेव द्वैतसत्यत्वं श्रुतिर्बोधयिष्यतीति नेत्याह। न च
द्वैतस्येति॥ द्वैतानृतत्ववादिषु कर्मजडानां प्रद्वेषप्रतीतेर्न प्रथमद्वैतानृ-
तत्वबुद्धिर्न च द्वैतसत्यत्वं श्रुत्यर्थतत्परिचयहीनानामपि द्वैतसत्यत्वाभिनि-
वेशादित्यर्थः। किञ्च न द्वैतवैतथ्यं शास्त्रप्रामाण्यविघातकं यतो बौद्धादि-
भिः श्रेयसे प्रस्थापिताः स्वशिष्या द्वैतमिथ्यात्वावगमेऽपि स्वर्गकामश्चैत्यं
वन्देतेत्यादिशास्त्रस्य प्रामाण्यं गृह्णन्ति। तथाग्निहोत्रादिशास्त्रस्यापि
प्रामाण्यं भविष्यति साधनत्वमात्रेण व्यवहारादित्याह, नापीति॥ काण्डद्वयस्य
प्रामाण्योपपत्तिमुपसंहरति। तस्मादित्यादिना। प्रसिद्धो योऽयं क्रिया-
दिरूपे द्वैते दोषः सातिशयत्वादिस्तद्दर्शनं विवेकस्तद्वते तस्माद्द्वैता-
द्विपरीतमौदासीन्योपलक्षितं स्वरूपं तस्मिन्नवस्थानं कैवल्यं तदर्थिने
मुमुक्षवे साधनचतुष्टयसम्पन्नायेत्यर्थः। किञ्च तत्त्वज्ञानादूर्द्ध्वं पूर्वं वा
वा काण्डयोर्विरोधः शङ्क्यते। आद्य इत्याह अथेति॥ व्यवस्थाभेदा-
देकस्मिन्नपि पुरुषे काण्डद्वयस्य प्रामाण्यमविरुद्धम्। इतरेवं स्थिते
स्तुत्युपनिषद्भ्यस्तत्त्वज्ञानोत्पत्त्यनन्तरं नान्तरीयकत्वेन प्राप्ते कैवल्ये पुरु-
षनैराकाङ्क्ष्यं जायते न च निराकाङ्क्षं पुरुषं प्रति शास्त्रस्य शक्तत्व-

श्रत्यये पश्चात्प्रसिद्धक्रियाकारकफलस्वरूपदोषदर्शनवति तद्विपरीतौदासीन्यस्वरूपावस्थाप्रार्थिने तदुपायभूतमात्मैकत्वदर्शनात्मिकां ब्रह्मविद्यामुपदिशति। अथैवं सति तदौदासीन्यस्वरूपावस्थाने फले प्राप्ते शास्त्रस्य प्रामाण्यं प्रत्यर्थित्वं निवर्त्तते। तदभावाच्छास्त्रस्यापि शास्त्रत्वं तं प्रति निवर्त्तत एव। तथा प्रतिपुरुषं परिसमाप्तं शास्त्रमिति न शास्त्रविरोधगन्धोऽप्यस्ति। अद्वैतज्ञानावसानत्वाच्छास्त्रशिष्यशासनादिद्वैतभेदस्य। अन्यतमावस्थाने हि विरोधः स्यात्। अवस्थितस्येतरेतरापेक्षत्वात्तु शास्त्रशिष्यशासनानां नान्यतमो व्यवतिष्ठते। सर्वसमाप्तौ तु कस्य विरोध आशङ्क्येताद्वैते केवले शिवे सिद्धे नाप्यविरोधता ऽतएव॥

---

मस्ति। प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा। पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयत इति न्यायात्तत्तत्तं प्रति प्रवर्त्तकादिविरहितः शास्त्रत्वायोगादतो ज्ञानादूर्द्धं धर्म्माभावाद्विरोधासिद्धिरित्यर्थः॥ एकस्मिन्पुरुषे दर्शितन्यायं सर्वत्रातिदिशति। तथेति॥ ज्ञानादूर्द्धं विरोधाभावमुपसंहरति। इति नेति॥ कस्मान्नरं प्रत्याह। अद्वैतेति॥ तत्त्वज्ञानात्पूर्व्वं भेदस्यावस्थितत्वात्तमविद्यमादायाधिकारिभेदादवस्थाभेदाद्वा काण्डयोरविरोधसिद्धिरित्यर्थः॥ भेदमेवोपपादयति। अन्यतमेति॥ शिष्यादीनामन्यतमस्यैवावस्थानं चेदवस्थितस्येतरस्मिंश्च सापेक्षत्वाच्च सोऽप्यवतिष्ठेत। न च ज्ञानादागत्यान्यतमस्यैवावस्थानं सर्वेषामेव तेषां यथा प्रतिभावमवस्थानात्ततो न पूर्व्वं विरोधशङ्केत्यर्थः। ऊर्द्ध्वं विरोधशङ्काभावमधिकृत्यैव वदताऽनुवदति। सर्व्वेति॥

अथाप्यभ्युपगम्य ब्रूमः। द्वैताद्वैतात्मकत्वेऽपि शास्त्रविरोधस्य तुल्यत्वात्। यदापि समुद्रादिवत् द्वैताद्वैतात्मकमेकं ब्रह्माभ्युपगच्छामो नान्यद्वस्त्वन्तरं तदापि भवदुक्ताच्छास्त्रविरोधान्न मुच्यामहे। कथं। एकं हि परं ब्रह्म द्वैताद्वैतात्मकं तच्छोकमोहाद्यतीतत्वादुपदेशं न काङ्क्षति। न चोपदेष्टान्यो ब्रह्मणो द्वैताद्वैतरूपस्य। ब्रह्मण एकस्यैवाभ्युपगमात्। अथ द्वैतविषयस्यानेकत्वादन्योऽन्य उपदेशो न ब्रह्मविषय उपदेश इति चेत्तदा द्वैतात्मकं च ब्रह्म नान्यदस्तीति विरुध्यते। यस्मिन्द्वैतविषयेऽन्योन्य उपदेशः सोऽन्यो द्वैतश्चान्यदेवेति समुद्रदृष्टान्तो विरुद्धः। न च समुद्रोदकैकत्ववद्ब्रह्मानेकत्वे ब्रह्मणोऽन्योपदेशग्रहणादिकल्पना सम्भवति। न हि हस्तादिद्वैताद्वैतात्मके देवदत्ते वाक्कर्म-

---

कथं कैवल्यं विरोधाभावस्य सत्त्वादित्याशङ्क्याह। नापीति॥ अद्वैतत्वादेशाभावस्यापि तत्त्वनिमज्जनादित्याह। अतएवेति॥ अद्वितीयमेव ब्रह्म न द्वैतात्मकमित्युपपादितमिदानीं ब्रह्मणो द्वैताद्वैतात्मकत्वाभ्युपगमेऽपि विरोधो न शक्यते परिहर्तुमित्याह। अथापीति॥ तुल्यत्वात्तदभ्युपगमो व्यर्थ इति शेषः। उक्तमेवोपदिशति। यदापीति॥ द्वैताद्वैतात्मकमेकं ब्रह्मेति पक्षे कथं विरोधो न समाधीयते। द्वैतमद्वैतञ्चाधिकृत्य काण्डद्वयप्रामाण्यसम्भवादित्याक्षिपति। कथमिति॥ ब्रह्मविषयः शास्त्रोपदेशः किम्वाऽब्रह्मविषयः। प्रथमे द्वैताद्वैतरूपस्यैव ब्रह्मणोऽभ्युपगमात्तस्य च नित्यमुक्तत्वान्नोपदेशः सम्भवतीत्याह। एकं हीति। तस्योपदेशाभावे हेत्वन्तरमाह। न चेति॥ उपदेष्टा हि ब्रह्मणोऽन्योऽनन्यो वा॥ नाद्योऽभ्युपगमविरोधात्। न द्वितीयो भेदमन्तरेणोपदेश्योपदेशकाभावासम्भवादिति भावः। कल्पान्तरमुत्थापयति। अथेति। प्रतिज्ञाविरोधेन निराकरोति। तदेति॥ किञ्च सर्वस्य ब्रह्मरूपत्वे यः

योर्देवदत्तैकदेशभूतयोर्वागुपदेष्टा कर्णः केवल उपदेशस्य ग्रहीता। देवदत्तस्तु नोपदेष्टा नाप्युपदेशस्य ग्रहीतेति कल्पयितुं शक्यते। समुद्रैकोदकात्मत्ववदेकत्वविज्ञानवत्त्वाद्देवदत्तस्य। तस्माच्छ्रुतिन्यायविरोधश्चाभिप्रेतार्थासिद्धश्चैवं कल्पनायां स्यात्। तस्माद्यथा व्याख्यात एवास्माभिः पूर्णमद इत्यस्य मन्त्रस्यार्थः।

---

समुद्रदृष्टान्तः सन् स्यात्परस्परोपदेशस्याब्रह्मविषयत्वादित्याह। यस्मिन्निति॥ अथ यथा फेनादिविकाराणां भिन्नत्वेऽपि समुद्रोदकात्मकत्वं तथा जीवादीनां भिन्नत्वेऽपि ब्रह्मस्वभावविज्ञानैक्याद्ब्रह्म सर्वमिति न विरुध्यते तत्राह। न चेति। सर्वस्य ब्रह्मत्वमङ्गीकृतं चेद्ब्रह्मविषय एवोपदेशः स्याद्भेदस्याविचारितरमणीयत्वादित्यर्थः। ननु नानारूपवस्तु समुदायो ब्रह्म तत्रोपदेश्यभेदादुपदेष्टोपदेश्यभावो ब्रह्म तु नोपदेश्यं उपदेशकञ्चेति तत्राह। न हीति॥ तत्र हेतुमाह। समुद्रेति॥ यथा समुद्रस्योदकात्मना फेनादिष्वेकत्वं तथा देवदत्तावयवस्य वागाद्यवयवेष्वेकत्वेन विज्ञानवत्त्वान्न व्यवस्थासम्भवस्तथा ब्रह्मण्यपि द्रष्टव्यमित्यर्थः। मतान्तरनिराकरणमुपसंहरति। तस्मादिति॥ आत्मैकरसस्य प्रतिपादिका श्रुतिर्न्यायश्च सावयवस्यानेकात्मकस्येत्यादावुक्तः। अभिप्रेतार्थासिद्धिर्भवत्कल्पनानर्थक्यञ्चेत्यादिना दर्शिता। एवं कल्पनायामेकानेकात्मकं ब्रह्मेत्यभ्युपगतेऽपीत्यर्थः। परकीयव्याख्यानासम्भवफलितमाह। तस्मादिति।

# ओं३ खं ब्रह्म।

ओं खं ब्रह्मेति मन्त्रोऽयमान्यत्राविनियुक्त इह ब्राह्मणे ध्यानकर्मणि विनियुज्यते। अत्र च ब्रह्मेति विशेष्याभिधानं खमिति विशेषणम्। विशेषणविशेष्ययोश्च सामानाधिकरण्येन निर्देशो नीलोत्पलवत्। खं ब्रह्मेति ब्रह्मशब्दो बृहद्वस्तुमात्रास्पदो विशेषितोऽतो विशेष्यते खं ब्रह्मेति। यत्तत्खं ब्रह्म तदोंशब्दवाच्यमोंशब्दस्वरूपमेतत। उभयथापि सामानाधिकरण्यमविरुद्धमिह च ब्रह्मोपासनसाधनत्वार्थमोंशब्दः प्रयुक्तः। श्रुत्यन्तरादेतदालम्बनं श्रेष्ठमेतदालम्बनं परमोमित्यात्मानं युञ्जीत। ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत। ओमित्येवं ध्यायथ आत्मा-

---

ध्यानशेषत्वेनोपनिषदर्थं ब्रह्मानूद्य तद्विधानार्थं तस्मिन्विनियुक्तं मन्त्रमुत्थापयति। ओं खमिति॥ इषे त्वेत्यादिवत्तस्य कर्मान्तरे विनियुक्तत्वमाशङ्क्याह। अयञ्चेति। विनियोजकाभावादिति भावः। तर्हि ध्यानेऽपि नायं विनियुक्तो विनियोजकाभावाविशेषादित्याशङ्क्याह। इहेति। खं पुराणमित्यादि ब्राह्मणं तस्य च विनियोजकत्वं ध्यानसमवेतार्थप्रकाशनसामर्थ्यात् यद्यपि मन्त्रनिष्ठं सामर्थ्यं विनियोजकं तथापि मन्त्रब्राह्मणयोरेकार्थत्वाद्ब्राह्मणस्य सामर्थ्यद्वारा विनियोजकत्वमविरुद्धमिति भावः। अत्रेति मन्त्रोक्तिः॥ विशेषणविशेष्यत्वे ययोक्तसामानाधिकरण्यं हेतुकरोति। विशेषणेति॥ ब्रह्मेत्युक्ते सत्याकाङ्क्षाभावात् किं विशेषणेनेत्याह। ब्रह्म इति॥ निरुपाधिकस्य सोपाधिकस्य वा ब्रह्मणो विशेषणत्वेऽपि कथं तस्मिन्नोंशब्दप्रवृत्तिरित्याशङ्क्याह। यत्तदिति। किमिति यथोक्ते ब्रह्मणि ओंशब्दो मन्त्रे प्रयुज्यते तत्राह। इह चेति॥ ओंशब्दो ब्रह्मोपासने साधनमित्यत्र मानमाह। तथा

खं पुराणं वायुरं खमिति ह स्माह कौरव्याय-

---

नमित्यादेः। अन्यार्थासम्भवाच्चोपदेशस्य। यथान्यत्रोमिति शंसत्योमित्युद्गायतीत्येवमादौ स्वाध्यायारम्भापवर्गयोश्चोङ्कारप्रयोगो विनियोगादवगम्यते न च तथार्थान्तरमिहावगम्यते। तस्माज्ज्ञानसाधनत्वेनैवेहोङ्कारशब्दस्योपदेशः। यद्यपि ब्रह्मात्मादिशब्दा ब्रह्मणो वाचकास्तथापि श्रुतिप्रामाण्याद्ब्रह्मणो नेदिष्ठमभिधानमोङ्कारोऽत एव ब्रह्मप्रतिपत्ताविदं परं साधनम्॥

तच्च द्विप्रकारेण प्रतीकत्वेनाभिधानत्वेन च। प्रतीकत्वेन यथा विष्ण्वादिप्रतिमाऽभेदेनैवोङ्कारो ब्रह्मेति प्रतिपत्तव्यः तथा ह्योङ्कारालम्बनस्य ब्रह्म प्रसीदति। एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्। एतदालम्बनं ज्ञात्वा ब्रह्म-

---

चेति। सापेक्षं श्रैष्ठ्यं वारयति। परमिति॥ आदिशब्देन प्रणवो धनुरित्यादि गृह्यते। ओं कारो ब्रह्मेति सामानाधिकरण्योपदेशस्य ब्रह्मोपासने साधनत्वमोङ्कारस्येत्यस्मादर्थान्तरासम्भवाच्च॥ तस्य तत्साधनत्वमेष्टव्यमित्याह। अन्यार्थेति एतदेव प्रपञ्चयति। यथेत्यादिना॥ अन्यत्रेति तैत्तिरीयश्रुतिग्रहणम्। अपवर्गः स्वाध्यायावसानम्। अर्थान्तरावगतेरभावे फलितमाह। तस्मादिति॥ ननु शब्दान्तरेष्वपि ब्रह्मवाचकेषु सत्सु किमित्योंशब्द एतज्ज्ञानसाधनत्वेनोपदिश्यते तत्राह॥ यद्यपीति॥ नेदिष्ठं निकटतमं सम्प्रियतममित्यर्थः। प्रियतमप्रयुक्तं फलमाह। अत एवेति॥

साधनत्वेऽवान्तरविशेषं दर्शयति। तच्चेति॥ प्रतीकत्वेन कथं साधनत्वमिति पृच्छति। प्रतीकत्वेनेति॥ कथमित्यध्याहारः। परिहरति। यथेति ओं कारो ब्रह्मेति प्रतिपत्तौ किं स्यात्तदाह। तथा

णीपुत्रो वेदोऽयं ब्राह्मणा विदुर्वेदैनेन यद्वेदितव्यम् ॥ प्रथमं ब्राह्मणम् ॥ १ ॥

---

लोके महीयत इति श्रुतेः। तत्र खमिति भौतिके प्रतीतिर्माभूदित्याह। खं पुराणं चिरन्तनं खं परमात्माकाशमित्यर्थः। यत्तत्परमात्माकाशं पुराणं खं तच्चक्षुराद्यविषयत्वान्निरालम्बनमशक्यं ग्रहीतुमिति। श्रद्धाभक्तिभ्यां भावविशेषेण चोङ्कार आवेशयति विष्णवङ्काङ्कितायां शैलादिप्रतिमायां विष्णुं यथा लोकः। एवं वायुरं खं वायुरस्मिन्विद्यत इति वायुरं खं मन्त्रे खमित्युच्यते। न पुराणं खमित्येवमाह स्म। कोऽसौ कौरव्यायणीपुत्रः। वायुरे हि खे मुख्यः खशब्दव्यवहारस्तस्मान्मुख्ये सम्प्रत्ययो युक्त इति मन्यते। तत्र यदि पुराणं ब्रह्म निरुपाधिस्वरूपं यदि वा वायुरं खं सोपाधिकं ब्रह्म सर्व्वथाऽप्योङ्कारः प्रतीकत्वेनैव प्रतिमावत्साधनत्वं प्रतिपद्यते। एतद्वै सत्यकाम परञ्चा-

---

हीति। मन्त्रमेवं व्याख्याय ब्राह्मणमवतार्य्य व्याचष्टे। तत्रेत्यादिना। मन्त्रः सप्तम्यर्थः॥ ननु यथोक्तं तत्त्वं स्वेनैव रूपेण प्रतिपत्तुं शक्यते किं प्रतीकोपदेशेनेत्याशङ्क्याह। यत्तदिति॥ भावविशेषो बुद्धेर्विषयपारवश्यं परिहृत्य प्रत्यग्ब्रह्मज्ञानाभिमुख्यमोंकारे ब्रह्मावेशनमुदाहरणेन द्रढयति। यथेति। कल्पान्तरमाह। वायुरमित्यादिना॥ किमिति स्वत्वाधिकरणमव्याकृतमाकाशमत्र गृह्यते तत्राह। वायुरे हीति॥ तदेव भूताकाशात्मना विपरिणतमिति भावः। तर्हि पक्षद्वये सम्प्लवमाने कः सिद्धान्तः स्यादित्याशङ्क्याधिकारिभेदमाश्रित्याह। तत्रेति॥ श्रुत्यन्तरस्थान्यथासिद्धिसम्भवादोङ्कारस्य प्रतीकत्वेऽपि विश्र-

परञ्च ब्रह्म यदोङ्कार इति श्रुत्यन्तरात्केवलशब्दार्थे विप्रतिपत्तिर्वेदोऽयमोङ्कारो वेद विजानात्यनेन यद्वेदितव्यम्। तस्माद्वेद ओंकारो वाचकोऽभिधानम्। तेनाभिधानेन यद्वेदितव्यं ब्रह्म प्रकाश्यमानमभिधीयमानं वेद साधको विजानात्युपलभेत। तस्माद्वेदोऽयमिति ब्राह्मणा विदुः। तस्मादब्राह्मणानामभिधानत्वेन साधनत्वमभिप्रेतमोङ्कारस्याथवा वेदोऽयमित्याद्यर्थवादः कथमोङ्कारो ब्रह्मणः प्रतीकत्वेन विहितः।

ओं खं ब्रह्मेति सामानाधिकरण्यात्तस्य स्तुतिरिदानीं वेदत्वेन सर्वो ह्ययं वेद ओंकार एव। एतत्प्रभव एतदात्मकः सर्वे ऋग्यजुःसामादिभेदभिन्न एष ओंकारः। तद्यथा शङ्कुना सर्वाणि पर्णानीत्यादिश्रुत्यन्तरादितश्चायं वेद ओंकारो यद्वेदितव्यं यत्तत्सर्वं वेदितव्यमोंकारेणैव वेदै-

---

तिपत्तिमाशङ्क्याह। केवलमिति॥ इतरत्र विप्रतिपत्तिद्योतकाभावादिति भावः। प्रतीकपक्षमुपपाद्याभिधानपक्षमुपपादयति। वेदोऽयमिति॥ तदेव प्रपञ्चयति। तेनेति॥ वेदेत्यत्रादौ तच्छब्दो द्रष्टव्यः॥ ब्राह्मणा विदुरिति विशेषनिर्देशस्य तात्पर्यमाह। तस्मादिति॥ प्रतीकपक्षेऽपि वेदोऽयमित्यादिग्रन्थो निर्वहतीत्याह। अथवेति॥ विध्यभावे कथमर्थवादः सम्भवतीत्याशङ्क्य परिहरति। कथमित्यादिना॥

वेदत्वेन स्तुतिरोङ्कारस्य सङ्ग्रहविवरणाभ्यां दर्शयति। सर्वो हीति॥ ओंकारे सर्वस्य नामजातस्यान्तर्भावे प्रमाणमाह। तद्यथेति॥ तत्रैव हेत्वन्तरमवतार्य व्याकरोति। इतश्चेति॥ वेदितव्यं परमपरं वा ब्रह्म। द्वे ब्रह्मणी वेदितव्ये इति श्रुत्यन्तरात्॥ तद्वेदन साधनत्वेऽपि कथमोङ्कारस्य वेदत्वमित्याशङ्क्याह। इतरस्यापीति॥ अतएव

त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्य्य-मषुर्देवा मनुष्या असुरा उषित्वा ब्रह्मचर्य्यं

नेनातोऽयमोंकारो वेदः। इतरथापि वेदस्य वेदत्वमत एव तस्माद्विशिष्टोऽयमोंकारः साधनत्वेन प्रतिपत्तव्य इति। अथवा वेदः सः। कोऽसोऽयम्। ब्राह्मणा विदुरोंकारम्। ब्राह्मणानां ह्यसौ प्रणवोद्गीथादिविकल्पैर्विज्ञेयस्तस्मिन् प्रयुज्यमाने साधनत्वेन सर्वो वेदः प्रयुक्तो भवतीति ॥ १ ॥ सप्तमस्य प्रथमं ब्राह्मणम् ॥ १ ॥

अधुना दमादिसाधनत्रयविधानार्थोऽयमारम्भः। त्रय-स्त्रिसंख्याकाः प्राजापत्याः प्रजापतेरपत्यानि प्राजापत्याः। ते किम्। प्रजापतौ पितरि ब्रह्मचर्य्यं शिष्यत्वेन ब्रह्मचर्य्यस्य प्राधान्याच्छिष्याः सन्तो ब्रह्मचर्यमूषुरुषितवन्त इत्यर्थः। के ते। विशेषतो देवा मनुष्या असुराश्च। ते चोषित्वा

वेदितव्यं वेदनहेतुत्वाद्वेदेत्यर्थः ॥ प्रतीकपक्षे वाक्ययोजनां निगमयति। तस्मादिति ॥ अभिधानपक्षे प्रतीकपक्षेऽपि वाक्यमेकैकत्र योजयित्वा पक्षद्वयेऽपि साधारण्येन योजयति। अथवेति ॥ तस्य पूर्वोक्तनीत्या वेदत्वे लाभं दर्शयति। तस्मिन्निति ॥ ओंकारस्य ब्रह्मण उपास्ति-साधनत्वमित्यं खिङ्गमितापसंहर्त्तुमितिशब्दः ॥ १ ॥ सप्तमस्य प्रथमं ब्राह्मणम् ॥ १ ॥

आद्यणान्तरस्य तात्पर्य्यमाह। अधुनेति ॥ तद्विधानं सर्वोपासिशेषत्वेनेति द्रष्टव्यम्। आख्यायिकाप्रवृत्तिरारम्भः। पितरि ब्रह्मचर्यमूषुरिति सम्बन्धः। प्रजापतिसमीपे ब्रह्मचर्यवासमात्रेण विदित्वा देवादिभ्यो हितं ब्रूयादित्याशङ्क्याह। शिष्येति ॥ शिष्य-

देवा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदक्षर-
मुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति
होचुर्दाम्यतेति न आत्थेत्योमिति होवाच व्यज्ञा-
सिष्टेति ॥ १ ॥ अथ हैनं मनुष्या ऊचुर्ब्रवीतु नो
भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञा-
सिष्टा३ इति व्यज्ञासिष्मेति होचुर्दत्तेति न आ-
त्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥२॥ अथ हैन-

---

ब्रह्मचर्यं किमकुर्वन्नित्युच्यते। तेषां देवा ऊचुः पितरं
प्रजापतिं प्रति। किमिति। ब्रवीतु कथयतु नोऽस्मभ्यं
यदनुशासनं भवानिति। तेभ्य एवमर्थिभ्यो ह एतदक्षरं
वर्णमात्रमुवाच द इति। उक्त्वा च तान् पप्रच्छ पिता किं
व्यज्ञासिष्ट इति मयोपदेशार्थमभिहितस्याक्षरस्यार्थं
विज्ञातवन्त आहो स्विन्नेति। देवा ऊचुः। व्यज्ञासिष्मेति
विज्ञातवन्तो वयम्। यद्येवमुच्यतां किं मयोक्तमिति। देवा
ऊचुर्दाम्यत दान्ता यूयं स्वभावतः अतो दान्ता
भवतेति नोऽस्मानात्थ कथयसि। इतर आहोमिति

---

भावेन वृत्तेः सम्बन्धिनो ये धर्मास्तेषां मध्ये ब्रह्मचर्यस्येत्यादि यो-
ज्यम्। तेषामिति निर्धारणे षष्ठी। ऊहापोहशक्तानामेव शिष्यत्व-
मिति द्योतनार्थो हशब्दः। विचारार्थापहृतिरित्यङ्गीकृत्य प्रश्नमेव
व्याचष्टे। मयेति। ओमित्यनुज्ञामेव विभजते। सम्यगिति॥ समा-
नत्वेनोत्तरस्य सर्वस्यैवार्थवादस्याव्याख्येयत्वे प्राप्ते दत्तेत्यत्र तात्पर्य-
माह॥ स्वभावत इति॥ दानमेव लोभत्यागरूपमुपदिष्टमिति कुतो
निर्दिष्टं किमन्यदेव हितं किञ्चिदादिष्टं किं न स्यादित्याशङ्क्याह।

मसुरा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा३इति व्यज्ञासिष्मेति होचुर्दयध्वमिति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्द द द इति दाम्यत दत्त दयध्वमिति तदेतत्त्रयꣳ शिक्षेद्दमन्दानं दयामिति ॥

द्वितीयं ब्राह्मणम् ॥ २ ॥

---

सम्यग्व्यज्ञासिष्टेति । समानमन्यत् । स्वभावतो लुब्धा यूयमतो यथा शक्त्या संविभजत दत्तेति नोऽस्मानात्थ किमन्यद्ब्रूयान्नो हितमिति मनुष्याः ॥१॥२॥ तथाऽसुरा दयध्वमिति क्रूरा यूयं हिंसापरा अतो दयध्वं प्राणिषु दयां कुरुतेति निवर्तेत्प्रजापतेरनुशासनमद्याप्यनुवर्तत एव । यः पूर्वं प्रजापतिर्देवादीननुशशास सोऽप्यद्याप्यनुशास्त्येव दैव्या स्तनयित्नुलक्षणया वाचा । कथमेषा श्रूयते दैवी वाक् । क्वासौ स्तनयित्नुर्द द द इति दाम्यत दत्त दयध्वमिति । एषां वाक्यानामुपलक्षणाय त्रिर्दकार उच्चार्यतेऽनुक्तानि तु स्तन

---

किमन्यदिति ॥ यथा देवा मनुष्याश्च स्वाभिप्रायानुसारेण दकारत्रयश्रवणे सत्यर्थं जगृहुस्तथेति यावत् ॥ दयध्वमित्यत्र तात्पर्यमीरयति । क्रूरा इति ॥ हिंसादीत्यादिशब्देन परस्वापहारादि गृह्यते ॥ प्रजापतेरनुशासनं प्रागासीदित्यत्र लिङ्गमाह । तदेतदिति ॥ अनुशासनस्यानुवृत्तिमेव व्याकरोति । यः पूर्वमिति ॥ द इति त्रिसन्धिकरणं सर्वत्र वर्णान्तर प्रमापोहार्थं । यथा दकारत्रयमत्र विवक्षितं तथा

यित्नुः शब्दः। त्रिरेव सङ्ख्या नियमस्य लोकेऽप्रसिद्धत्वाद्य-स्मादद्यापि प्रजापतेर्दर्श्यते दम दयध्वमित्यनुशास्येव तस्मात्कारणादेतत्त्रयम्॥ ३॥

किं तत्त्रयमित्युच्यते दमं दानं दयामिति शिक्षेदुपाद-द्यात्प्रजापतेरनुशासनमस्माभिः कर्त्तव्यमित्येवं मतिं कुर्यात्। तथा च स्मृतिः। त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः। कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेदित्यस्य हि विधेः शेषः पूर्वस्तथापि देवादीनुपदिश्य किमर्थं दकारत्रयमुच्चा-रितवान् प्रजापतिः पृथगनुशासनार्थिभ्यः। ते वा कथं विवे-केन प्रतिपन्नाः प्रजापतेर्मनोगतं समानेनैव दकारमा-त्रेणेति पराभिप्रायज्ञा विकल्पयन्ति। अत्रैके आकरदान्त-त्वाद्दत्वादयालुत्वैरपराधितमात्मनो मन्यमानाः शङ्किता एव प्रजापतावूषुः किं नो वक्ष्यतीति। तेषाञ्च दकार-श्रवणमात्रादेवाशङ्कावशेन तदर्थे प्रतिपत्तिरभूत्।

---

स्तनयित्नुशब्देऽपि त्रित्वं विवक्षितं चेत्प्रसिद्धिविरोधः स्यादित्याश-ङ्क्याह। अनुकृतिरिति॥ दशब्दानुकारमात्रमत्र विवक्षितं न तु स्तन-यित्नुशब्दे त्रित्वं प्रमाणाभावादित्यर्थः॥ प्रकृतस्यार्थवादस्य विधिपर्य-वसायित्वं फलितमाह यस्मादिति॥ १॥ २॥ ३॥

उपादानप्रकारमेवाभिनयति। प्रजापतेरिति॥ श्रुतिसिद्धविध्यनु-सारेण भगवद्वाक्यप्रवृत्तिं दर्शयति। तथा चेति॥ तदेतत्त्रयं शिक्षे-दितेत्थं विधिशेषत्वं तथाः प्रजापत्या इत्यादिना ग्रन्थेनेत्याशङ्क्य यस्मादित्यादिना सूचितमाह। अस्येति॥ सर्वैरेव त्रयमनुष्ठेयं चेत्तर्हि देवादीनुद्दिश्य दकारत्रयोच्चारणमनुपपन्नमिति शङ्कते। तत्त्वेति॥ दमादित्रयस्य सर्वैरनुष्ठेयत्वे सतीति यावत्॥ किञ्च पृथक् पृथगनुशासना-र्थिनो देवादयस्तेभ्यो दकारमात्रोच्चारणेनापेक्षितमनुशासनं सिद्धती-

लोकेऽपि हि प्रसिद्धं पुत्राः शिष्याश्चानुशास्या सन्तो: दोषा-न्निवर्तयितव्या इति। अतो युक्तं प्रजापतेर्दकारमात्रोच्चा-रणम्। दमादित्रये च दकारान्वयात्। आ मनो दोषानुरू-प्येण देवादीनां विवेकेन प्रतिपत्तुश्चेति॥ फलन्त्वेतदात्म-दोषज्ञाने सति दोषा निवर्त्तयितुं शक्यन्तेऽल्पेनाप्युप-देशेन। यथा देवादयो दकारमात्रेणेति॥

---

तत्राह। पूर्वागति॥ किमर्थमिदानीं पूर्वेण सम्बन्धः। दकारमात्र-मुच्चारयतोऽपि प्रजापतेर्विभागेनानुशासनमभिसंहितमित्याशङ्क्याह। ते वेति॥ त्वयं सर्वैरनुष्ठेयमिति परस्य सिद्धान्तिनोऽभिप्रायस्तदभिज्ञाः सन्तो यथोक्तनीत्या विकल्पयन्तीति योजना। पराभिप्रायज्ञा इत्यप-च्छेदो वा। परस्य प्रजापतेर्मनुष्यादीनाञ्चाभिप्रायज्ञा इति नञ उल्लेखो वा पाठः। एकीयं परिहारमुत्थापयति। अत्रेति॥ अस्तु तेषामेव शङ्का तथापि दकारमात्रात्कीदृशी प्रतिपत्तिरित्याशङ्क्याह। तेषाञ्चेति॥ तदर्थौ दकारार्थौ दमादिस्तस्य प्रतिपत्तिस्तद्द्वारेणादान्तत्वादिनिवृत्ति-रासीदित्यर्थः। किमिति प्रजापतिर्दोषस्थापनद्वारेण ततो देवादीननु-शासन् दोषान्निवर्त्तयिष्यति तत्राह। लोकेऽपीति॥ दकारोच्चारणस्य प्रयोजने सिद्धे फलितमाह। अत इति॥ यत्तूक्तं ते वा कथमित्यादि तत्राह। दमादीति॥ प्रतिपत्तुश्च युक्तं दमादीति शेषः। इति शब्दः स्वयूथ्यमतसमाप्त्यर्थः॥ परोक्तं परिहारमङ्गीकृत्याख्यायिकातात्पर्यं सिद्धान्ती ब्रूते। फलन्त्विति॥ निर्ज्ञातदोषा देवादयो यथा दकार-मात्रेण ततो निवर्त्तन्त इति शेषः। इतिशब्दो दार्ष्टान्तिकप्रदर्शनार्थः। शिष्टान् प्रत्यनुशासनस्य प्रवृत्तत्वादस्माकं तदभावादनुपादेयं दमादीति शङ्कते। नन्विति॥

नन्वेतत्त्रयाणां देवादीनामनुशासनं देवादिभिरप्येकैकमेवोपादेयमद्यत्वेऽपि न तु त्रयं मनुष्यैः शिक्षितव्यमित्युच्यते। पूर्वैर्देवादिभिर्विशिष्टैरनुष्ठितमेतत्त्रयं तस्मान्मनुष्यैरेव शिक्षितव्यमिति। तत्र दयालुत्वस्याननुष्ठेयत्वं स्यात्कथमसुरैरप्रशस्तैरनुष्ठितत्वादिति चेत्। न। तुल्यत्वात्त्रयाणाम्। अतोऽन्योऽभिप्रायः। प्रजापतेः पुत्रा देवादयस्त्रयः। पुत्रेभ्यश्च हितमेव पित्रोपदेष्टव्यम्। प्रजापतिश्च हितज्ञो नान्यथोपदिशति। तस्मात्पुत्रानुशासनं प्रजापतेः परममेतद्धितम्। अतो मनुष्यैरेवैतत्त्रयं शिक्षितव्यमिति। अथ न देवा असुरा वाऽन्ये केचन विद्यन्ते। मनुष्येभ्यो मनुष्याणामेवादान्ता येऽन्यैरुत्तमैर्गुणैः सम्पन्नास्ते देवा लोभप्रधाना मनुष्यास्तथा

---

किञ्च देवादिभिरपि प्रातिस्विकानुशासनवशादेकैकमेव दमाद्यनुष्ठेयं न तत्त्रयमित्याह। देवादिभिरिति॥ यथा पूर्वस्मिन्काले देवादिभिरेकैकमेवोपादेयमित्युक्तं तथा वर्त्तमानेऽपि काले मनुष्यैरेकैकमेव कर्त्तव्यं पूर्वाचारानुसारान्न तु त्रयं शिक्षितव्यं तथा च कस्यायं विधिरित्याह। अद्यत्वेऽपीति॥ आचारप्रामाण्यमाश्रित्य परिहरति। अस्येति॥ इतरैरेकैकमेव नोपादेयमिति शेषः। दयालुत्वस्याननुष्ठेयत्वमाक्षिपति। तत्रेति॥ मध्ये दमादीनामिति यावत्॥ असुरैरनुष्ठितत्वेऽपि दयालुत्वमनुष्ठेयं हितसाधनत्वाद्दानादिवदिति परिहरति। नेत्यादिना॥ देवादिषु प्रजापतेरविशेषात्तेभ्यस्तदुपदिष्टमद्यत्वेऽपि सर्वैरनुष्ठेयमित्यर्थः॥ हितस्यैवोपदेष्टव्यत्वेऽपि तदज्ञानात्प्रजापतिरन्यथोपदिशतीत्याशङ्क्याह। प्रजापतिश्चेति॥ हितज्ञस्य पितुरहितोपदेशित्वाभावस्तस्मादित्युक्तः। विशिष्टैरनुष्ठितस्यास्मदादिभिरनुष्ठेयत्वे फलितमाह। अत इति॥ प्राजापत्या देवादयो विप्रकृष्टाः सन्तीत्यर्थवादस्य यथाश्रुतेऽर्थे प्रामाण्यमभ्युपगम्य दकारत्रयस्य तात्पर्यं सिद्धमिति

एष प्रजापतिर्यद्धृदयमेतद्ब्रह्मैतत्सर्वं तदेतत्त्र्य-

हिंसापराः क्रूरा असुरास्त एव मनुष्या अदान्तत्वादिदोष-
त्रयमपेक्ष्य देवादिशब्दभाजो भवन्ति । इतरांश्च गुणान्
सत्त्वरजस्तमांस्यपेक्ष्यातो मनुष्येष्वेव हि शिक्षितव्यमेतत्त्रय-
मिति तदपेक्षयैव प्रजापतिनोपदिष्टत्वात् । तथा हि मनुष्या
अदान्ता लुब्धाः क्रूराश्च दृश्यन्ते । तथा च स्मृतिः । कामः
क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेदिति ॥ सप्तमस्य द्वि-
तीयं ब्राह्मणम् ॥ १ ॥

दमादिसाधनत्रयं सर्वोपासनशेषं विहितम् । दान्तोऽ-
लुब्धो दयालुः सन्सर्वोपासनेष्वधिक्रियते । तत्र निरुपा-
धिकस्य ब्रह्मणो दर्शनमतिक्रान्तमधुना सोपाधिकस्य तस्यै-
वाभ्युदयफलानि वक्तव्यानीत्येवमर्थोऽयमारम्भः । एष प्रजा

---

वक्तुमितिशब्दः ॥ सम्प्रति कर्ममीमांसकमतमनुसृत्याह । अथवेति ॥
कथं मनुष्येष्वेव देवासुरत्वं तत्राह । मनुष्याणामिति ॥ अन्ये गुण-
ज्ञानादयः ॥ किं पुनर्मनुष्येषु देवादिशब्दप्रवृत्तौ निमित्तं तदाह ।
अदान्तत्वादिति ॥ देवादिशब्दप्रवृत्तौ निमित्तान्तरमाह । इतरांश्चेति ॥
मनुष्येष्वेव देवादिशब्दप्रवृत्तौ फलितमाह । अत इति ॥ इतिशब्दो
विध्युपपत्तिप्रदर्शनार्थः । मनुष्येष्वेव त्रयं शिक्षितव्यमित्यत्र हेतुमाह ।
तदपेक्षयेति ॥ मनुष्याणामेव देवादिभावे प्रमाणमाह । तथा हीति ॥
त्रयं शिक्षितव्यमित्यत्र स्मृतिमुदाहरति । तथा चेति ॥ इतिशब्दो
ब्राह्मणसमाप्त्यर्थः । सप्तमाध्यायस्य द्वितीयं ब्राह्मणम् ॥

सार्थवादेन विधिना सिद्धमर्थमनुवदति । दमादीति ॥ कथं तस्य
सर्वोपासनशेषत्वं तदाह । दान्त इति ॥ अलुब्ध इति छेदः । सम्प्रत्य-

चरं हृदयमिति हृइत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये चय एवं वेद दइत्येकमक्षरं ददत्यस्मै

पतिर्यद्धृदयं प्रजापतिरनुशास्तीत्यनन्तरमेवाभिहितं कः पुनरसावनुशास्ता प्रजापतिरित्युच्यते। एष प्रजापतिः को-ऽसौ यद्धृदयं हृदयमिति हृदयस्था बुद्धिरुच्यते। यस्मिन् शाकल्यब्राह्मणान्ते नामरूपकर्मणामुपसंहार उक्तो दिग्वि भागद्वारेण तदेतत्सर्वभूतप्रतिष्ठं सर्वभूतात्मभूतं यद्धृदयं प्रजापतिः प्रजानां स्रष्टा एतद्ब्रह्म बृहत्त्वात्सर्वात्मत्वाच्च ब्रह्म। एतत्सर्वमुक्तं पञ्चमाध्याये। हृदयस्य हृदयत्वं सर्वत्वञ्च यस्मात्तस्मादुपास्यं हृदयं ब्रह्म। तत्र हृदयनामाक्षरविषय-मेव तावदुपासनमुच्यते। तदेतद्धृदयमिति नाम त्र्यक्षरं त्रीण्यक्षराण्यस्येति त्र्यक्षरम्। कानि पुनस्तानि त्रीण्यक्षराण्यु च्यन्ते। हृइत्येकमक्षरमभिहरन्ति। हृतेराहरतिकर्मणो हृइत्येतद्रूपमिति यो वेद यस्माद्धृदयाय ब्रह्मणे स्वाश्चेन्द्रि-याण्यन्ये च विषयाः शब्दादयः स्वं स्वं कार्यमभिहरन्ति

चरसन्दर्भस्य तात्पर्यं वक्तुं भूमिकां करोति। तत इति॥ काण्डद्वयं सम्पन्नमर्थः। अनन्तरसन्दर्भस्य तात्पर्यमाह। अथेति। पापक्षयादिर-भ्युदयस्तत्फलान्युपासनानीति शेषः॥ अनन्तरब्राह्मणमादाय तस्य सङ्गतिमाह। एष इत्यादिना। उक्तस्य हृदयपदार्थस्य पाञ्चमकत्वं दर्शयन् प्रजापतित्वं साधयति। यस्मिन्निति॥ कथं हृदयस्य सर्वत्वं तदाह। उक्तमिति। सर्वत्वसङ्कीर्तनफलमाह। तदेतत्सर्वमिति। तत हृदयस्योपास्यत्वे सिद्धे सतीत्येतत्। फलोक्तिमुत्थाप्य व्याकरोति। अभिहरन्तीति। यो वेदास्मै विदुषेऽभिहरन्तीति सम्बन्धः॥ वेदनमेव

स्वाश्चान्ये च य एवं वेद यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेद॥१॥तृतीयं ब्राह्मणम्॥३॥

---

हृदयाय भोक्त्रेऽर्थमभिहरन्ति । अतो हृदयनाम्नो हृ इत्येतदक्षरमिति यो वेदास्मै विदुषेऽभिहरन्ति स्वाश्च ज्ञातयोऽन्ये च असम्बद्धाः। बलिमिति वाक्यशेषः। विज्ञानानुरूप्येणैतत्फलम्। तथा द इत्येतदप्येकमक्षरमेतदपि दानार्थस्य धातो रूपं हृदयनामाक्षरत्वेन निबद्धमत्रापि हृदयाय ब्रह्मणे स्वाश्च करणान्यन्ये च विषयाः स्वं स्वं वीर्यं ददति। हृदयश्च भोक्त्रे ददाति स्वं वीर्यमतो दकार इत्येवं यो वेदास्मै ददति स्वाश्चान्ये च। तथा यमित्येतदप्येकमक्षरम् इणो गत्यर्थस्य यमित्येतद्रूपमस्मिन्निबद्धमिति यो वेद स स्वर्गं लोकमेति। एवं नामाक्षरादपीदृशं विशिष्टं फलं प्राप्नोति किमु वक्तव्यं हृदयस्वरूपोपासनादिति। हृदयस्तुतये नामाक्षरोपन्यासः॥१॥ इति सप्तमस्य तृतीयं ब्राह्मणम्॥३॥

---

विदधतीति । यस्मादित्यादिना ॥ स्वकार्यं रूपदर्शनादि । हृदयस्तु कार्यं सुखादि ॥ असम्बद्धा ज्ञातिव्यतिरिक्ताः । उक्तं फलं कथयति । विज्ञानेति ॥ अत्रापीति दकाराक्षरोपासनेऽपि फलमुच्यत इति शेषः । तामेव फलोक्तिं व्यनक्ति । हृदयायेति ॥ अस्मै विदुषे स्वाश्चान्ये च ददति । बलिमिति शेषः । नामाक्षरोपासनानि त्रीणि हृदयस्वरूपोपासनमेकमिति चत्वार्युपासनान्यत्र विवक्षितानीत्यागमज्ञाः । एवमिति ॥ १ ॥ इति सप्तमस्य तृतीयं ब्राह्मणम् ॥ ३ ॥

**तद्वै तदेतदेव तदास सत्यमेव स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमांल्लोकान् जित इन्न्वसावसद्य एवमेतं महद्यक्षं प्रथमजं वेद सत्यं**

तस्यैव हृदयाख्यस्य ब्रह्मणः सत्यमित्युपासनं विधित्सन्नाह तद्वै तदिति हृदयब्रह्म परामृश्यते। वै इति स्मरणार्थम्। तद्यद्धृदयं ब्रह्म स्मर्यत इत्येकस्तच्छब्दस्तदेतदुच्यते प्रकारान्तरेणेति द्वितीयस्तच्छब्दः। किं पुनस्तत्प्रकारान्तरमेतदेव एतदिति वक्ष्यमाणं बुद्धौ सन्निधीकृत्याह। आस। आस बभूव। तत्किं पुनरेतदेव यदुक्तं हृदयं ब्रह्मेति। तदिति तृतीयस्तच्छब्दो विनियुक्तः। किन्तदिति विशेषतो निर्दिशति सत्यमेव। सच्च त्यच्च मूर्तं चामूर्तं च सत्यं ब्रह्म। पञ्चभूतात्मकमित्येतत् स यः कश्चित्सत्यात्मानमेतं महन्महत्त्वाद्यक्षं पूज्यं पूर्वं प्रथमजं प्रथमं जातं सर्वस्मात्संसारिण एतदेवाग्रे जातं ब्रह्मातः प्रथमजं वेद विजानाति सत्यं ब्रह्मेति तस्येदं फलमुच्यते। यथा सत्येन ब्रह्मणा इमे लोका आत्मसात्कृता एवं सत्यात्मानं ब्रह्म महद्यक्षं प्रथ-

---

ब्राह्मणान्तरस्याद्यकण्डिकां व्याचष्टे। तस्येत्यादिना॥ सत्यशब्दार्थं सत्यज्ञानादिवाक्योपात्तं व्यावर्तयति। सच्चेति॥ सर्वात्मत्वस्य चतुर्थे प्रस्तुतत्वं सूचयति। मूर्तं चेति॥ वेदनमनूद्य फलोक्तिमवतारयति॥ स य इति॥ प्रथमजत्वं प्रकटयति। सर्वस्मादिति॥ स यः कश्चिद्वेदेति सम्बन्धः। कैमुतिकसिद्धं फलान्तरमाह। जित इति॥ यथोक्तस्य सतोः स्वरूपेण सत्त्वं वारयति। असच्चेति स यो हैतमित्यादिना य

ब्रह्मेति सत्यꣳह्येव ब्रह्म ॥१॥ चतुर्थं ब्राह्मणम् ॥४॥
आप एवेदमग्र आसुस्ता आपः सत्यमसृजन्त सत्यं
ब्रह्म ब्रह्म प्रजापतिं प्रजापतिर्देवाꣳस्ते

मजं वेद स जयतीमाँल्लोकान् किन्नु जितो यशीकृत इत्यं
यथा ब्रह्मणाऽसौ शत्रुरिति वाक्यशेषः। असवासद्वेदसौ
शत्रुर्जितो भवेदित्यर्थः। कर्मैतत्फलमिति पुनर्निगमयति।
य एवमेतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेत्यतो विद्यानु-
रूपं फलं युक्तं सत्यं ह्येव यस्माद्ब्रह्म ॥ १ ॥ सप्तमस्य चतुर्थं
ब्राह्मणम् ॥ ४ ॥

सत्यस्य ब्रह्मणः स्तुत्यर्थमिदमाह। महद्यक्षं प्रथमजमि
त्युक्तं तत्कथं प्रथमजत्वमित्युच्यते। आप एवेदमग्र आसुः।
आप इति कर्मसमवायिन्योऽग्निहोत्राद्याहुतयः अग्निहोत्रा-
द्याहुतेर्द्रवात्मकत्वादापम्। ता ह्यापोऽग्निहोत्रादिकर्मापव-
र्गोत्तरकालं केनचिददृष्टेन सूक्ष्मेणात्मना कर्मसमवायि-
त्वमपरित्यज्यैव इतरभूतसहिता एव न केवलाः कर्म-

एवमेतमित्यादेरेकार्थत्वात् नरुक्तिरित्याशङ्क्याह। तस्यैतदिति ॥ कथमस्य
विज्ञानस्येदम्फलमित्याशङ्क्याह। अत इति ॥ पञ्चमोपरामृष्टं स्पष्टयति।
सत्यं हीति ॥ १ ॥ सप्तमस्य चतुर्थं ब्राह्मणम् ॥ ४ ॥

इदमा ब्राह्मणं गृह्यते तस्यावान्तरसङ्गतिमाह। महदिति।
आहुतीनामेव कर्मसमवायित्वं न त्वपामित्याशङ्क्याह। अग्निहो-
त्रादीति। यद्यप्यापः सोमाद्या हूयमानाः कर्मसमवायिन्य
स्तथाप्युत्तरकाले कथं तासां तथात्वं कर्मणोऽस्थायित्वादित्याश-

देवाः सत्यमेवोपासते तदेतत्त्र्यक्षरꣳ सत्यमिति स इत्येकमक्षरं तीत्येकमक्षरं यमित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतं तदेतदनृतमु-

---

समवायित्वात्तु प्राधान्यमपामिति । सर्वाण्येव भूतानि प्रागुत्पत्तेरव्याकृतावस्थानि कर्तृसहितानि निर्दिश्यन्ते । आप इति ता आपो बीजभूता जगतोऽव्याकृतात्मनावस्थिताः ता एवेदं सर्वं नामरूपविकृतं जगदग्र आसुर्नान्यत्किञ्चिद्विकारजातमासीत् । ताः पुनरापः सत्यमसृजन्त । तस्मात्सत्यं ब्रह्म प्रथमजम् । तदेतद्धिरण्यगर्भस्य सूत्रात्मनो जन्म । यदव्याकृतस्य जगतो व्याकरणं तत्सत्यं ब्रह्म । कुतो । महत्त्वात् । कथं महत्त्वमित्याह । यस्मात्सर्वस्य स्रष्टृ । कथं यत्सत्यं ब्रह्म तत्प्रजापतिं प्रजानां पतिं विराजं सूर्यादिकरणमसृजतेत्यनुषङ्गः । प्रजापतिर्देवान्स विराट् प्रजापतिर्देवानसृजत । यस्मात्सर्वमेवं क्रमेण सत्याद्ब्रह्मणो

---

यद्वाह । तास्वेति ॥ कर्मसमवायित्वमपरित्यजन्त्यस्तत्सम्बन्धित्वेनापः प्रथमं प्रवृत्तास्तन्नाशोत्तरकालं सूक्ष्मेणादृष्टेनात्मनाऽतीन्द्रियेणात्मना तिष्ठन्तीति योजना ॥ आप इति विशेषणं भूतान्तरव्यासेधार्थमिति मतिं वारयति । इतरेति ॥ कथं तर्हि तासामेव श्रुतावुपादानं यदाह कर्मेति । इति तासामेवात्र ग्रहणमिति शेषः ॥ विवक्षितपदार्थं निगमयति । सर्वाण्येवेति ॥ पदार्थमुक्तमनूद्य वाक्यार्थमाह । ता इति ॥ यास्ता यथोक्ता आपस्ता एवेति यच्छब्दानुबन्धेन योजना । सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतं सत्यं कथं भूतान्तरसहिताभ्योऽद्भ्यो जायते

भयतः सत्येन परिगृहीतꣳ सत्यभूयमेव भवति नैनं विद्वाꣳ समन्नृतꣳ हिनस्ति ॥ १ ॥

---

जातं तस्मान्महत्सत्यं ब्रह्म कथं पुनर्यक्षमित्युच्यते। त एवं सृष्टा देवा पितरमपि विराजमतीत्य तदेव सत्यं ब्रह्मोपासते। अत एव प्रथमजं महद्यक्षं तस्मात्सर्वात्मनोपास्यं तत्तस्यापि सत्यस्य ब्रह्मणो नाम सत्यमिति तदेतत्त्र्यक्षरम्। कानि तान्यक्षराणीत्याह। स इत्येकमक्षरम्। तीत्येकमक्षरम्। तीति इकारानुबन्धो निर्देशार्थः। यमित्येकमक्षरम्। तत्र तेषां प्रथमोत्तमेऽक्षरे सकारयकारौ सत्यम्। मृत्युरूपाभावात्। मध्यतो मध्यमनृतम्। अनृतं हि मृत्युः। मृत्य्वनृतयोस्तकारसामान्यात्। तदेतदनृतं मृत्युरूपमुभयतः सत्येन सकारयकारलक्षणानपरिगृहीतं व्याप्तमन्तर्भावितं सत्यरूपाभ्यामतोऽकिञ्चित्करम्। तत्सत्यभूयमेव सत्यबाहुल्यमेव भवति। एवं सत्यबाहुल्यं सर्वस्य मृत्योरनृतस्याकिञ्चित्करत्वं यो विद्वांस्तमेवं विद्वांसमनृतं कदाचित्प्रमादोत्थं न हिनस्ति १॥

---

तत्राह। तदेतदिति॥ तस्य ब्रह्मत्वं प्रश्नपूर्वकं विशदयति। तस्मतत्र्यमिति॥ सतत्र्यस्य ब्रह्मणो महत्त्वं प्रश्नद्वारा साधयति। कथमित्यादिना। तस्य सर्वस्रष्टृत्वं प्रश्नद्वारेण स्पष्टयति। कथमित्यादिना॥ महत्त्वमुपसंहरति। तस्मादिति॥ विशेषणत्रये सिद्धे फलितमाह। तस्मादिति॥ तस्यापीत्यपिशब्दो हृदय ब्रह्मदृष्टान्तार्थः। बुद्धिपूर्वकमन्नृतं विदुषोऽपि बाधकमित्यभिप्रेत्य विशिनष्टि। प्रमादोत्थमिति॥ १॥

तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्म-ण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषस्तावे-तावन्योन्यस्मिन्प्रतिष्ठितौ रश्मिभिरेषोऽस्मिन्प्र-

अस्याधुना सत्यस्य ब्रह्मणः संस्थानविशेष उपासनमुच्यते। तद्यत्। किन्तद्यत्सत्यं ब्रह्म प्रथमजम्। किमसौ सः। कोऽसावादित्यः कः पुनरसावादित्यो य एषः। क एष य एतस्मिन्नादित्यमण्डले पुरुषाभिमानी सोऽसौ सत्यं ब्रह्म। यश्चायमध्यात्मं दक्षिणेऽक्षन्नक्षिणि पुरुषः शब्दात्स च सत्यं ब्रह्मेति सम्बन्धः। तावेतावादित्याक्षिस्थौ पुरुषावेकस्य सत्यस्य ब्रह्मणः संस्थानविशेषौ यस्मात्तस्मादन्योन्यस्मिन्नितरेतरस्मिन्नादित्यश्चाक्षुषे चाक्षुषश्चादित्ये प्रतिष्ठितौ। अध्यात्माधिदैवतयोरन्योन्योपकार्योपकारकत्वात्। कथं प्रतिष्ठितावित्युच्यते। रश्मिभिः प्रकाशेनानुग्रहं कुर्वन्नेष आदित्योऽस्मिंश्चक्षुष्यध्यात्मे प्रतिष्ठितः। अयञ्च चाक्षुषः प्राणैरादित्यमनुगृह्णन्नमुष्मिन्नादित्याधिदैवे प्रतिष्ठितः। सोऽस्मिञ्छरीरे विज्ञानमयो भोक्ता। यदा यस्मिन्काले उत्क्रमिष्यन्भवि-

ब्राह्मणान्तरमवतार्य व्याकरोति। अस्येत्यादिना तत्राधिदैविकं स्थानविशेषमुपन्यस्यति। तदित्यादिना॥ अध्यात्मिकं स्थानविशेषं दर्शयति। यश्चेत्यादिना॥ प्रदेशभेदवर्त्तिनोः स्थानभेदेन भेदं शङ्कित्वा परिहरति। तावेताविति। अन्योन्यमुपकार्य्योपकारकत्वेनान्योऽन्यस्मिन् प्रतिष्ठितत्वं प्रश्नपूर्व्वकं प्रकटयति। कथमित्यादिना॥ प्राणैश्चक्षुरादिभिरिन्द्रियैरिति यावत्। अनुगृह्णन्नादित्यमण्डलात्मानं प्रकाशयन्नित्यर्थः। प्रासङ्गिकमुपासना प्रसङ्गागतमित्यर्थः। तत्रदर्शनस्य

तिष्ठतः प्राणैरयममुष्मिन् स यदोत्क्रमिष्यन्भवति शुद्धमेवैतन्मण्डलं पश्यति नैनमेते रश्मयः प्रत्यायन्ति ॥ २ ॥

य एष एतस्मिन्मण्डले पुरुषस्तस्य भूरिति शिर एकꣳ शिर एकमेतदक्षरं भुव इति बाहू द्वौ

---

ष्यति तदासौ चाक्षुष आदित्यपुरुषो रश्मीनुपसंहृत्य केवलेनौदासीन्येन रूपेण व्यवतिष्ठते। तदायं विज्ञानमयः पश्यति शुद्धमेव केवलं विरश्मिरतन्मण्डलं चन्द्रमण्डलमिव। तदेतदरिष्टदर्शनं प्रासङ्गिकं प्रदर्श्यते। कथं नाम पुरुषः करणीये यत्नवान् स्यादिति। नैनश्चाक्षुषं पुरुषमुरीकृत्य तं प्रत्यनुग्रहाय एते रश्मयः स्वाभिकर्त्तव्यवशात्पूर्वमागच्छन्तोऽपि पुनस्तत्कर्मक्षयमनुरुध्यमाना इव नायन्ति न प्रत्यागच्छन्त्येनम्। अतोऽवगम्यते परस्परोपकार्य्योपकारकभावात्सत्यस्यैवैकस्यात्मनोऽंशावेताविति ॥२॥

तत्र योऽसौ कः य एष एतस्मिन्मण्डले पुरुषः सत्यनामा। तस्य व्याहृत्योऽवयवाः। कथम्। भूरिति येयं व्याहृतिः सा तस्य शिरः। प्राथम्यात्। तत्र सामान्यं स्वयमेवाह श्रुतिः

---

किं फलमित्याशङ्क्याह। कथमिति॥ पुरुषद्वयस्यान्योन्योपकार्य्योपकारकत्वमुक्तं निगमयति। नेत्यादिना॥ पुनःशब्देन स्तेरुत्तरकालो गृह्यते। रश्मीनामचेतनत्वादिवशब्दः। पुनर्नकारोच्चारणमन्वयप्रदर्शनार्थम्। तत्र स्थानद्वयसम्बन्धिनः सत्यस्य ब्रह्मणो ध्याने प्रस्तुते सतीत्यर्थः॥ २॥

तत्रेति प्रथमव्याहृतौ शिरोदृष्ट्यारोप्ये विवक्षिते तस्योपनिषद-

बाहू द्वे एत अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एत अक्षरे तस्योपनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेद ॥ ३ ॥

योऽयं दक्षिणेऽक्षन्पुरुषस्तस्य भूरिति शिर एकं शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एत अक्षरे स्वरिति प्रतिष्ठा प्रतिष्ठे द्वे द्वे एते

---

एकमेकसङ्ख्यायुक्तं शिरः। तथैतदक्षरमेकं भूरिति। भुव इति बाहू। द्वित्वसामान्याद्द्वौ बाहू द्वे एते अक्षरे। तथा स्वरिति प्रतिष्ठा। द्वे प्रतिष्ठे द्वे एत अक्षरे। प्रतिष्ठे पादौ। प्रतिष्ठत्याभ्यामिति। तस्यास्य व्याहृत्यवयवस्य सत्यस्य ब्रह्मण उपनिषद्रहस्यमभिधानम्। येनाभिधानेनाभिधीयमान तद्ब्रह्माभिमुखीभवति लोकवत्। कोऽसावित्याह। अहरिति। अहरिति चैतद्रूपं हन्तेर्जहातेश्चेति यो वेद स हन्ति जहाति च पाप्मानं य एवं वेद ॥ ३ ॥

एवं योऽयं दक्षिणेऽक्षन्पुरुषस्तस्य भूरिति शिर इत्यादि सर्व्वंसमानम्। तस्योपनिषदहमिति। प्रत्यगात्मभूतत्वात्।

---

तत्रादि व्याचष्टे। तस्येत्यादिना ॥ यथा लोके गवादिः स्वेनाभिधानेनाभिधीयमानः सम्मुखीभवति तद्वदित्याह। लोकवदिति ॥ नामोपास्तिफलमाह। अहरिति चेति ॥ ३ ॥

यथा मण्डलपुरुषस्य व्याहृत्यवयवस्य सोपनिषत्कस्याधिदैवतमुपासनमुक्तं तथाध्यात्मिकचाक्षुषपुरुषस्योक्तविशेषणस्योपासनमुच्यत इत्याह। एवमिति। चाक्षुषस्य पुरुषस्य कथमहमित्युपनिषदिष्यते तत्राह। प्रत्यगिति ॥ हन्तेर्जहातेश्चाहमित्येतद्रूपमिति यो वेद स हन्ति पाप्मानं जहाति चेति पूर्व्ववत्फलवाक्यं योज्यमित्याह। पूर्व्व-

अक्षरे तस्योपनिषदहमिति हन्ति पाप्मानं जहाति च य एवं वेद ॥ ४ ॥ पञ्चमं ब्राह्मणं ॥ ५ ॥

मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्व्वस्येशानः सर्व्व-

---

पूर्व्ववद्धन्ति जहातीत्येति ॥४॥ सप्तमस्य पञ्चमं ब्राह्मणम् ॥५॥

उपाधीनामनेकत्वात् अनेकविशेषणत्वाच्च तस्यैव प्रकृतस्यैव ब्रह्मणो मन उपाधिविशिष्टस्योपासनं विधित्सन्नाह। मनोमयो मनःप्रायो मनस्युपलभ्यमानत्वान्मनसा वोपलभ्यत इति मनोमयोऽयं पुरुषो भाः सत्यो भा एवं सत्यं सद्भावः स्वरूपं यस्य सोऽयं भाः सत्यो भास्वर इत्येतन्मनसः सर्व्वार्थावभासकत्वान्मनोमयत्वाच्चास्य भास्वरत्वं तस्मिन्नन्तर्हृदये हृदयस्यान्तस्तस्मिन्नित्येतत्। यथा व्रीहीर्वा यवो वा परिमाणतः। एवं परिमाणस्तस्मिन्नन्तर्हृदये यो निर्दिश्यत इत्यर्थः। स एष सर्व्वस्येशानः सर्व्वस्य स्वभेदजातस्येशानः स्वामी। स्वामित्वेऽपि सति कश्चिदमात्यादितन्त्रोऽयन्तु न तथा किन्तर्ह्यधिपतिरधिष्ठाय पालयिता।

---

वदिति ॥ ४ ॥ सप्तमस्याध्यायस्य पञ्चमं ब्राह्मणम्। ५।

ब्राह्मणान्तरमुत्थापयति। उपाधीनामिति ॥ अनेकविशेषणत्वाच्च प्रत्येकं तेषामिति शेषः। तत्प्रायत्वे हेतुमाह ॥ मनसीति ॥ प्रकारान्तरेण तत्प्रायत्वमाह। मनसा चेति ॥ तस्य भास्वररूपं साधयति। मनस इति ॥ तस्य ध्यानार्थं स्थानं दर्शयति। तस्मिन्निति। औपाधिकमिदं परिमाणं स्वाभाविकत्वानन्त्यमितत्रभिप्रेत्याह ॥

स्याधिपतिः सर्व्वमिदं प्रशास्ति यदिदं किञ्च ॥ १ ॥ षष्ठ ब्राह्मणम् ॥ ६ ॥

विद्युद्ब्रह्मेत्याहुर्विदानाद्विद्युद्विद्युत्येनं पाप्मनो य एवं वेद विद्युद्ब्रह्मेति विद्युद्ध्येव ब्रह्म ॥ १ ॥ सप्तमं ब्राह्मणं ॥ ७ ॥

---

सर्व्वमिदं प्रशास्ति यदिदं किञ्च यत्किञ्चित्सर्व्वं जगत्तत्सर्व्वं प्रशास्ति। एवं मनोमयस्योपासनात्तथारूपापत्तिरेव फलम्। तं यथा यथोपासते तदेव भवतीति ब्राह्मणम् १ सप्तमस्य षष्ठं ब्राह्मणम् ॥ ६ ॥

तथैवोपासनान्तरं सत्यस्य ब्रह्मणो विशिष्टफलमारभ्यते। विद्युद्ब्रह्मेत्याहुः। विद्युतो ब्रह्मणो निर्वचनमुच्यते। विदानादवखण्डनात्तमसो मेघान्धकारं विदार्य्य ह्यवभासते विद्युत्। एवंगुणं विद्युद्ब्रह्मेति यो वेदासौ विद्यतयवखण्डयति विनाशयति पाप्मन एनमात्मानं प्रति। प्रतिकूलभूताः पाप्मनो ये तान्सर्व्वान्पाप्मनोऽवखण्डयतीतार्थः। य एवं वेद। विद्युद्ब्रह्मेति तस्यानुरूपं फलम्। विद्युद्धि यस्माद्ब्रह्म ॥ १ ॥ सप्तमस्य सप्तम ब्राह्मणम् ॥ ७ ॥

---

स एष इति ॥ यदुक्तं सर्व्वस्येशान इति तन्निगमयति। सर्व्वमिति ॥ यथान्यत्र तथाऽत्राफलश्रुतेरफलमिदमुपासनमकार्य्यमिति चेत्तत्राह। एवमिति ॥ १ ॥ सप्तमस्य षष्ठं ब्राह्मणम् ॥ ६ ॥

ब्राह्मणान्तरमुत्थाप्य विभजते। तथैवेत्यादिना। तमसो विदानाद्विद्युदिति सम्बन्धः। तदेव स्फुटयति। मेघेति ॥ उक्तमेव फलं प्रकटयति। एवमिति ॥ १ ॥ सप्तमस्य सप्तमं ब्राह्मणम् ॥ ७ ॥

वाचं धेनुमुपासीत तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारस्तस्यो द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारञ्च हन्तकारं मनुष्याः स्वधाकारं पितरस्तस्याः प्राण ऋषभो मनो वत्सः ॥ १ ॥ अष्टमं ब्राह्मणं ॥ ८ ॥

पुनरुपासनान्तरं तस्यैव ब्रह्मणः वाग्वै ब्रह्मेति वागिति शब्दस्त्रयी तां वाचं धेनुं धेनुरिव धेनुः यथा धेनुश्चतुर्भिस्तनैः स्तन्यं पयः चरति वत्सायैवं वाग्धेनुर्वक्ष्यमाणैः स्तनैः पय इवान्नं चरति देवादिभ्यः। के पुनस्ते स्तनाः। के वा ते येभ्यः चरति। तस्या एतस्या वाचो धेन्वा द्वौ स्तनौ देवा उपजीवन्ति वत्सस्थानीयाः। कौ तौ। स्वाहाकारं वषट्कारञ्च। आभ्यां हविर्दीयते देवेभ्यः। हन्तकारं मनुष्याः। हन्त इति मनुष्येभ्योऽन्नं प्रयच्छन्ति। स्वधाकारं पितरः। स्वधाकारेण हि पितृभ्यः स्वधां प्रयच्छन्ति। तस्या धेन्वा वाचः प्राण ऋषभः। प्राणेन हि वाक् प्रसूयते। मनो वत्सः। मनसा हि प्रस्राव्यते।

ब्राह्मणान्तरमवतारयति। पुनरिति॥ तां धेनुमुपासीतेति सम्बन्धः॥ वाचो धेन्वाश्च सादृश्यं विशदयति। यथेत्यादिना॥ स्तनचतुष्टयं भोक्तृत्रयञ्च प्रश्नपूर्वकं प्रकटयति। के पुनरित्यादिना॥ कथं देवा यथोक्तौ स्तनावुपजीवन्ति तत्राह। आभ्यां हीति॥ हन्त यदपेक्षितमित्यर्थः। स्वधामन्नं प्रस्राव्यते प्रस्तुताचरणोद्यता क्रियते॥ मनसा हीत्यादिनोक्तं विवृणोति। मनसेति॥ फलाश्रवणादेतदुपासनमकिञ्चित्करमित्याशङ्क्याह। एव मिति॥ तद्भाव्यं यथोक्तं वागुपाधिक-

अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन्भवति नैनं घोषꣳ शृणोति ॥ १ ॥ नवमं ब्राह्मणं ॥ ९ ॥

---

मनसा ह्यालोचिते विषये वाक् प्रवर्त्तते । तस्मान्मनो ब्रह्मस्थानीयम् । एवं वाग्धेनूपासकस्ताद्भाव्यमेव प्रतिपद्यते ॥१॥

अयमग्निर्वैश्वानरः । पूर्ववदुपासनान्तरमयमग्निर्वैश्वानरः कोऽयमग्निरित्याह । योऽयमन्तः पुरुषे । किं शरीरारम्भको नेत्युच्यते । येनाग्निना वैश्वानराख्येनेदमन्नं पच्यते । किं तदन्नम् । यदिदमद्यते भुज्यतेऽन्नं प्रजाभिर्जाठरोऽग्निरित्यर्थः । तस्य साक्षादुपलक्षणार्थमिदमाह । तस्याग्नेरन्नं पचतो जाठरस्यैष घोषो भवति । कोऽसौ । यं घोषमेतदिति क्रियाविशेषणम् । कर्णावपिधायाङ्गुलीभ्यामपिधानं कृत्वा शृणोति तं प्रजापतिमुपासीत वैश्वानरमग्निम् । अत्रापि तद्भाव्यं फलम् । तत्र प्रासङ्गिकमिदमरिष्टलक्षणमुच्यते । सोऽत्र शरीरे भोक्ता । यदोत्क्रमिष्यन्भवति नैनं घोषं शृणोति ॥ १ ॥ सप्तमस्य नवमं ब्राह्मणम् ॥९॥

---

ब्रह्मरूपत्वमित्यर्थः ॥ १ ॥ सप्तमस्याष्टमं ब्राह्मणम् ॥ ८ ॥

ब्राह्मणान्तरमनूद्य तस्य तात्पर्यमाह । अयमिति ॥ अन्नपानस्य पक्ता ॥ तत्सद्भावे मानमाह । तस्येति ॥ क्रियायाः श्रवणस्यैतदिति विशेषणम् । तद्यथा भवति अथेत्यर्थः ॥ कौक्षेयाग्न्युपाधिकस्य पुरुषस्योपासने प्रस्तुते रुतीत्याह । तत्रेति ॥ १ ॥ सप्तमस्य नवमं ब्राह्मणम् ॥ ९ ॥

यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्द्ध आक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा लम्बरस्य खन्तेन स ऊर्द्ध आक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खन्तेन स ऊर्द्ध

---

सर्वेषामस्मिन्प्रकरणे उपासनानां गतिरियम्। फलञ्चोच्यते। यदा वै पुरुषो विद्वानस्माल्लोकात्प्रैति शरीरं परित्यजति स तदा वायुमागच्छत्यन्तरिक्षे तिर्यग्भूतो वायुस्तिमितोऽभेद्यस्तिष्ठति। स वायुस्तत्र स्वात्मनि तस्मै सम्प्राप्ताय विजिहीते स्वात्मावयवान्विगमयति छिद्रीकरोत्यात्मानमित्यर्थः। किं परिमाणं छिद्रमित्युच्यते। यथा रथचक्रस्य खं छिद्रं प्रसिद्धं परिमाणम्। तेन छिद्रेण स विद्वानूर्द्ध्व आक्रमते ऊर्द्ध्वं स गच्छति स आदित्यमागच्छति। आदित्यो ब्रह्मलोकं जिगमिषोर्मार्गनिरोधं कृत्वा स्थितः सोऽप्येवंविदे उपासकाय द्वारं प्रयच्छति। तस्मै स तत्र विजिहीते। यथा लम्बरस्य खं वादित्रविशेषस्य छिद्रपरिमाणं तेन स ऊर्द्ध्वं आक्रमते स चन्द्रमसमागच्छति। सोऽपि तस्मै तत्र विजिहीते यथा दुन्दुभेः

---

ब्राह्मणान्तरस्य तात्पर्य्यमाह। सर्वेषामिति॥ फलन्त्वश्रुतफलानामिति शेषः। किमिति विद्वान्वायुमागच्छति तमपेक्ष्यैव ब्रह्मलोकं कुतो न गच्छतीत्याशङ्क्याह। अन्तरिक्ष इति॥ आदित्यं प्रत्यागमने हेतु-

आक्रमते स लोकमागच्छत्यशोकमहिमं तस्मिन्वसति शाश्वतीः समाः ॥ १ ॥ दशमं ब्राह्मणम् ॥१०॥

एतद्वै परमं तपो यद्व्याहितस्तप्यते परमꣳ हैव लोकं जयति य एवं वेदैतद्वै परमं तपो

खं प्रसिद्धम्। स तेन ऊर्द्ध्व आक्रमते स लोकं प्रजापतिमागच्छति। किं विशिष्टमशोकं मानसेन दुःखेन विवर्जितमित्येतत्। अहिमं हिमवर्जितं शारीरदुःखवर्जितमित्यर्थः। तं प्राप्य तस्मिन् तस्मिन्वसति शाश्वतीर्नित्याः समाः सम्वत्सरानित्यर्थः। ब्रह्मणो बहून्कल्पान्वसतीत्येतत् ॥ २ ॥
सप्तमस्य दशमं ब्राह्मणम् ॥ १० ॥

एतद्वै परमं तपः। किं तद्व्याहितो व्याधितो जरादिपरिगृहीतः सन्सन्तप्यते। तदेतत्परमं तप इत्येवं चिन्तयेत्। दुःखसामान्यात्। तस्यैवं चिन्तयतो विदुषः कर्मक्षयहेतुः। तदेव तपो भवत्यनिन्दतो विषीदतः स एव च। तेन विज्ञानतपसो दग्धकिल्बिषः परमं ह वै लोकं जयति य एवं वेद। तथा मुमूर्षुरादावेव कल्पयति किमेतद्वै परमं तपो यं प्रेतं मां ग्रामादरण्यं हरन्ति ऋत्विजो

साह। आदित्य इति॥ उक्तेऽर्थे वाक्यं पातयति। तस्मा इति॥ बहून्कल्पानितयशान्तरककल्पोक्तिः॥ १॥ सप्तमस्य दशमं ब्राह्मणम् ॥१०॥

ब्रह्मोपासनप्रसङ्गेन फलाद ब्रह्मोपासनमुपन्यस्यते। एतदिति॥ यद्व्याहित इति प्रतीकमादाय व्याचष्टे। जरादीति॥ कर्मक्षयहेतुरित्यत्र कर्मशब्देन पापमुच्यते। परमं ह वै लोकमित्यत्र तपसोऽ-

यं प्रेतमरण्यꣳ हरन्ति परमꣳ हैव लोकं जयति य एवं वेदैतद्वै परमन्तपो यं प्रेतमग्नावभ्यादधति परमꣳ हैव लोकं जयति य एवं वेद ॥ ॥ १ ॥ एकादशं ब्राह्मणं ॥ ११ ॥

अन्नं ब्रह्मेत्येक आहुस्तन्न तथा पूयति वा अन्नमृते प्राणात्प्राणो ब्रह्मेत्येक आहुस्तन्न तथा शुष्यति

ऽन्त्यकर्मणैतद्ग्रामादरण्यगमनसामान्यात्परमं मम तत्तपो भविष्यति । ग्रामादरण्यगमनं परमं तप इति हि प्रसिद्धम् । परमं ह वै लोकं जयति य एवं वेद । तथैतद्वै परमं तपो यं प्रेतमग्नावभ्यादधति । अग्निप्रवेशसामान्यात् । परमं ह वै लोकं जयति य एवं वेद ॥ १ ॥ सप्तमस्यैकादशं ब्राह्मणम् ॥ ११ ॥

अन्नं ब्रह्मेति । तथैतदुपासनान्तरं विविक्षन्नाहान्नं ब्रह्मान्नमद्यते यत्तद्ब्रह्मेति एक आचार्या आहुस्तन्न तथा गृहीतव्यमन्नं ब्रह्मेत्यन्ये चाहुः प्राणो ब्रह्मेति तच्च तथा न ग्रहीतव्यम् । किमर्थं पुनरन्नं ब्रह्मेति न ग्राह्यम् । यस्मात्पूयति क्लिद्यते पूतिभावमापद्यते । ऋते

तुकूलं फलं लोकशब्दार्थः । अस्तु ग्रामादरण्यगमनं तथापि कथं तपस्त्वमित्याशङ्क्याह । ग्रामादिति ॥ १ ॥ एकादशं ब्राह्मणम् ॥ ११ ॥

ब्राह्मणान्तरं गृहीत्वा तात्पर्यमाह । अन्नमिति ॥ यथा पूर्वस्मिन्ब्राह्मणे फलवद्ब्रह्मोपासनमुक्तं तद्वदित्याह । तथेति ॥ एतदिति ब्रह्मविषयोक्तिः ॥ उपास्यं ब्रह्म निर्द्धारयितुं विचा

वै प्राण ऋतेऽन्नादेते इत्वेव देवते एकधा-भूयंभूत्वा परमतां गच्छतस्तद्ध स्माह प्रातृदः पितरं किꣳ स्विदेवैवं विदुषे साधु कुर्य्यां किमेवास्मा असाधु कुर्य्यामिति स ह स्माह पाणिना मा

प्राणात्त्वकथं ब्रह्म भवितुमर्हति। ब्रह्म हि नाम तद्यदविनाशि। अस्तु तर्हि प्राणो ब्रह्म नैवं यस्माच्छुष्यति वै प्राणः शोषमुपैति ऋते अन्नात्। अत्ता हि प्राणः। अतोऽन्नेनाद्येन विना न शक्नोत्यात्मानं धारयितुम्। तस्माच्छुष्यति वै प्राणः ऋतोऽन्नात्। अत एकैकस्य ब्रह्मता नोपपद्यते। यस्मात्तस्मादेते ह तु एव अन्नप्राणदेवते एकधाभूयमेकधाभावं भूत्वा गत्वा परमतां परमत्वं गच्छतो ब्रह्मत्वं प्राप्नुतः। तदेतदेवमध्यवस्य ह स्म आह स्म प्रातृदो नाम पितरमात्मनः। किंस्विदिति वितर्के। यथा मया ब्रह्म-परिकल्पितमेवं विदुषे किंस्वित्साधु कुर्य्यां साधु शोभनं पूजां। कां तस्मै पूजां कुर्य्यामित्यभिप्रायः। किमेव वास्मै एवं विदुषे असाधु कुर्य्यां कृतकृत्योऽसावित्यभिप्रायोऽन्न-प्राणौ सहभूतौ ब्रह्मेति विद्वान्नासावसाधुकरणेन खण्डितो भवति। नापि साधुकरणेन महीकृतस्तमेवं वादिनं स

रयति। अन्नमित्यादिना॥ अन्नस्य विनाशित्वेऽपि ब्रह्मत्वं किं न स्यादत आह। ब्रह्म हीति॥ कथमन्नं विना प्राणस्य शोषप्राप्तिस्तत्राह। अत्ता हीति॥ प्रत्येकं नाशित्वमतः शब्दार्थः॥ किंस्विदित्यादिवाक्यस्यार्थं विवृणोति। अन्नप्राणाविति॥ कस्त्विति प्रतीकमादाय व्याकरोति. एतयोरिति॥ यद्येकतरोत्था परमत्वं यदि नास्तीत्यर्थः। उक्तमर्थ-

प्राट्द कस्त्वेनयोरेकधाभूयं भूत्वा परमतां गच्छतीति तस्मा उ हैतदुवाच वीत्यन्नं वै वि अन्ने हीमानि सर्व्वाणि भूतानि विष्टानि रमिति प्राणो वै रं प्राणे हीमानि सर्व्वाणि भूतानि रमन्ते सर्व्वाणि ह वा अस्मिन्भूतानि विशन्ति सर्व्वाणि भूतानि रमन्ते य एवं वेद ॥ १ ॥द्वादशं ब्राह्मणम् ॥ ॥ १२ ॥

---

पिता ह स्म आह । पाणिना हस्तेन निवारयन् मा प्राट्दैवं वोचः । कः सुतयोरेनयोरन्नप्राणयोरेकधाभूयं भूत्वा परमतां कस्तु गच्छति न कश्चिदपि विज्ञानेन ब्रह्मदर्शनेन परमतां गच्छति । तस्मान्नैवं वक्तुमर्हसि कृतकृत्योऽस्मीति । यद्येवं ब्रवीतु भवान्कथं परमतां गच्छतीति तस्मै उ ह एतद्वक्ष्यमाणं वच उवाच । किन्तद्वि इति ॥ तद्वि इत्युच्यते । अन्नं वै वि । अन्ने हि यस्मादिमानि सर्वाणि भूतानि विष्टान्याश्रितान्यतोऽन्नं वीत्युच्यते । किञ्च रमिति । रमिति चोक्तवान्पिता । किं पुनस्तद्रम् । प्राणो वै रम् । कुत इत्याह । प्राणे हि यस्माद्बलाश्रये सति सर्व्वाणि भूतानि रमन्तेऽतो रं प्राणः । सर्व्वभूताश्रयगुणमन्नं । सर्व-

---

द्धीर्षं गुणद्वयं सङ्क्षिप्याह । सर्वभूतेति ॥ अन्नगुणं विना प्राणगुणादेतद्ध्यानं सिद्ध्यतीत्याशङ्क्याह । न ह्योति ॥ प्राणगुणस्याप्यन्नगुणत्वसम्बन्धादन्न प्राणेनेत्याशङ्क्याह । नापीति ॥ गुणद्वयस्य परस्परापेक्षामनुभवानुसारेण स्फोरयति । यदा त्विति ॥ आयतनवतो बलवतश्च ज्ञातस्य पुरुषस्य तैत्तिरीयश्रुतिं संवादयति । युवा स्यादित्यादिना ॥ आ-

उक्थं प्राणो वा उक्थं प्राणो हीद७ सर्व्वमुत्थापयत्युद्धास्मादुक्थविद्वीरस्तिष्ठत्युक्थस्य सायुज्य७ सलोकतां जयति य एवं वेद ॥ १ ॥ यजुः प्राणो वै यजुः प्राणे हीमानि सर्व्वाणि भूतानि युज्यन्ते युज्यन्ते हास्मै सर्व्वाणि भूतानि श्रैष्ठ्याय

---

भूतरतिगुणश्च प्राणः। न हि कश्चिदनायतनो निराश्रयो रमते नापि सत्यप्यायतने प्राणो दुर्बलो रमते। यदा त्वायतनवान्प्राणो बलवांश्च तदा कृतार्थमात्मानं मन्यमानो रमते लोकः। युवा स्यात्साधु युवा ध्यायक इत्यादि श्रुतेः। इदानीमेवंविदः फलमाह। सर्व्वाणि ह वा अस्मिन्भूतानि विशत्यन्नगुणज्ञानात्सर्व्वाणि भूतानि रमन्ते प्राणगुणज्ञानाद्य एवं वेद ॥ १ ॥ सप्तमस्य द्वादशं ब्राह्मणम् ॥ १२ ॥

उक्थं। तथोपासनान्तरमुक्थं शस्त्रं। तद्धि प्रधानं महाव्रते क्रतौ। किं पुनस्तदुक्थं। प्राणो वा उक्थं। प्राणश्च प्रधानं उक्थञ्च शस्त्राणामत उक्थमित्युपासीत। कथं प्राण उक्थमि-

---

शिष्ठो द्रढिष्ठो बलिष्ठस्तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यादित्येतदादिशब्देन गृह्यते। अन्नप्राणयोर्गुणद्वयविशिष्टयोर्मिलितयोरुपासनमुक्तं ॥ १ ॥ द्वादशं ब्राह्मणम् ॥ ११ ॥

इदानीं ब्राह्मणान्तरमादाय तात्पर्य्यमाह। उक्थमिति ॥ सत्सु शास्त्रान्तरेषु किमित्युक्थस्योपास्यत्वेनोपन्यस्यते तत्राह। तद्धीति। कस्मिन्क्रिमारोप्य कस्योपास्यत्वमिति प्रश्नद्वारा विवृणोति। किं पुनरिति॥ तस्मिन्नुक्थदृष्टौ हेतुमाह। प्राणश्चेति तस्मिन्नुक्थशब्दस्य समवेतार्थत्वं

यजुषः सायुज्य৺ सलोकतां जयति य एवं वेद ॥ २ ॥ साम प्राणो वै साम प्राणे हीमानि सर्व्वाणि भूतानि सम्यञ्चि सम्यञ्चि हास्मै सर्व्वाणि भूतानि श्रैष्ठ्याय कल्पन्ते साम्नः सायुज्य৺सलोकतां जयति य एवं वेद ॥ ३ ॥ क्षत्रं प्राणो वै क्षत्रं प्राणो हि वै क्षत्रं त्रायते हैनं प्राणः क्षणितोः

त्याह। प्राणो हि यस्मादिदं सर्वमुत्थापयति। उत्थापनादुक्थं प्राणो न ह्यप्राणः कश्चिदुत्तिष्ठति। तदुपासनफलमाह। उत् ह अस्मादेवंविद उक्थवित्प्राणविद्वीरः पुत्र उत्तिष्ठति इ दृष्टमेतत्फलमदृष्टन्तूक्थस्य सायुज्यं सलोकतां जयति य एवं वेद॥ १ ॥ यजुरिति चोपासीत प्राणं। प्राणो वै यजुः। कथं यजुः प्राणः। प्राणे हि यस्मात्सर्वाणि भूतानि युज्यन्ते। न ह्यसति प्राणे केनचित्कस्य चिद्योगसामर्थ्यम्। अतो युनक्तीति प्राणो यजुः। एवम्विदः फलमाह। युज्यन्ते उद्यमन्त इत्यर्थः। ह अस्मै एवंविदे सर्वाणि भूतानि श्रैष्ठ्य श्रेष्ठभावस्तस्मै श्रैष्ठ्याय स श्रेष्ठो भवेदिति। यजुषः प्राणस्य सायुज्यमित्यादि सर्व्वं समानं॥ २ ॥ सामेति चोपासीत-

प्रश्नपूर्वकमाह। कथमित्यादिना॥ उत्थानस्य स्तोतोऽपि सम्भवान्न प्राणकतत्वमित्याशङ्क्याह। न हीति॥ उक्थस्य प्राणस्यैतद्विज्ञानतारतम्यमपेक्ष्य सायुज्यं सालोक्यं च व्याख्येयम्॥ १॥

यजुःशब्दस्यान्यत्र रूढत्वाद्युक्तं प्राणविषयत्वमिति शङ्कित्वा परिहरति। कथमित्यादिना॥ असत्यपि प्राणे योगः सम्भवतीत्याश-

प्र चत्रमत्रमाप्नोति चत्रस्य सायुज्यꣳ सलोकतां जयति य एवं वेद ॥ ४ ॥ त्रयोदशं ब्राह्मणं ॥ १३ ॥

---

साम। प्राणो वै साम। कथं प्राणः साम। प्राणे हि यस्मात्सर्व्वाणि भूतानि सम्यञ्चि सङ्गच्छन्ते। सङ्गमसाम्यकत्वापत्तिहेतुत्वात् साम प्राणः। सम्यञ्चि सङ्गच्छन्ते ह अस्मै सर्वाणि भूतानि। न केवलं सङ्गच्छन्त एव श्रेष्ठभावाय चास्मै कल्पन्ते समर्थ्यन्ते। साम्नः सायुज्यमित्यादि पूर्ववत् ॥ ३ ॥ तं प्राणं चत्रमित्युपासीत। प्राणो वै चत्रम्। प्रसिद्धमेतत्प्राणो हि वै चत्रम्। कथं प्रसिद्धतेत्याह। त्रायते पालयत्येनं पिण्डं देहं प्राणः। चणितोः शस्त्रादिहिंसितात्पुनर्मांसेनापूरयति यस्मात्तस्मात्चततत्राणात्प्रसिद्धं चत्रत्वं प्राणस्य। विद्वत्फलमाह। प्र चत्रमत्रम्। न त्रायतेऽन्येन केनचिदित्यत्रं चत्रं प्राणस्तमत्रं चत्रं प्राणं प्राप्नोतीत्यर्थः। शाखान्तरे वा पाठात् चत्रमात्रं प्राप्नोति प्राणो भवतीत्यर्थः। चत्रस्य सायुज्यं सलोकतां जयति य एवं वेद ॥ ४ ॥ सप्तमस्य त्रयोदशं ब्राह्मणम् ॥ १३ ॥

---

इत्याह। न होति। प्रकरणानुपगृहीतप्राणशब्दं श्रुत्वा यजुःशब्दस्य दृष्टिं तत्रका योगोऽङ्गीक्रियत इत्याह॥ अत इति॥ २॥ ३॥ सङ्गमनादितेप्रतदेव व्याचष्टे। सम्यञ्चीति॥ शाखान्तरशब्देन माध्यन्दिनशाखोच्यते॥ ४॥ सप्तमस्य त्रयोदशं ब्राह्मणम्॥ १३॥

भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराण्यष्टाक्षरꣳ ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स याव-

---

क्तव्यो यद्यनेकोपाधिविशिष्टस्योपासनमुक्तमथे- दानीं गायत्र्युपाधिविशिष्टस्योपासनं वक्तव्यमित्यारभ्यते। सर्वच्छन्दसां हि गायत्रीच्छन्दः प्रधानभूतम्। तत्प्रयोक्तृ ग- यत्राणाद्गायत्रीति वक्ष्यति। न चान्येषां छन्दसां प्रयोक्तृ च प्राणत्राणसामर्थ्यं। प्राणात्मभूता च सा सर्वच्छन्दसाञ्चात्मा प्राणः। प्राणश्च क्षतत्राणात्क्षत्रमित्युक्तम्। प्राणश्च गायत्री। तस्मात्तदुपासनमेव विधित्स्यते। द्विजोत्तमजन्महेतुत्वाच्च गा- यत्र्या ब्राह्मणमसृजत। त्रिष्टुभा राजन्यं। जगत्या वैश्य- मिति। द्विजोत्तमस्य द्वितीयं जन्म गायत्रीनिमित्तम्। तस्मा- त्प्रधाना गायत्री। ब्राह्मणा व्युत्थाय ब्राह्मणा अभिवदन्ति स ब्राह्मणो विपापो विजरो विचिकित्सो ब्राह्मणो भव- तीत्युक्तमपरुषार्थसम्बन्धं ब्राह्मणस्य दर्शयति। तच्च

---

वृत्तमनूद्य गायत्रीब्राह्मणस्य तात्पर्य्यमाह। ब्रह्मण इत्यादिना॥ छन्दोऽन्तरेष्वपि विद्यमानेषु किमिति गायत्र्युपाधिकमेव ब्रह्मोपास्यमि- ष्यते तत्राह। सर्वच्छन्दसामिति॥ तत्प्राधान्ये हेतुमाह। तदिति॥ तत्प्रयोगे तुल्यं प्रयोक्तृप्राणत्राणसामर्थ्यं छन्दोऽन्तराणामपीति चेन्ने- त्याह। न चेति॥ प्रमाणाभावादिति भावः। किञ्च प्राणात्मभावो गायत्र्या विवक्ष्यते प्राणस्य सर्वेषां छन्दसां निवर्त्तकत्वादात्मा। तथा च सर्वच्छन्दोव्यापकगायत्र्युपाधिकं ब्रह्मोपासनमेवात्र विवक्षितमित्याह। प्राणात्मेति॥ तदात्मभूता गायत्रीत्युक्तं व्यक्तीकरोति। प्राणश्चेति॥ तत्प्रयोक्तृगयत्राणाद्धि गायत्री। प्राणश्च वागादीनां त्राता। ततश्च त्राण- कर्तृत्वात्तयोस्तादात्म्यमित्यर्थः। प्राणगायत्र्योस्तादात्म्ये फलितमाह। त-

देषु त्रिषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥ १ ॥

ब्राह्मणत्वं गायत्रीजन्ममूलतो वक्तव्यं गायत्र्याः सतत्त्वम्। गायत्र्या हि यः सृष्टो द्विजोत्तमो निरङ्कुश एवोत्तमपुरुषार्थसाधनेऽधिक्रियते.तत्तन्मूलः परमपुरुषार्थसम्बन्धः। तस्मात्तदुपासनविधि नायाह। भूमिरन्तरिक्षं द्यौःइत्येतान्यष्टावक्षराणि। अष्टाक्षरमष्टावक्षराणि यस्य तदिदमष्टाक्षरं ह वै प्रसिद्धावद्योतकौ एवैकं प्रथमं गायत्रै गायत्र्याः पदं यकारेणैवाष्टत्वपूरणमेतदु ह एव एतदेवास्या गायत्र्याः पदं पादः। प्रथमो भूम्यादिलक्षणस्त्रैलोक्यात्मा॥अष्टाक्षरत्वसामान्यात्। एवमेवैतत्त्रैलोक्यात्मकं गायत्र्याः प्रथमं पदं यो वेद तस्यैतत्फलम्। स विद्वान्यावत्किंचिदेषु त्रिलोकेषु जेतव्यं तावत्सर्वं ह जयति योऽस्या एतदेवं पदं वेद॥ १ ॥

---

ब्रा[illegible]दिति गायत्रीप्राधान्ये हेत्वन्तरमाह। द्विजोत्तमेति॥ तदेव स्फुटयति। गायत्र्येति॥ तत्प्राधान्ये हेत्वन्तरमाह। ब्राह्मण इति॥ कथमेतावता गायत्रीप्राधान्यं तत्राह। तद्धेति॥ अतो वक्तव्यमित्युक्तातःसन्दार्थमाह। गायत्र्या हीति॥ अधिकारित्वलते कार्यमाह। तत इति॥ तच्छब्दो गायत्रीविषयः। गायत्रीसम्बन्धपरम्परया फलितमुपसंहरति। तस्मादिति॥ गायत्रीप्रथमपादस्य सप्ताक्षरत्वं प्रतीयते न त्वष्टाक्षरत्वमित्याशङ्क्याह। यकारेणेति॥ गायत्रीप्रथमपादस्य त्रैलोक्यात्मत्व सङ्ख्यासामान्यप्रयुक्तं कार्यमाह। एतदिति॥ गायत्रीप्रथमपादे त्रैलोक्यदृष्ट्यारोपस्य प्रयोजनं दर्शयति। एवमिति॥ प्रथमपादे ज्ञाते त्रिराड्यात्मकं फलतीत्यर्थः॥ १॥

ऋचो यजूꣳषि सामानीत्यष्टावक्षराण्यष्टाक्षरꣳ ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥ २ ॥ प्राणोऽपानो व्यान इत्यष्टावक्षराण्यष्टाक्षरꣳ ह वा एकं गायत्र्यै पदमे-

तथार्चो यजूंषि सामानीति त्रयी विद्या नामाक्षराणि एतान्यप्यष्टावेव तथैवाष्टाक्षरं ह वा एकं गायत्र्यै पदं द्वितीयमेतदु हैवास्या एतत् यदृग्यजुःसामलक्षणमष्टाक्षरत्वसामान्यादेव स यावतीयं त्रयी विद्या त्रय्या विद्यया यावत्फलजातमाप्यते तावद्ध जयति योऽस्या एतद्गायत्र्यास्त्रैविद्यालक्षणं पदं वेद ॥ २ ॥ तथा प्राणः अपानः विआनः व्यान एतान्यपि प्राणाद्यभिधानाक्षराण्यष्टौ । तच्च गायत्र्यास्तृतीयं पदं यावदिदं प्राणिजातं तावद्ध जयति योऽस्या एतदेवं गायत्र्यास्तृतीयं पदं वेद । अथानन्तरं गायत्र्यास्त्रिपदायाः शब्दात्मिकायास्तुरीयं पदमुच्यतेऽभिधेयभूतमथास्याः प्रकृताया गायत्र्या एतदेव वक्ष्य-

प्रथमे पादे त्रैलोक्यदृष्टिवद्द्वितीये पादे कर्त्तव्या त्रैविद्यादृष्टिरित्याह । तथेति ॥ दृष्टिविध्युपयोगित्वेन सङ्ख्यासामान्यं कथयति । ऋच इति ॥ सङ्ख्यासामान्यफलमाह । एतदिति ॥ विद्याफलं दर्शयति । स यावतीति ॥ २ ॥

प्रथमद्वितीयपादयोस्त्रैलोक्यत्रैविद्यादृष्टिवत्तृतीये पादे प्राणापानादिदृष्टिः कर्त्तव्येत्याह । तथेति ॥ ननु त्रिपदा गायत्री व्याख्याता केलिमुत्तरं ग्रन्थेनेत्याशङ्क्याह । अथेति ॥ शब्दात्मकगायत्र्याः प्रक-

तदु हैवास्या एतत्स यावदिदं प्राणि तावद्ध जयति योऽस्या एतदेवं पदं वेदायास्या एतदेव तुरीयं दर्शतं पदं परो रजा य एष तपति यद्वै चतुर्थं तत्तुरीयं दर्शतं पदमिति ददृश इव ह्येष परो रजा इति सर्व्वमु ह्येवैष रज उपर्य्युपरि

माणं तुरीयं दर्शतं पदं परो रजा य एष तपति। तुरीयमित्यादिवाक्यपदार्थं स्वयमेव व्याचष्टे श्रुतिः। इह चतुर्थं प्रसिद्धं लोके तदिह तुरीयशब्देनाभिधीयते। दर्शतं पदमित्यस्य कोऽर्थ इत्युच्यते। ददृश इव दृश्यत इव हि एष मण्डलान्तर्गतः पुरुषोऽतो दर्शतं पदमुच्यते। परो रजा इत्यस्य पदस्य कोऽर्थ इत्युच्यते। सर्व्वं समस्तं उ हि एष मण्डलान्तर्गतः पुरुषो रजो रजोजातं समस्तं लोकमित्यर्थः। उपर्य्युपर्य्याधिपत्यभावेन सर्व्वं लोकं रजोजातं तपति। उपर्य्युपरीति वीप्सा सर्व्वलोकाधिपत्यख्यापनार्था। ननु सर्वशब्देनैव सिद्धत्वाद्वीप्सानर्थिका नैष-

रथविच्छेदार्थोऽथशब्दः। यद्वै चतुर्थमित्यादिग्रन्थस्य पूर्व्वेण पौनरुक्त्यमाशङ्क्याह। तुरीयमिति॥ इहेति प्रकृतवाक्योक्तिः॥ योगिभिर्दृश्यत इवेति लक्ष्यते न तु मुख्यमीश्वरस्य दृश्यत्वमतीन्द्रियत्वादित्याह। दृश्यत इवेति॥ लोका रजांस्युच्यन्त इति श्रुत्यन्तरमाश्रित्याह। समस्तमिति॥ आधिपत्यभावेनेति कथं व्याख्यातमित्याशङ्क्याह। उपर्य्युपरीति॥ वीप्सामाक्षिपति। नन्विति॥ सर्व्वं रजस्तपतीत्येतावतैव सर्वाधिपत्यसिद्धत्वाद्व्यर्था वीप्सेति चोद्यं दूष्यति। नैष दोष इति॥ येषां लोकानामिति यावत्। मण्डलपुरुषस्य निरङ्कुशमाधिपत्यमित्यत्र छान्दोग्यश्रुतिमनुकूलयति। ये चेति॥ वीप्सार्थवत्त्वमुपसंहरति। त-

तपत्येवꣳहैव श्रिया यशसा तपति योऽस्या एत-देवं पदं वेद ॥३॥

सैषा गायत्र्येतस्मिꣳस्तुरीये दर्शते पदे परो रजसि प्रतिष्ठिता तद्वै तत्सत्ये प्रतिष्ठितं चक्षुर्वै

---

दोषो येषामुपरिष्टात्सविता दृश्यते तद्विषय एव सर्व-शब्दः स्यादित्याशङ्कानिवृत्त्यर्था वीप्सा। ये चामुष्मा-त्पराञ्चो लोकास्तेषामीष्टे देवकामानां चेति श्रुत्यन्त-रात्तस्मात्सर्वाविरोधार्था वीप्सा। यथाऽसौ सविता सर्वा-धिपत्यलक्षणया श्रिया यशसा च ख्यात्या तपति। एवं हैव श्रिया यशसा च तपति योऽस्या एतदेवं तुरीयं दर्शतं पदं वेद॥ ३॥

सैषा त्रिपदोक्ता या त्रैलोक्यत्रैविद्यप्राणलक्षणा गा-यत्री। एतस्मिंश्चतुर्थे तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता। मूर्त्तामूर्त्तरसत्वादादित्यस्य। रसापाये हि वस्तुनि रसमप्रतिष्ठितं भवति। यथा काष्ठादिदग्धसारं तद्वत्। तथा मूर्त्तामूर्त्तात्मकं जगत्त्रिपदा गायत्री आ-

---

स्मादिति॥ चतुर्थपादज्ञानस्य फलवत्त्वं कथयति। यथेति॥ ३॥

अभिधानाभिधेयात्मिकां गायत्रीं व्याख्यायाभिधानस्याभिधेयत-न्त्रत्वमाह सैषेत॥ आदित्यप्रतिष्ठिता मूर्त्तामूर्त्तात्मिका गाय-त्रीत्यत्र हेतुमाह। मूर्त्तेति॥ भवतु मूर्त्तामूर्त्तब्राह्मणानुसारेणादि त्यस्य तत्सारत्वं तथापि कथं गायत्र्यास्तत्प्रतिष्ठात्वं पृथगेव सा मूर्त्ता-द्यात्मिका स्यादित्याशङ्क्याह। रसेति॥ तद्वदादित्यसम्बन्धाभावे

सत्यं चक्षुर्हि वै सत्यं तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति य एव ब्रूयादहमदर्शमिति तस्मा एव श्रद्दध्याम तद्वै तत्सत्यं बले प्रतिष्ठितं प्राणो वै बलं तत्प्राणे प्रतिष्ठितं तस्मादाहुर्बलꣳ सत्यादोगीय इत्ये-

दित्ये प्रतिष्ठिता तद्ब्रह्मत्वात्सह त्रिभिः पादैस्तद्वै तुरीयं पदं सत्ये प्रतिष्ठितं किं पुनस्तत्सत्यमुच्यते। चक्षुर्वै सत्यं कथं चक्षुः सत्यमित्याह। प्रसिद्धमेतच्चक्षुर्हि वै सत्यम्। कथं प्रसिद्धतेत्याह। तस्माद्यद्यदि इदानीमेव द्वौ विवदमानौ विरुद्धं वदमानावेयातामागच्छेयातामहमदर्शं दृष्टवानस्म्यन्य आह अहमश्रौषं त्वया दृष्टं न तथा तद्वस्त्विति। तयोर्य एवं ब्रूयादहमद्राक्षमिति तस्मा एव श्रद्दध्याम न पुनर्यो ब्रूयादहमश्रौषमिति। श्रोतुर्मृषा श्रवणमपि सम्भवति न तु चक्षुषो मृषा दर्शनम्। तस्मान्नाश्रौषमित्युक्तवते श्रद्दध्याम। तस्मात्सत्यप्रतिपत्तिहेतुत्वात्सत्यं चक्षुस्तस्मिन्सत्ये चक्षुषि सह त्रिभिरितरैः पादैस्तुरीयं

मूर्त्ताद्यात्मिका गायत्री स्यादप्रतिष्ठितेति शेषः॥ धाराद्दते स्वातन्त्र्येण मूर्त्तादेर्न स्थितिरिति स्थिते फलितमाह। यथेति॥ क्रमादितरस्य स्वातन्त्र्यं वारयति। तथेति॥ सत्यपदस्यान्यतरविपरीतशब्दविषयत्वं शङ्काद्वारा वारयति। किं पुनरित्यादिना॥ चक्षुषः सत्यत्वे प्रमाणाभावं शङ्कित्वा दूषयति। कथमित्यादिना॥ श्रोतरि श्रद्धाभावे हेतुमाह। श्रोतुरिति॥ द्रष्टुरपि मृषादर्शनं सम्भवतीत्याह। न त्विति॥ कथं-

वमेषा गायत्र्यध्यात्मं प्रतिष्ठिता सा हैषा गयाꣳस्तत्रे प्राणा वै गयास्तत्प्राणाꣳ स्तत्रे तद्य-द्गयाꣳस्तत्रे तस्माद्गायत्री नाम स यामेवा

पदं प्रतिष्ठितमित्यर्थः। उक्तञ्च। स आदित्यः कस्मिन्प्रतिष्ठित इति चक्षुषीति॥

तद्वै तुरीयपदाश्रयं सत्यं बले प्रतिष्ठितं किं पुनस्तद्बलमित्याह। प्राणो वै बलं तस्मिन् प्राणे बले प्रतिष्ठितं सत्यं। तथाचोक्तं सूत्रे। तदोतञ्च प्रोतञ्चेति। यस्माद्बले सत्यं प्रतिष्ठितं तस्मादाहुर्बलं सत्यादोगीय ओजीय ओजस्तरमित्यर्थः। लोकेऽपि यस्मिन् हि यदाश्रितं भवति तस्मादाश्रितादाश्रयस्य बलवत्तरत्वं प्रसिद्धम्। न हि दुर्बलं बलवतः क्वचिदाश्रयभूतं दृष्टम्। एवमुक्तन्यायेन तु एषा गायत्री अध्यात्ममध्यात्मे प्राणे प्रतिष्ठिता। सैषा गायत्री प्राणोऽतो गायत्र्यां जगत्प्रतिष्ठितम्। यस्मिन्प्राणे सर्वे देवा सर्वे वेदाः कर्म्माणि फलञ्च एकं भवति। सैवं गायत्री

त्कथञ्चित्सत्यत्वेऽपि श्रोत्रपेक्षया द्रष्टरि विश्वासो दृष्टो लोकस्तत्राह। तस्मान्नेति॥ विश्वासातिशयफलमाह। तस्मादिति॥ आदित्यस्य चक्षुषि प्रतिष्ठितत्वं पञ्चमेऽपि प्रतिपादितमित्याह। उक्तञ्चेति॥

सत्यस्य स्वातन्त्र्यं प्रत्याह। तद्वा इति॥ सत्यस्य प्राणप्रतिष्ठितत्वञ्च पाञ्चमिकमित्याह। तथा चेति॥ सूत्रं प्राणो वायुस्तच्छब्देन सत्यशब्दितसर्वभूतप्रहणम्॥ सत्यं बले प्रतिष्ठितमित्यत्र लोकप्रसिद्धिं प्रमाणयति। तस्मादिति॥ तदेवोपपादयति। लोकेऽपीति॥ तदेव व्यतिरेकमुखेनाह। न हीति॥ एतेन गायत्र्याः सत्यात्मत्वं सिद्धमित्याह। एवमिति॥ तस्मिन्नर्थे वाक्यं योज-

सू॰सावित्रीमन्वाहैषैव स यस्मा अन्वाह तस्य प्राणा॰स्त्रायते ॥ ४ ॥

ता॰ हैतामेके सावित्री मनुष्टुभमन्वाहुर्वाग-

---

प्राणरूपा सती जगत आत्मा । सा हैषा गयांस्तत्रे त्रातवती । के पुनर्गयाः । प्राणा वागादयो वै गयाः । शब्दकरणात् । तांस्तत्रे सैषा गायत्री । तत्तत्र यस्माद्गयांस्तत्रे तस्माद्गायत्री नाम । गयत्राणाद्गायत्रीति प्रथिता । स आचार्य्य उपनीयमाणवकमष्टवर्षं यामेवामूं सावित्रीं सवितृदेवताकामन्वाह पच्छोऽर्द्धर्चशः समस्तां च । एषैव स साक्षात्प्राणो जगत आत्मा माणवकाय समर्पिता इहेदानीं वा व्याख्यानानां व्यास आचार्य्यो यस्मै माणवकायान्वाहानुवक्ति तस्य माणवकस्य ग[illegible]ान् प्राणान् त्रायते नरकादिपतनात् ॥ ४ ॥

---

यति । हैषेति ॥ गायत्र्याः प्राणत्वे किं सिध्यति तदाह । अत इति ॥ तदेव स्पष्टयति । यस्मिन्नित्यादिना ॥ गायत्रीनामनिर्वचनेन तस्या जगज्जीवनहेतुत्वमाह । सा हैषेति ॥ प्रयोक्तृशरीरं सप्तम्यर्थः । गायन्तीति गया वागुपलक्षिताश्चक्षुरादयः । ब्राह्मण्यमूलत्वेन स्तुत्यर्थं गायत्र्या एव सावित्रीत्वमाह । स आचार्य्य इति ॥ पच्छः पादशः सावित्र्या गायत्रीत्वं साधयति । स इति ॥ अतः सावित्री गायत्रीति शेषः॥४॥

मतान्तरमुद्भावयति । तामेतामिति ॥ तत्सवितुर्वृणीमहे । वयं देवस्य भोजनम् । श्रेष्ठ॰सर्वधातमम् । तुरं भगस्य धीमहीत्यनुष्टुभं

नुष्टुवेतद्वाचमनुब्रूम इति न तथा कुर्य्याद्गायत्रीमेव सावित्रीमनुब्रूयाद्यदि ह वा अप्येवं विद्बह्विव प्रतिगृह्णाति न हैव तद्गायत्र्या एकञ्च न पदं प्रति ॥ ५ ॥

तामेतां सावित्रीं हैके शाखिनोऽनुष्टुभमनुष्टुप्प्रभवामनुष्टुप्छन्दस्कामन्वाहुरुपनीताय। तदभिप्रायमाह। वागनुष्टुप्। वाक् शरीरे सरस्वती। तामेव हि वाचं सरस्वतीं माणवकायानुब्रूम इत्येतद्वन्तो न तथा कुर्यान्न तथा विद्याद्यत्ते आहुर्मृषैव तत्किं तर्हि गायत्रीमेव सावित्रीमनुब्रूयात्कस्माद्यस्मात्प्राणो गायत्रीत्युक्तम्। प्राण उक्ते वाक्च सरस्वती चान्ये च प्राणाः सर्वं माणवकाय समर्पितं भवति। किञ्चेदं प्रासङ्गिकमुक्त्वा गायत्रीविदं स्तौति। यदि ह वै अपि एवंविद्बह्विव न हि तस्य सर्वात्मनो बहुनामास्ति किञ्चित्सर्वात्मकत्वाद्विदुषः प्रतिगृह्णाति सहैव तत्प्रतिग्रहजातं गायत्र्या एकं च नैकमपि पदं प्रति पर्य्याप्तम्। ५।

सावित्रीमाहुः। सवितृदेवताकत्वादित्यर्थः। उपनीतस्य माणवकस्य प्रथमतः सरस्वत्यां श्रवणात्मिकायां सापेक्षत्वं द्योतयितुं हिशब्दः॥ दूषयति। नेत्यादिना॥ अन्वपेक्षितवागात्मकसरस्वतीसमर्पणं विना गायत्रीसमर्पणमयुक्तमिति शङ्कित्वा परिहरति। कस्मादित्यादिना॥ यदि हेत्यादेरुत्तरग्रन्थस्याव्यवहितपूर्वग्रन्थासङ्गतिमाशङ्क्याह। इदमिति॥ सावित्र्या गायत्रीत्वमिति यावत्। इवशब्दार्थं दर्शयति। न हीति॥ यद्यपि बहु प्रतिगृह्णाति विद्वानिति पूर्वेण सम्बन्धः। तथापि न तेन प्रतिग्रहजातेनैकस्यापि गायत्रीपदस्य विज्ञानफलं भुक्तं स्यात्। दूरतस्तु दोषाधायकत्वं तस्येत्यर्थः॥ ५॥

स य इमा१ँस्त्रीँल्लोकान्पूर्णान्प्रतिगृह्णीयात्सोऽस्या एतत्प्रथमं पदमाप्नुयादथ यावतीयं त्रयी विद्या यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतद्द्वितीयं पदमाप्नुयादथ यावदिदं प्राणि यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतत्तृतीयं पदमाप्नुयादथास्या

---

स इमांस्त्रीन् स यो गायत्रीविदिमान् भूरादीं स्त्रीन्गोऽश्वादिधनपूर्णान् लोकान्प्रतिगृह्णीयात्स प्रतिग्रहः अस्या गायत्र्या एतत्प्रथमं पदं यद्व्याख्यातमाप्नुयात्। प्रथमपदविज्ञानफलं तेन भुक्तं स्यान्न त्वधिकदोषोत्पादकः स प्रतिग्रहः। अथ पुनर्यावती इयं त्रयी विद्या यस्तावत्प्रतिगृह्णीयात् सोऽस्या एतद्द्वितीयं पदमाप्नुयात्। द्वितीयपदविज्ञानफलं तेन भुक्तं स्यात्तथा यावदिदं प्राणि यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतत्तृतीयं पदमाप्नुयात्। तेन तृतीयपदविज्ञानफलं भुक्तं स्यात्कल्पयित्वेदमुच्यते पादत्रयसममपि यदि कश्चित्प्रतिगृह्णीयात्तत्पादत्रयविज्ञानफल-

---

गायत्रीविदः प्रतिगृह्णतो दोषाभावं सामान्येनोक्तं विशेषतस्तद्भावमाह। स इति॥ यथा त्रैलोक्यावच्छिन्नस्य त्रैविद्यावच्छिन्नस्य चार्थस्य प्रतिग्रहेण पादद्वयविज्ञानफलमेव भुक्तं नाधिकं दूषणं तथेति यावत्। प्रतिग्रहीता दाता वा नैवंविधः सम्भाव्यते किन्तु स्तुत्यर्थं श्रुतेस्तत्कल्पनमित्याह। कल्पयित्वेति॥ उक्तमेव स्फुटयति। पादत्रयेति॥ कल्पयित्वेदमुच्यते इति किमिति कल्प्यते सुख्यमेवैतत्किं न स्यादित्याशङ्क्याह। न चेति॥ कल्पनापि तर्हि किमर्थं तत्राशङ्क्याह। गायत्रीति॥ श्रुतिवाक्यमुत्तरवाक्यमुत्थापयति। दातेति॥ तद्देवाका-

एतदेव तुरीयं दर्शतं पदं परो रजा यऽएष तपति नैव केन च नाप्यं कुत उ एतावत्प्रति गृह्णीयात् ॥ ६ ॥

स्यैव चयकारणं न त्वन्यस्य दोषस्य कर्त्तृत्वे क्षमं । न चैवं दाता प्रतिग्रहीता वा गायत्रीविज्ञानस्तुतये कल्पते। दाता प्रतिगृहीता च यद्यप्येवं सम्भाव्यते नासौ प्रतिग्रहोऽपराधक्षमः। कस्माद्यतोऽभ्यधिकमपि पुरुषार्थविज्ञानमवशिष्टमेव चतुर्थपादविषयं गायत्र्यास्तद्दर्शयति। अस्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति। तच्चैतन्नैव केनचित्केनचन केनचिदपि प्रतिग्रहणार्थेनैव प्राप्यमित्यर्थः। यथा पूर्व्वोक्तानि त्रीणि पदानि एतान्यपि नैवाप्यानि केनचित्कल्पयित्वैवमुक्तं परमार्थतः। कुत एतावत् प्रतिगृह्णीयात्त्रैलोक्यादिसमं तस्माद्गायत्र्येवं प्रकारोपास्येत्यर्थः ॥ ६ ॥

---

ङ्कापूर्व्वकमाह। कस्मादिति ॥ वागात्मकपदत्रयविज्ञानफलभोगोक्तप्रानन्तर्य्यमथमह्दार्थः। नैव प्राप्यं प्रतिग्रहेण केनचिदपि नैव मुक्तं स्यादित्यर्थः। तत्रैव वैधर्म्यदृष्टान्तमाह। यथेति ॥ तानि प्रतिग्रहेण यथाऽऽप्यानि तत्तथैव तदाप्यमित्यर्थः ॥ कुत इत्यादि वाक्यस्य तात्पर्य्यमाह। एतान्यपीति। गायत्रीविदः स्तुतिरुक्ता तत्फलमाह। तस्मादिति। एवम्प्रकारा पादचतुष्टयरूपा सर्व्वात्मिकेत्यर्थः ॥ ६ ॥

तस्या उपस्थानं गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदो मा प्रापदिति यं द्विष्यादसावस्मै कामो मा समृद्धीति वा न

तस्या उपस्थानं तस्या गायत्र्या उपस्थानं उपेत्य स्थानं नमस्करणमनेन मन्त्रेण। कोऽसौ मन्त्र इत्याह। हे गायत्रि असि भवसि त्रैलोक्यपादेनैकपदी। त्रयीविद्यारूपेण द्वितीयेन द्विपदी। प्राणादिना तृतीयेन त्रिपद्यसि। चतुर्थेन तुरीयेण चतुष्पद्यसि। एवं चतुर्भिः पादैरुपासकैःपद्यसे ज्ञायसेऽतः परं परेण निरुपाधिकेन स्वेनात्मनाऽपदसि। अविद्यमानं पदं येन पद्यसे सा त्वमपदसि यस्मान्नहि पद्यसे नेति नेत्यात्मत्वात्। अतो व्यवहारविषयाय नमस्ते तुरीयाय दर्शताय पदाय परोरजसे। असौ शत्रुः पाप्मा त्वत्प्राप्तिविघ्नकरः। अदस्तदात्मनः कार्य्यं यत्त्वत्प्राप्तिविघ्नकर्तृत्वं प्रापत्मैव प्राप्नोतु। इतिशब्दो मन्त्रपरिसमाप्त्यर्थः। यं द्विष्यात् यं प्रति द्वेषं कुर्य्यात्स्वयं विद्वांस्तं प्रत्यनेनोपस्थानमसौ शत्रुरमुकनामेति नाम गृह्णीयादस्मै यज्ञदत्तायाभिप्रेतः कामो मा समृद्धि समृद्धिं माप्नोत्विति चोपतिष्ठते।

प्रकृतमुपासनमेव मन्त्रेण सङ्गृह्णाति। तस्या इत्यादिना॥ ध्येयरूपमुक्त्वा ज्ञेयं गायत्र्या रूपमुपन्यस्यति। अतः परमिति॥ चतुर्थस्य पादस्य पादत्रयापेक्षया प्राधान्यमभिप्रेत्याह। अत इति॥ यथोक्तनमस्कारस्य प्रयोजनमाह। असाविति॥ द्विविधमुपस्थानमभिचारिकमाभ्युदयिकं च तत्राद्यं द्वेधा व्युत्पादयति। यं द्विष्यादिति॥ नाम गृ-

हैवास्मै स काम ऋध्यते यस्मा एवमुपतिष्ठतेऽह-मदः प्रापमिति वा ॥ ७ ॥

एतद्ध वै तज्जनको वैदेहो बुडिलमाश्वतराश्वि-मुवाच यन्नु हो तद्गायत्रीविदब्रूथा अथ कथꣳ हस्तीभूतो वहसीति मुखꣳह्यस्याः सम्राण्न विदाञ्चकारेति होवाच तस्या अग्निरेव मुखं यदि

न हैवास्मै देवदत्ताय स कामःसमृद्ध्यते। कस्मै। यस्मा एवमुपतिष्ठतेऽहमदो देवदत्ताभिप्रेतं प्रापमिति चोपतिष्ठते। असावदो मा प्रापदित्यादित्रयाणां मन्त्रपदानां यथाकामं विकल्पः ॥ ७ ॥

गायत्र्या मुखविधानायार्थवाद उच्यते। एतद्ध किल स्मर्यते। तत्तत्र गायत्रीविज्ञानविषये जनको ह वैदेहो बुडिलो नामतोऽश्वतरस्याश्वस्यापत्यमाश्वतराश्विस्तं किलोक्तवान्। यन्नु इति वितर्के हो अहो इत्येतद्यत्त्वं गायत्रीविदब्रूथाः गायत्रीविदस्मीति यदब्रूथाः किमिदं तस्य वचसोऽननुरूपमथ कथं यदि गायत्रीवित्प्रतिग्रहदोषेण

ह्रीयात्तदीयं नाम गृहीत्वा न तदभिप्रेतं मा प्रापदित्यनेनोपस्थानमिति सम्बन्धः ॥ आस्थ्युदयिकमुपस्थानं दर्शयति। अहमिति ॥ कीदृगुपस्थानमत्र मन्त्रपदेन कर्त्तव्यमित्याशङ्क्य यथारुचि विकल्पं दर्शयति ॥ असाविति ॥ ७ ॥

किन्तु तद्गायत्रीविज्ञानं प्रतिकूलमुपलभ्यते तदाह। अथेति ॥ पूर्वापरविरोधद्योतकोऽथशब्दः। तथापि गायत्रीविज्ञानवत्त्वे सति प्रतिकूलमिदं हस्तीभूतस्य तव मां प्रति वहनमित्याशङ्क्याह। एकाङ्गेति ॥ राजा ब्रूते शृण्विति ॥ मुखविज्ञानस्य दृष्टान्तावष्टम्भेन फलमाचष्टे।

हवा अपि वह्वीवाग्नावभ्यादधति सर्व्वमेव तत् सन्दहत्येवꣳ हैवैवंविद्यद्यपि बह्विव पापं कुरुते सर्व्वमेव तत्संप्साय शुद्धः पूतो जरोऽमृतः सम्भवति ॥ ८ ॥ सप्तमस्य चतुर्द्दशं ब्राह्मणं ॥ १४ ॥

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखं तत्त्वं

---

हस्तीभूतो वहसीति । स पत्याह राज्ञा स्मारितो मुखं गायत्र्या हि यस्मादस्याः हे सम्राट् न विदाञ्चकार न विज्ञानवानस्मीति होवाच । एकाङ्गविकलत्वात् गायत्रीविज्ञानं ममाफलं जातम् । शृणु तर्हि तस्या गायत्र्या अग्निरेव मुखं । यदि ह वै अपि बह्विवेन्धनं अग्नावभ्यादधाति लौकिकाः सर्व्वमेव तत्सन्दहत्येवेन्धनमग्निरेवं ह एव एवंविद्गायत्र्या अग्निर्मुखमित्येवं वेत्तीत्येवंवित् स्यात् स्वयं गायत्र्यात्माग्निमुखःसन् । स यद्यपि बह्विव पापं कुरुते प्रतिग्रहादिदोषं तत्सर्व्वं पापजातं संप्साय संभक्षयित्वा शुद्धोऽग्निवत्पूतश्च । तस्मात्प्रतिग्रहदोषाद्गायत्र्यात्मा अजरोऽमृतश्च सम्भवति ॥ ८ ॥ सप्तमस्य चतुर्द्दशं ब्राह्मणं ॥ १४ ॥

यो ज्ञानकर्म्मसमुच्चयकारी सोऽन्तकाल आदित्यं प्रार्थ-

---

यदीत्यादिना ॥ एवशब्दोऽवधारणार्थः । पापसंसर्गराहित्यं शुद्धि-स्तत्फलासंसर्गस्तु पूततेति भेदः ॥ गायत्रीज्ञानस्य क्रमशुद्धिफलत्वं दर्शयति । गायत्र्यात्मेति ॥ ८ ॥ सप्तमस्य चतुर्द्दशं ब्राह्मणम् ॥ १४ ॥

ब्राह्मणान्तरस्य तात्पर्य्यमाह । यो ज्ञानेति ॥ आदित्यस्या-प्रस्तुतत्वात्कथं तत्प्रार्थनेत्याशङ्क्याह । अस्ति चेति ॥ तथापि कथमा-

पूषन्नपावृणु सत्यधर्माय दृष्टये पूषन्नेकर्षे यम सूर्य्य प्राजापत्य व्यूह रश्मीन्

यत्यस्ति च प्रसङ्गो गायत्र्यास्तुरीयः पादो हि स तदुपस्थानं प्रकृतमतः स एव प्रार्थ्यते हिरण्मयेन ज्योतिर्म्मयेन पात्रेण। यथा पात्रेणेष्टं वस्त्वपिधीयते एवमिदं सत्याख्यं ब्रह्म ज्योतिर्म्मयेन मण्डलेनापिहितमिवासमाहितचेतसामदृश्यत्वात्तदुच्यते। सत्यस्यापिहितं मुखं मुख्यं स्वरूपं तदभिधानं पात्रमपिधानमिव दर्शनप्रतिबन्धकारणं। तत्त्वं हे पूषन् जगतः पोषणात्पूषा सविता अपावृणु अपावृतं कुरु दर्शनप्रतिबन्धकारणमपनयेत्यर्थः। सत्यधर्माय सत्यधर्म्मोऽस्येति मम सोऽहं सत्यधर्म्मोऽतस्मै तदात्मभूतायेत्यर्थः। दृष्टये दर्शनाय॥ पूषन्नित्यादीनि नामानि आमन्त्रणार्थानि सवितुः। एकर्षे एकस्तात्हृषिश्च एकर्षिः दर्शनाद्दृषिः स हि सर्व्वस्य जगत आत्मा चक्षुश्च सन्सर्व्वं पश्यत्येको वा गच्छतीत्येकर्षिः। सूर्य्य एकाकी चरतीति मन्त्रवर्णात्। यमः सर्व्वं हि जगतः संयमनं त्वत्कृतं। सूर्य्यः

दितस्य प्रसङ्गस्तत्राह। तदुपस्थानमिति॥ नमस्ते तुरीयायेति तर्हि दर्शितमित्यर्थः॥ आदित्यस्य प्रसङ्गे फलितमाह। अत इति॥ समाहितचेतसां प्रयत्नवतामपि दृश्यत्वाद्नपिहितं किन्तु पिहितमेवेति तत्राह। असमाहितेति॥ जगतः पोषणाद्धर्म्महिमवृष्ट्यादिदानेनेति शेषः॥ अपावरणकरणमेव विवृणोति दर्शनेति॥ सत्यं परमार्थस्वरूपं ब्रह्म धर्मस्वभाव इति यावत्॥ ननु दर्शनार्थं तत्प्रतिबन्धकनिवृत्तौ पूषणि नियुक्ते किमितरनेन सम्बोध्य नियुज्यन्ते तत्राह। पूषन्नित्यादीति॥ दर्शनादृषिरित्युक्तं विशदयति। स हीति॥ सूर्य्य एकाकी

समूह तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि वायुरनिलममृत-मथेदं भस्मान्तꣳ शरीरं ओ३ क्रतो स्मर कृतꣳ

---

सु ईरयते रसान् रश्मीन् प्राणान् यो वा जगत इति। प्राजापत्यः प्रजापतेरीश्वरस्यापत्यं हिरण्यगर्भो वा। हे प्राजापत्य व्यूह विगमय रश्मीन्॥

समूह सङ्क्षिप मनस्तेजो येनाहं शक्नुयां द्रष्टुं। तेजसा ह्यपहृतदृष्टिर्न शक्नुयां त्वत्स्वरूपमञ्जसा द्रष्टुं। विद्योतन इव रूपाणामत उपसंहर तेजः। यत्ते तव रूपं सर्व-कल्याणानामतिशयेन कल्याणं कल्याणतमं तत्ते पश्यामि। पश्यामो वयं वचनव्यत्ययेन। योऽसौ भूर्भुवःस्वो व्याहृत्यवयवः। पुरुषः पुरुषाकृतित्वात् पुरुषः सोऽहमस्मि भवामि अहरहमिति चोपनिषद उक्तत्वादादित्यचाक्षुषयोस्तदेवेदं पदाम्‌ृश्यते। सोऽहमस्म्यमृतमिति सम्बन्धः॥

---

जगतस्तस्थुषश्चेति मन्त्रवर्णमभिप्रेत्योक्तम्। जगत आत्मेति। चक्षुर्मित्रस्य वरुणस्याग्नेरित्येतदभिप्रेत्याह। चक्षुश्चेति॥

स्वाभाविका रश्मयो न विगमयितुं शक्या इत्याशङ्क्याह। समूहेति। मदीयं तेजःसंक्षेपं विनापि ते मत्स्वरूपदर्शनं स्यादित्याशङ्क्याह॥ तेजसा हीति। विद्योतनं विद्युत्प्रकाशस्तस्मिन् सति रूपाणां स्वरूप-मञ्जसा चक्षुषा न शक्यं द्रष्टुं तस्य चक्षुर्मोषित्वात्तथेत्याह। विद्योतन इवेति॥ तेजःसंक्षेपस्य प्रयोजनमाह। यदिति॥ किञ्च नाहं त्वां भृत्यवद्याचेऽभेदेन ध्यातत्वादित्याह। योऽसाविति॥ व्याहृतिशरीरे कथम-हमिति प्रयोगोपपत्तिरित्याशङ्क्याह। अहरिति॥ तदेवेदमित्यहं रूप-मुच्यते॥

क्रतो स्मर कृतं स्मर अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान्

ममान्तकाले सत्यस्य शरीरपाते शरीरस्थो यः प्राणो वायुः सोऽनिलं बाह्यं वायुमेव प्रतिगच्छतु। तथाऽन्या देवताः स्वां स्वां प्रकृतिं गच्छन्तु। अथेदमपि भस्मान्तं सत् पृथिवीं यातु शरीरं। अथेदानीमात्मनः संकल्पभूतां मनसि व्यवस्थितामग्निदेवतां प्रार्थयति। ओंक्रतो। ओमिति क्रतो इति च सम्बोधनार्थावेव। ओङ्कारप्रतीकत्वादोम्मनोमयत्वाच्च क्रतुः। हे क्रतो स्मर स्मर्त्तव्यमन्तकाले हि त्वत्स्मरणवशादिष्टा गतिः प्राप्यतेऽतः प्रार्थ्यते यन्मया कृतं तत् स्मर। पुनरुक्तिरादरार्था॥

किञ्च हे अग्ने नय प्रापय सुपथा शोभनेन मार्गेण राये धनाय कर्म्मफलप्राप्तय इत्यर्थः। न दक्षिणेन कृष्णेन

---

ननु तत्र शरीरपातेऽपि नाम्नतत्वयाध्यात्मिकवाय्वादिप्रतिबन्धादत आह। ममेति॥ वायुग्रहणमुपलक्षणत्वं विवक्षित्वाह। तथेति॥ देहस्य देवतानामप्रतिबन्धकत्वेऽपि देहस्यैव सूक्ष्मतां गतस्य प्रतिबन्धकत्वात्तत्रामृतत्वमित्याशङ्क्याह। अथेति॥ मन्त्रान्तरमवतार्य व्याकरोति। अथेदानीमित्यादिना॥ अवतीत्योमीश्वरः सर्वस्य रक्षकस्तस्य जाठराग्निप्रतीकत्वेन ध्यातत्वादग्निशब्देन निर्देशः। एवमग्निदेवतां सम्बोध्य नियुङ्क्ते। स्मरेति॥ इष्टां गतिं जिगमिषता किमिति स्मरणे देवता नियुज्यते तत्राह। स्मरणेति॥

प्रार्थनान्तरं समुच्चिनोति॥ किञ्चेति॥ उक्तमेव व्यनक्ति। नेत्यादिना॥ अस्मान्नयेति पूर्वेण सम्बन्धः। प्रज्ञानग्रहणकर्मादीनामुपलक्षणम्।

युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम३ ॥ १ ॥पञ्चदशं ब्राह्मणं॥ १५ ॥इति बृहदारण्यके सप्तमोऽध्यायः ॥ ७ ॥ उपनिषत्सु पञ्चमोऽध्यायः ॥ ५ ॥

पुनरावृत्तियुक्तेन। किं तर्हि शुक्लेनैव सुपथा.समान्विश्वानि सर्वाणि हे देव वयुनानि प्रज्ञानानि सर्वप्राणिनां विद्वान् किञ्च युयोधि अपनय वियोजय। अस्मदस्मत्तो जुहुराणं कुटिलं एनः पापं पापजातं सर्व्वं। तेन पापेन वियुक्ता वयमेष्याम उत्तरेण पथा त्वत्प्रसादात्। किन्तु वयं तुभ्यं कर्त्तुं शक्नुमो भूयिष्ठां बहुतमां ते तुभ्यं नमउक्तिं नमस्कारवचनं विधेम नमस्कारोक्त्या परिचरेम इत्यर्थोऽन्यत्कर्त्तुमशक्ताः सन्तः ॥ इति सप्तमस्य पञ्चदशं ब्राह्मणं ॥ १५ ॥ इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीशङ्करभगवतः कृतायां बृहदारण्यकटीकायां सप्तमोऽध्यायः समाप्तः ॥

---

प्रार्थनान्तरं दर्शयति । किञ्चेति ॥ पापवियोजनफलमाह । तेनेति ॥ भवद्भिराराधितो भवतां यथोक्तं फलं साधयिष्यामीत्याशङ्क्याह । किन्त्विति ॥ बहुतमत्वं भक्तिश्रद्धातिरेकयुक्तत्वं यागादिना परिचरणं क्रियतामित्याशङ्क्याह ॥ अन्यदिति ॥ सन्ततनमस्कारोक्त्या परिचरामेति पूर्व्वेण सम्बन्धः । अथर्क्तिश्च तुमूर्धन्याद्दिति द्रष्टव्यम् । इति षष्ठोऽध्यायसमाप्त्यर्थः । पञ्चदशं ब्राह्मणम् ॥ १५ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां बृहदारण्यटीकायां सप्तमोऽध्यायः समाप्तः ॥ ओं तत् सत् ॥

॥हरिः ओं॥यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद ज्येष्ठश्च

॥ओं॥ प्राणो गायत्रीत्युक्तं । कस्मात् पुनः कारणात् प्राणभावो गायत्र्या न पुनर्वागादिभाव इति । यस्मात् ज्येष्ठश्च श्रेष्ठश्च प्राणो न वागादयो ज्येष्ठश्रेष्ठभाजः । कथं ज्येष्ठत्वञ्च श्रेष्ठत्वञ्च प्राणस्येति तन्निर्दिधारयिषयेदमारभ्यते । अथवोक्थयजुःसामक्षत्रादिभावैः प्राणस्यैवोपासनमभिहितं सत्स्वप्यन्येषु चक्षुरादिषु तत्र हेतुमात्रमिहानन्तर्य्येण सम्बध्यते न पुनः पूर्वशेषता । विवक्षितन्तु खिलत्वादस्य काण्डस्य पूर्व्वत्र यदनुक्तं विशिष्टं फलं प्राणविषयमुपासनं तद्वक्तव्यमिति । यः कश्चिद्ध वै इत्यवधारणार्थं । यो ज्येष्ठश्रेष्ठगुणं वक्ष्यमाणं वेदासौ भवत्येव ज्येष्ठश्च श्रेष्ठश्च । एवं फलेन प्रलोभितः सन् प्रश्नाभिमुखीभूतस्तस्मै चाह । प्राणो वै ज्येष्ठश्च श्रेष्ठश्च । कथं पुनरवगम्यते प्राणो ज्येष्ठश्च

---

श्रीगणेशाय नमः । ओंकारो दमादित्रयं ब्रह्माब्रह्मोपासनानि तत्फलं तदर्थां गतिरादित्याद्युपस्थानमित्येषोऽर्थः सप्तमे निष्टत्तः । सम्प्रति प्राधान्येनाब्रह्मोपासनं सफलं श्रीमन्थादिकर्म च वक्तव्यमित्यष्टममध्यायमारभमाणो ब्राह्मणसङ्गतिमाह । प्राण इति ॥ तस्मात्प्राणो गायत्रीति युक्तमुक्तमिति शेषः ॥ प्राणस्य ज्येष्ठत्वादिनाद्यापि निर्द्धारितमिति शङ्कित्वा परिहरति । कथमित्यादिना ॥ प्रकारान्तरेण पूर्व्वोत्तरग्रन्थसङ्गतिमाह । अथवेति ॥ आदिशब्दादन्नवैशिष्ठ्यादिनिर्देशस्तत्रेति प्राणस्यैव विशिष्टगुणकस्योपास्यत्वोक्तिर्हेतुः । ज्येष्ठत्वादिस्तन्मात्रमिहानन्तरग्रन्थेन कथ्यत इति शेषः ॥ तदेव पूर्वग्रन्थस्य हेतुमत्त्वादुत्तरस्य च हेत्वानन्तर्य्येण पौर्वापर्य्येण पूर्वग्रन्थेन सहोत्तरं ग्रन्थजातं सम्बध्यत इति फलितमाह । आनन्तर्य्येणेति । वक्ष्यमाणप्राणोपास-

श्रेष्ठश्च स्वानां भवति प्राणो वै ज्येष्ठश्च श्रेष्ठश्च

श्रेष्ठश्चेति। यस्मान्निषेककाल एव शुक्रशोणितसम्बन्धः प्राणादिकपालसर्वविशिष्टस्तथापि नाप्राणं शुक्रं विरोहतीति प्रथमो वृत्तिलाभः प्राणस्य चक्षुरादिभ्यः। अतो ज्येष्ठो वयसा प्राणो निषेककालादारभ्य गर्भं पुष्यति प्राणः। प्राणे हि लब्धवृत्तौ पश्चाच्चक्षुरादीनां वृत्तिलाभः। अतो युक्तं प्राणस्य ज्येष्ठत्वं चक्षुरादिषु। भवति तु कश्चित्कुले ज्येष्ठो गुणहीनत्वात्, न श्रेष्ठो मध्यमः कनिष्ठो वा गुणाढ्यत्वाद्भवेच्छ्रेष्ठो न ज्येष्ठः। न तथेहेत्याह प्राण एव तु ज्येष्ठश्च श्रेष्ठश्च। कथं पुनः श्रेष्ठत्वमवगम्यते प्राणस्य। तदिह संवादेन दर्शयिष्यामः॥

---

तस्य पूर्वोक्तगुणधाद्युपास्तिशेषत्वमाशङ्क्य गुणभेदात् फलभेदाच्च नैरपेक्ष्यमभिप्रेत्याह। न पुनरिति। किमिति प्राणोपासनमिह स्वातन्त्र्येणोपदिश्यते तत्राह। खिलत्वादिति॥ इति शब्दो ब्राह्मणारम्भोपसंहारार्थः॥ एवं ब्राह्मणारम्भं प्रतिज्ञायाक्षराणि व्याचष्टे। यः कश्चिदित्यादिना॥ यच्छब्दस्य पुनरुपादानमन्वयार्थम्। निपातयोरर्थमवधारणमेव प्रागुक्तं प्रकटयति। भवत्येवेति॥ प्रश्नाय कोऽसौ ज्येष्ठश्च श्रेष्ठश्चेति। प्रश्नस्तदर्थमिति यावत्॥ प्राणस्य ज्येष्ठत्वादिकमाक्षिपति। कथमिति॥ तत्र हेतुमाह। यस्मादिति॥ तस्माज्ज्येष्ठत्वादिकं तुल्यमेवेति शेषः॥ सम्बन्धाविशेषमङ्गीकृत्य ज्येष्ठत्वं प्राणस्य साधयति। तथापीति॥ उक्तमेव समर्थयते। निषेककालादिति॥ तत्रापि विप्रतिपन्नं प्रत्याह। प्राणे हीति॥ ज्येष्ठत्वेनैव श्रेष्ठत्वे सिद्धे किमिति पुनरुक्तिरित्याह। भवत्विति॥ ज्येष्ठत्वे सत्यपि श्रेष्ठत्वाभावसङ्घातस्मिन्सत्यपि ज्येष्ठत्वाभावमाह। मध्यम इति। इहेति प्राणोक्तिः॥ प्राणश्रेष्ठत्वे प्रमाणाभावमाशङ्क्य प्रत्याह। कथमित्यादिना॥

ज्येष्ठश्च श्रेष्ठश्च स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ॥ १ ॥
यो ह वै वसिष्ठां वेद वसिष्ठः स्वानां भवति

---

सर्वथापि तु प्राणं ज्येष्ठश्रेष्ठगुणं यो वेदोपास्ते स स्वानां ज्ञातीनां ज्येष्ठश्च श्रेष्ठश्च भवति। ज्येष्ठश्रेष्ठगुणोपासनसामर्थ्यात्स्वव्यतिरेकेणापि च येषां मध्ये ज्येष्ठश्च श्रेष्ठश्च भविष्यामीति बुभूषति भवितुमिच्छति तेषामपि ज्येष्ठश्रेष्ठप्राणदर्शी ज्येष्ठश्च श्रेष्ठश्च भवति । ननु वयोनिमित्तं ज्येष्ठत्वं तदिच्छातः कथं भवतीत्युच्यते । नैष दोषः। प्राणवद्वृत्तिलाभत्वस्यैव ज्येष्ठत्वस्य विवक्षितत्वात् ॥

यो ह वै वसिष्ठां वेद वसिष्ठः स्वानां भवति। दर्शनानुरूप्येण फलं। येषां च ज्ञातिव्यतिरेकेण वसिष्ठो भवितुमिच्छति तेषाञ्च वसिष्ठो भवत्युच्यतां तर्हि कोऽसौ वसिष्ठेति। वाग्वै वसिष्ठा। वासयत्यतिशयेन वस्ते-

---

पूर्वोक्तामुपास्तिं फलमुपसंहरति । सर्वथापीति ॥ आरोपेणानारोपेण चेत्यर्थः ॥ ज्येष्ठस्याविद्याफलत्वमाक्षिपति । नन्विति ॥ तस्य विद्याफलत्वं साधयति । उच्यत इति ॥ इच्छातो ज्यैष्ठ्यं दुःसाध्यमिति दोषस्यासत्त्वमाह । नेति ॥ तत्र हेतुमाह । प्राणवदिति ॥ यथा प्राणकृताशनादिप्रयुक्तश्चक्षुरादीनां वृत्तिलाभस्तथा प्राणोपासकाधीनं जीवनमन्येषां स्वानां भवतीति प्राणदर्शिनो ज्येष्ठत्वं न वयोनिबन्धनमित्यर्थः ॥ १ ॥

वसिष्ठत्वमपि प्राणस्यैवेति वक्तुमुत्तरवाक्यमुत्थाप्य व्याचष्टे । यो हेत्यादिना ॥ फलेन प्रलोभितं शिष्यं प्रश्नाभिमुखं प्रत्याह । उच्यतामित्यादि इता

वाग्वै वसिष्ठा वसिष्ठः स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ॥ २ ॥

यो ह वै प्रतिष्ठां वेद प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे चक्षुर्वै प्रतिष्ठा चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे य एवं वेद ॥ ३ ॥

.........................................................................

वेति वसिष्ठा। वाग्मिनो हि धनवन्तो वसन्त्यतिशयेन। आच्छादनार्थस्य वा वसेर्वसिष्ठां अभि भवन्ति हि वाचा वाग्मिनोऽन्यान्। तेन वसिष्ठगुणवत्परिज्ञानाद्वसिष्ठगुणो भवतीति दर्शनानुरूपं फलं॥

यो ह वै प्रतिष्ठां वेद प्रतितिष्ठत्यनयेति प्रतिष्ठा। तां प्रतिष्ठां प्रतिष्ठागुणवतीं यो वेद तस्यैतत्फलं प्रतितिष्ठति समे देशे काले च। तथा दुर्गे विषमे च दुर्गमने च। देशे दुर्भिक्षादौ वा काले विषमे। यद्येवमुच्यतां काऽसौ

---

॥ वाचो वसिष्ठत्वं द्विधा प्रतिजानीते वासयतीति ॥ वासयत्यतिशयेनेत्युक्तं विशदयति। वाग्मिनो हीति ॥ वासयन्ति चेति द्रष्टव्यं ॥ वस्ते वेत्युक्तं स्फुटयति। आच्छादनार्थस्य वेति ॥ आच्छादनार्थत्वमनुभवेन साधयति। अभिभवन्तीति ॥ उक्तमुपास्तिफलं निगमयति। तेनेति ॥ २ ॥

गुणान्तरं वक्तुं वाक्यान्तरमादाय व्याचष्टे। यो ह वा इति ॥ समे प्रतिष्ठां विद्यां विनापि स्यादित्याशङ्क्याह। तथेति ॥ विषमे च प्रतितिष्ठतीति सम्बन्धः ॥ विषमशब्दस्यार्थमाह। दुर्गमने चेति ॥ इदानीं प्रश्नपूर्वकं प्रतिष्ठां दर्शयति। यद्येवमिति ॥ प्रतिष्ठात्वञ्चक्षुषो व्युत्पादयति। कथमि-

यो ह वै सम्पदं वेद सꣳहास्मै पद्यते यं काम कामयते श्रोत्रं वै सम्पत् श्रोत्रे हीमे सर्व्वे वेदा अभिसम्पन्नाः सꣳहास्मै पद्यते यं कामं कामयते य एवं वेद ॥ ४ ॥

---

प्रतिष्ठा। चक्षुर्वै प्रतिष्ठा। कथं चक्षुषः प्रतिष्ठात्वमित्याह। चक्षुषा हि समे च दुर्गे च दृष्ट्वा प्रतितिष्ठति। अतोऽनुरूपं फलं प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे य एवं वेदेति ॥ ३ ॥

यो ह वै सम्पदं वेद सम्पद्गुणयुक्तं यो वेद तस्यैतत्फलमस्मै विदुषे सम्पद्यते ह। किं। यं कामं कामयते स कामः। किं पुनः सम्पद्गुणकं। श्रोत्रं वै सम्पत्। कथं पुनः श्रोत्रस्य सम्पद्गुणत्वमिति। उच्यते। श्रोत्रे सति हि यस्मात्सर्व्वे वेदा अभिसम्पन्नाः श्रोत्रेन्द्रियवतोऽध्येयत्वात् वेदविहितकर्म्मायत्ताश्च कामाः तस्माच्छ्रोत्रं सम्पत्। अतो ज्ञानानुरूपं फलं। सं हास्मै पद्यते स यं यं कामयते य एवं वेद ॥ ४ ॥

---

त्यादिना ॥ विद्याफलं निगमयति। अत इति ॥ ३ ॥

वाक्यान्तरमादाय विभजते। यो ह वै सम्पदमिति ॥ प्रश्नपूर्व्वकं सम्पदुत्पत्तिवाक्यमुपादत्ते। किं पुनरिति ॥ श्रोत्रस्य सम्पद्गुणत्वं व्युत्पादयति। कथमिति ॥ अध्येयत्वमध्ययनार्हत्वं ॥ तथापि कथं श्रोत्रं सम्पद्गुणकमित्याशङ्क्याह। वेदेति ॥ पूर्व्वोक्तं फलमुपसंहरति। अत इति ॥ ४ ॥

यो ह वा आयतनं वेदायतनꣳ स्वानां भवत्यायतनं जनानां मनो वा आयतनमायतनꣳ स्वानां भवत्यायतनं जनानां य एवं वेद ॥ ५ ॥

यो ह वै प्रजापतिं वेद प्रजायते ह प्रजया पशुभीरेतो वै प्रजातिः प्रजायते ह प्रजया पशुभिर्य एवं वेद ॥ ६ ॥

---

यो ह वा आयतनं वेद। आयतनमाश्रयस्तद्यो वेदायतनं स्वानां भवत्यायतनं जनानामन्येषामपि किं पुनस्तदायतनमित्युच्यते। मनो वा आयतनमाश्रय इन्द्रियाणां विषयाणाञ्च। मन आश्रिता हि विषया आत्मनो भोग्यत्वं प्रतिपद्यन्ते। मनःसङ्कल्पवशानि चेन्द्रियाणि प्रवर्त्तन्ते। अतो मन आयतनमिन्द्रियाणां अतो दर्शनानुरूपेण फलं आयतनं स्वानां भवत्यायतनं जनानां य एवं वेद ॥ ५ ॥

यो ह वै प्रजापतिं वेद। प्रजायते ह प्रजया पशुभिश्च सम्पन्नो भवति। रेतो वै प्रजातिः। रेतसा प्रज-

---

वाक्यान्तरमादाय विभजते। यो ह वा आयतनमिति ॥ सामान्येनोक्तमायतनं प्रश्नपूर्वकं विशदयति। किं पुनरिति ॥ मनसो विषयाश्रयत्वं विशदयति। मन इति ॥ इन्द्रियाश्रयत्वं तस्य स्फुटयति। मनः सङ्कल्पेति ॥ पूर्ववत्फलं निगमयति। अत इति ॥ ५ ॥

गुणान्तरं वक्तुं वाक्यान्तरं गृहीत्वा तदक्षराणि व्याकरोति। यो हेत्यादिना ॥ वागादीन्द्रियाणि तत्तद्गुणविशिष्टानि शिष्ट्वा रेतोविशिष्ट-

ते हेमे प्राणा अहश्श्रेयसे विवदमाना ब्रह्म जग्मुस्तद्धोचुः को नो वसिष्ठ इति तश्ह होवाच यस्मिन्व उत्क्रान्त इदश्ह शरीरं पापीयो मन्यते स वो वसिष्ठ इति ॥ ७॥

नेन्द्रियमुपलक्ष्यते। तद्विज्ञानानुरूपं फलं प्रजायते ह प्रजया पशुभिर्य एवं वेद ॥ ६ ॥

ते ह इमे प्राणा वागादयोऽहंश्रेयसेऽहं श्रेयानित्येतस्मै प्रयोजनाय विवदमाना विरुद्धं वदमाना ब्रह्म जग्मुर्ब्रह्म गतवन्तः ब्रह्मशब्दवाच्यं प्रजापतिं गत्वा च तद्ब्रह्म ऊचुरुक्त-वन्तः। को नोऽस्माकं मध्ये वसिष्ठः। कोऽस्माकं मध्ये वसति च वासयति। तद्ब्रह्म तैः पृष्टं सत् होवाचोक्तवद्यस्मिन्वो युष्माकं मध्ये उत्क्रान्ते निर्गते शरीरादिदं शरीरं पूर्वस्मा-दतिशयेन पापीयः पापतरं मन्यते लोकः शरीरं हि ना-मानेकं श्रुतिसङ्घातत्वाज्जीवतोऽपि पापमेव ततोऽपि कष्ट-तरं यस्मिन्नुत्क्रान्ते भवति। वैराग्यार्थमिदमुच्यते। पापी-य इति। स वो युष्माकं मध्ये वसिष्ठो भविष्यति। जान-

गुणमाचचाणस्य प्रकरणविरोधः स्यादित्याशङ्क्याह । रेतश्चेति ॥ विद्याफलमुपसंहरति । तद्विज्ञानेति ॥ ६ ॥

उक्ता वसिष्ठत्वादिगुणा न वागादिगामिनः किन्तु मुख्यप्राणग एवेति दर्शयितुमाख्यायिकां करोति । ते हेत्यादिना ॥ इत्थमनुप्रयोगस्य तात्पर्यमाह । शरीरं हीति ॥ किमिति शरीरस्य पापीयस्त्वमुच्यते तदाह । वैराग्यार्थमिति ॥ शरीरे वैराग्योत्पादनद्वारा तस्मिन्नहंममाभि-मानपरिहारार्थमित्यर्थः । वसिष्ठो भवतीत्युक्तवानिति सम्बन्धः । किमिति

वाग्घोच्चक्राम सा संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा कला अवदन्तो वाचा प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वांसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह वाक् ॥ ८ ॥ चक्षुर्होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा अन्धा अपश्यन्तश्चक्षुषा प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण विद्वांसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह चक्षुः ॥ ९ ॥ श्रोत्रं होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच

---

ऽपि वसिष्ठं प्रजापतिर्निर्वाचाऽयं वसिष्ठ इति । इतरेषामप्रियपरिहाराय । त एवमुक्ता ब्रह्मणा प्राणा आत्मनो वीर्य्यपरीक्षणाय क्रमेणोच्चक्रमुः ॥ ७ ॥

तत्र वागेव प्रथमं ह अस्माच्छरीरादुच्चक्राम उत्क्रान्तवती । सा चोत्क्रम्य संवत्सरं प्रोष्य प्रोषिता भूत्वा पुनरागत्योवाच कथमशकत शक्तवन्तो यूयं मदृते मां विना

---

भावादेव मुख्यं प्राणं वसिष्ठत्वादिगुणं नोक्तवान् प्रजापतिः । स हि सर्व्वत्र इत्यादिनाह । जानन्नपीति ॥ वाक् होच्चक्रामेत्यादेस्तात्पर्य्यमाह । एवमिति ॥ ७ ॥

उक्तोऽर्थं श्रुत्यक्षराणि व्याचष्टे । तत्रेत्यादिना ॥ कार्य्याकार्य्य विनयमि-

कथमशकत मदृते जीवितुमिति ते होचुर्यथा बधिरा अशृण्वन्तः श्रोत्रेण प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा विद्वाꣳसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह श्रोत्रं ॥ १० ॥

मनो होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा मुग्धा अविद्वाꣳसो मनसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह मनः ॥ ११ ॥

रेतो होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा क्लीवा अप्रजायमाना रेतसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाꣳसो मनसैवमजीविष्मेति प्रविवेश ह रेतः ॥ १२ ॥

---

जीवितुमिति । एवमुक्ता ऊचुर्यथा लोके कला मूका अवदन्तो वाचा प्राणन्तः प्राणेन व्यापारं कुर्वन्तः प्राणेन पश्यन्तो दर्शनव्यापारं चक्षुषा कुर्वन्तस्तथा शृण्वन्तः श्रोत्रेण विद्वांसो मनसा कार्य्यादिविषयं प्रजायमाना रेतसा पुत्रानुत्पादयन्त एवमजीविष्म वयं । इत्येवं प्राणैर्दत्तोत्तरं वागात्मनोऽस्मिन्नवशिष्ठत्वं बुद्धा प्रविवेश ह वाक् ।

---

आदिशब्देनोपेक्षणीयः सङ्ग्रहः । चक्षुरादिभिर्दत्तोत्तरा पुनर्वाकिंनकरो-

अथ ह प्राण उत्क्रमिष्यन्यथा महा सुहयः सैन्धवः पड्वीशशङ्कून्संवृहेदेवꣳ हैवेमान्प्राणा-

तया चक्षुर्होच्चक्रामेत्यादि पूर्ववत्॥ श्रोत्रं मनः प्रजातिरिति॥८॥९॥१०॥११॥१२॥

अथ ह प्राण उत्क्रमिष्यन्नुत्क्रमणं करिष्यंस्तदानीमेव स्वस्थानात्प्रचलिता वागादयः। किमिवेत्याह। यथा लोके महांश्चासौ सुहयश्च महा सुहयः शोभनहयो लक्षणोपेतो महान्परिमाणतः सिन्धुदेशे भवः सैन्धवोऽभिजनतः पड्वीशशङ्कून्पादबन्धनशङ्कून्पड्वीशाश्च ते शङ्कवश्चेति तान्संवृहेदुद्यच्छेद्युगपदुत्खनेदश्वारोह आरूढे परीक्षणाय। एवं ह एव इमान् वागादीन् प्राणान् संववर्होद्यतवान् स्वस्थानाद्भ्रंशितवान्। ते वागादयो ह उचुर्हे भगवः भगवन् मोत्क्रमीः। यस्मान्न वै शक्ष्याम त्वदृते त्वां विना जीवितुं। यद्येवं मम श्रेष्ठता विज्ञाता भवद्भिरहमत्र श्रेष्ठस्तस्य उ मे मम बलिं करं कुरुत करं प्रयच्छतेति। अयञ्च प्राणसंवादः कल्पितो विदुषः श्रेष्ठ-

दिति तत्राह। आत्मन इति॥८॥९॥॥१०॥११॥१२॥

वागादिप्रकरणविच्छेदार्थोऽथशब्दः। उत्क्रमं करिष्यन्यदा भातीति शेषः। उक्तमर्थं दृष्टान्तेन स्पष्टयन्नुत्तरवाक्यमादाय ते॥ किमिवेत्यादिना प्राणस्य श्रेष्ठत्वं वागादिभिर्निर्द्धारितमित्याह। ते वागादय इति॥ तर्हि तत्फलेन भवितव्यमित्याह। यद्येवमिति॥ यथोक्तस्य प्राणसंवादस्य

नसंववहं ते होचुर्मा भगव उत्क्रमीर्न वै शक्ष्या-
मस्त्वदृते जीवितुमिति तस्यो मे बलिं कुरुतेति
तथेति ॥ १३ ॥

सा ह वागुवाच यद्वा अहं वसिष्ठास्मि त्वं
तद्वसिष्ठोऽसीति यद्वा अहं प्रतिष्ठास्मि त्वं तत्प्र

---

परीक्षणप्रकारोपदेशः । अनेन हि विद्वान् को नु खल्वत्र श्रेष्ठ
इति परीक्षणं करोति । स एष परीक्षणप्रकारः संवाद-
भूतः कथ्यते । न ह्यन्यथा संहत्यकारिणो सतामेषामञ्जसैव
संवत्सरमात्रमेवैकैकस्य निर्गमनाद्युपपद्यते । तस्मा द्वि-
द्वानेवानेन प्रकारेण विचारयति । वागादीनां प्रधानं
बुभुत्सुरुपासनाय बलिं प्रार्थिताः सन्तः प्राणस्तथेति प्रति-
ज्ञातवन्तः ॥ १३ ॥

सा हि वाक् प्रथमं बलिदानाय प्रवृत्ता ह किल उवाच
उक्तवती । यद्वै अहं वसिष्ठास्मि यन्मम वसिष्ठत्वं तत्तवैव

---

काल्पनिकत्वं दर्शयति ॥ अयश्चेति ॥ कल्पनाफलं सूचयति । विद्वा
इति ॥ तदेव स्फुटयति । अनेन होति ॥ उपास्यपरीक्षणप्रकारो निरूपित-
श्चेत्किं संवादेनेत्याशङ्क्याह । स एष इति ॥ संवादस्य मुख्यार्थत्वादकल्पि-
तत्वमाशङ्क्याह । न होति ॥ संवादस्य कल्पितत्वे फलितमाह ।
तस्मा दिति ॥ एवं प्राणसंवादस्य तात्पर्यमुक्त्वा प्रकृतामक्षरव्याख्यामेवानु-
वर्त्तयति । बलिमिति ॥ १३ ॥

सा ह वागिति प्रतीकमादाय व्याचष्टे । प्रथममिति ॥ तेन वसिष्ठ-
गुणेन त्वमेव वसिष्ठोऽसि । तथा च तद्वसिष्ठत्वं तवैवेति योजना । बलि-

तिष्ठोऽसीति चक्षुर्यद्वा अहꣳ सम्पदस्मि त्वं तत्सम्पदसीति श्रोत्रं यद्वा अहमायतनमस्मि त्वं तदायतनमसीति मनो यद्वा अहं प्रजातिरस्मि

तेन वसिष्ठगुणेन त्वं तद्वसिष्ठोऽसीति। यदहं प्रतिष्ठाऽस्मि त्वं तत्प्रतिष्ठोऽसि। या मम प्रतिष्ठा सा त्वमसीति चक्षुः। समानमन्यत्। सम्पदायतनप्रजापतित्वगुणान्तं क्रमेण समर्पितवन्तः। यद्येवं साधु बलिं दत्तवन्तो ब्रूत तस्य मे एवं गुणविशिष्टस्य किमन्नं किं वास इति आहुरितरे। यदिदं लोके किञ्च किञ्चिदन्नं नामायाश्वभ्य आकृमिभ्य आकीटपतङ्गेभ्यो यच्चान्नं श्वान्नं कीटपतङ्गान्नं च तेन सह सर्वमेव यत्किञ्चित्प्राणिभिरद्यमानमन्नं तत्सर्वं

दानमङ्गीकृत्यान्नवाससी पृच्छति। यद्येवमित्यादिना॥ एवंगुणविशिष्टस्य ज्येष्ठत्वश्रेष्ठत्ववसिष्ठत्वादिसम्पन्नस्येत्यर्थः॥ यदिदमित्यादि वाक्यं व्याचष्टे। यदिति॥ प्रकृतेन श्वान्नेन कीटादीनां चान्नेन सह यत्किञ्चिदन्नं दृश्यते तत्सर्वमेव तवान्नमिति योजना। तदेव स्फुटयति। यत्किञ्चिदिति॥ पदार्थमुक्त्वा वाक्यार्थं कथयति। सर्वमिति॥ अस्मिन्नेव वाक्ये पक्षान्तरमुत्थापयति केचित्त्विति॥ न ह वा अस्येत्याद्यर्थवाददर्शनादित्यर्थः। तद्दूषयति। तदसदिति॥ शास्त्रान्तरेण क्रिमयो भवन्त्यभक्ष्यभक्षिण इत्यादिनेत्यर्थः॥ प्राणविदतिरिक्तविषयं शास्त्रान्तरं सर्वभक्षणन्तु प्राणदर्शिनो विवक्षितम्। अतो व्यवस्थितविषयत्वात् प्रतिषेधेन सर्वभक्षणस्योदितानुदितहोमवद्विकल्पः स्यादिति शङ्कते। तेनेति॥ किन्तर्हि सर्वान्नभक्षणं विहितं न वा। न चेन्न तस्य निषिद्धस्यानुष्ठानं प्राप्नोति। तज्ज्ञापकाभावाद्विहितं चेत्तत्किं यदिदमित्यादिना न हेत्यादिना वा विहितं नाद्य

त्वं तत्प्रजातिरसीति रेतस्तस्यो मे किमन्नं किं मे वास इति यदिदं किञ्चाश्वभ्य आकृमिभ्य आकीटपतङ्गेभ्य

---

तवान्नं सर्व्वं प्राणस्यान्नमिति दृष्टिरत्र विधीयते केचित्तु सर्व्वभक्षणे दोषाभावं वदन्ति प्राणान्नविदः। तदसत्। शास्त्रान्तरेण प्रतिषिद्धत्वात्। तेनास्य विकल्प इति चेत्। न। अविधायकत्वात्। न ह वा अस्यानन्नं जग्धं न भवतीति सर्व्वं प्राणस्यान्नमित्येतस्य विज्ञानस्य विहितस्य स्तुत्यर्थमेतत्। तेनैकवाक्यतापत्तेः। न तु शास्त्रान्तरे विहितस्य बाधने सामर्थ्यमन्यपरत्वादस्य प्राणमात्रस्य सर्व्वमन्नमित्येतद्दर्शनमिह विधित्सितं। न तु सर्व्वं भक्षयेदिति॥

---

इत्याह। नाविधायकत्वादिति॥ यदिदमित्यादिना हि सर्व्वं प्राणस्यान्नमिति ज्ञानमेव विधीयते न तु प्राणविदः सर्व्वान्नभक्षणं तद्वद्योतिपदाभावान्न विकल्पोपपत्तिरित्यर्थः॥ द्वितीयं दूषयति। न ह वा इति॥ अस्येति विद्वत्परामर्शान्निपाताः पारार्थ्यादत्वादवद्योतिनो दर्शनादेकवाक्यत्वसम्भवे वाक्यभेदस्यान्याय्यत्वाच्चेति हेतुमाह। तेनेति॥ अर्थवादस्यापि स्वार्थे प्रामाण्यं देवताधिकरणन्यायेन भविष्यतीत्याशङ्क्य न कलञ्जं भक्षयेदित्यादिविहितस्य भक्षणाभावस्य बाधने न ह वेत्यादेर्न सामर्थ्यं दृष्टिपरत्वादस्य मानान्तरविरोधे स्वार्थे मानतायोगादित्याह। नन्विति॥ न ह वेत्यादेरन्यपरत्वं प्रपञ्चयति। प्राणमात्रस्येति॥

यत्तु सर्व्वभक्षणे दोषाभावज्ञानं तन्मिथ्यैव प्रमाणाभावाद्विदुषः प्राणत्वात्सर्व्वान्नोपपत्तेः सामर्थ्याददोषः एवेति चेत्। न। अशेषान्नत्वानुपपत्तेः। सत्यं। यद्यपि विद्वान् प्राणो येन कार्य्यकरणसङ्घातेन विशिष्टस्य विद्वत्ता तेन कार्य्यकरणसङ्घातेन कृमिकीटदेवाद्यशेषान्नभक्षणं नोपपद्यते। तेन तत्राशेषान्नभक्षणदोषाभावज्ञापनमनर्थकं। अप्राप्तत्वादशेषान्नभक्षणदोषस्य। ननु प्राणः सन्भक्षयत्येव कृमिकीटाद्यन्नमपि। बाढं। किन्तु न तद्विषयः प्रतिषेधोऽस्ति तस्माद्दैवरक्तं किंशुकं। तत्र दोषाभावः। अतस्तद्रूपेण दोषाभावज्ञानमनर्थकं। अप्राप्तत्वादशेषान्न-

---

तत्र दोषाभावज्ञापनात्तदेव विधित्सितमित्याशङ्क्याह। यत्त्विति॥ अर्थवादस्य मानान्तरविरोधे स्वार्थे मानत्वायोगस्योक्तत्वादिति भावः॥ प्रमाणाभावस्यासिद्धिमाशङ्कते। विदुष इति॥ सामर्थ्यात्प्राणस्वरूपबलादिति यावत्। अदोषः सर्वान्नभक्षणे तस्येति शेषः॥ अर्थापत्तिं दूषयति। नेत्यादिना॥ अनुपपत्तिमेव विवृणोति। सत्यमिति॥ येनेत्यस्मात्प्राक्तथापीति वक्तव्यम्॥ यद्यपीत्युपक्रमात्। प्राणस्वरूपसामर्थ्यादनुपपत्तिरपि यास्यतीति शङ्कते॥ नन्विति॥ किं फलात्मना विदुषः सर्व्वान्नभक्षणं साध्यते किंवा साधकत्वरूपेणेति विकल्प्याद्यमङ्गीकरोति। बाढमिति॥ प्राणरूपेण सर्व्वभक्षणं तच्छब्दार्थः। तत्र प्रतिषेधाभावे सदृष्टान्तं फलितमाह। तस्मादिति॥ तथा स्वाभाविकं प्राणस्य सर्व्वभक्षणं तत्र वा प्रतिषेधाद्दोषराहित्यमिति शेषः। तद्राहित्ये किं स्यादिति चेत्तदाह। अत इति॥ पक्षान्तरमेव स्फोरयति। अप्राप्तत्वादिति॥ प्राणविदः साधकत्वाकारेण साध्यते सर्व्वान्नभक्षणमिति पक्षं प्रत्याह। येन त्विति॥ इहेति प्राणविदुच्यते। निमित्तान्तरादत्यन्ताप्राप्तिविषयो विधिः प्रति-

भक्षणे दोषस्य। येन तु कार्य्यकरणसङ्घातसम्बन्धेन प्रतिषेधः क्रियते तत्सम्बन्धेन त्विह नैव प्रतिप्रसवोऽस्ति। तस्मात्प्रतिषेधातिक्रमाद्दोष एव स्यादन्यविषयत्वान्न ह वेत्यादेः। न च ब्राह्मणादिशरीरस्य सर्व्वान्नत्वदर्शनमिह विधीयते किन्तु प्राणमात्रस्यैव। यथा च सामान्येन सर्व्वान्नस्य प्राणस्य किञ्चिदन्नजातस्य किञ्चिज्जीवनहेतुः। यथा विषं विषजस्य क्रिमेस्तदेवान्यस्य प्राणान्तमपि सद्दृष्टमेव दोषमुत्पादयति मरणादिलक्षणं। तथा सर्व्वान्नस्यापि प्राणस्य प्रतिषिद्धान्नभक्षणे ब्राह्मणत्वादिदेहसम्बन्धाद्दोष एव स्यात्। तस्मान्मिथ्याज्ञानमेवाभक्ष्यभक्षणे दोषाभावज्ञानम्॥

---

प्रवृत्तो यथा ज्वरितस्याशनप्रतिषेधेऽप्यौषधं पिबेदिति तथा शास्त्राधिकारिणः सर्व्वभक्ष्याभक्षणनिषेधेऽपि प्राणविदो विशेषविधिर्नोपलभ्यते। तथा च तस्य भक्षणं दुःसाध्यमित्यर्थः॥ प्रतिप्रसवाभावे लब्धं दर्शयति। तस्मादिति॥ अर्थवादस्य तर्हि का गतिरित्याशङ्क्याह। अन्यविषयत्वादिति॥ तस्य स्तुतिमात्रार्थत्वान्न तद्वत् शास्त्रप्रतिषेधातिक्रम इत्यर्थः। ननु विशिष्टस्य प्राणस्य सर्व्वान्नत्वदर्शनमत्र विधीयते तथा च विदुषोऽपि तदात्मनः सर्व्वान्नभक्षणे न दोषो यथादर्शनं फलाभ्युपगमादत आह। न चेति॥ इतोऽपि सर्व्वं प्राणस्यान्नमित्येतदवष्टम्भेन प्राणविदः सर्व्वभक्षणं न विधेयमित्याह। यथा चेति॥ प्राणस्य यथोक्तस्य स्वीकारेऽपि कस्यचित् किञ्चिदन्नं जीवनहेतुरित्यत्र दृष्टान्तमाह। यथेति॥ तथा सर्व्वप्राणिषु व्यवस्थयान्नसम्बन्धे दार्ष्टान्तिकमाह। तथेति॥ प्राणविदोऽपि कार्य्यकरणवतो निषेधातिक्रमायोगे फलितमाह। तस्मादिति॥

स्तत्तोऽन्नमापो वास इति न ह वा अस्यानन्नं जग्धं भवति नान्नं परिगृहीतं य एवमेतदन्न-

आपो वास इत्यापो भक्ष्यमाणा वासःस्थानीया स्तवाच्च च प्राणस्यापो वास इत्येतद्दर्शनं विधीयते। न वासः कार्य आपो विनियोक्तुं शक्याः। तस्माद्यथा प्राप्ते ऽब्भक्षणे दर्शनमात्रं कर्तव्यम्। न ह वै अस्य सर्वं प्राण-स्यान्नमित्येवंविदो नन्नमनदनीयं जग्धं भुक्तं भवति ह। यद्यप्यनेनानदनीयं भुक्तमदनीयं भुक्तमदनीयमेव भुक्तं स्यान्न तु तत्कृतदोषेण लिप्यत इत्येतद्विद्यास्तुतिरियवो चाम। तथा नानन्नं प्रतिगृहीतं यद्यप्यप्रतिग्राह्यं हत्यादि प्रतिगृहीतं स्यात्तद्यन्नमेव प्रतिग्राह्यं प्रतिगृहीतं स्यात्त-दप्यन्नमेव स्यात्तच्चाप्यप्रतिग्राह्यप्रतिग्रहदोषेण न लिप्यत इति स्तुत्यर्थमेव। य एवमेतदन्नस्य प्राणस्यान्न वेद।

---

वाक्यान्तरमादाय व्याकरोति। आप इति॥ स्मार्तादाचमनादन्य-देव श्रौतमाचमनमन्यतोऽप्राप्तं विधेयं तदर्थमिदं वाक्यमिति केचित्॥ तान् प्रत्याह। अत्र चेति वासः कार्यं परिधानम्॥ तत्र साक्षादपां विनियोगासंभवे प्राप्तमर्थमाह। तस्मादिति॥ यदिदं किञ्चेत्यादावुक्तं दृष्टिविधेरर्थवादमादाय व्याचष्टे। नेत्यादिना॥ ननु अनुकर्षणमन्व-यार्थमुक्ता वाक्यार्थमाह। यद्यपीति॥ अभक्ष्यभक्षणं तर्हि स्वीकृत-मिति चेन्नेत्याह। इत्येतदिति॥ यथा प्राणविदो नान्नं भुक्तं भवति तथेत्येतदन्नमतस्तर्हि प्राणविदो दुष्प्रतिग्रहोऽपीत्याशङ्क्याह। तत्रापीति॥ असत्प्रतिग्रहे प्राप्ते ऽपीत्यर्थः। किमित्ययं स्तुत्यार्थवादस्योपसंहारार्थः। उक्तमेवार्थं चोद्यसमाधिभ्यां समर्थयते। नन्वित्यादिना। यथा प्राप्तं

स्यान्नं वेद तद्विद्वाꣳसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वाचामन्त्येतमेव तदनमनग्नं कुर्व्वन्तो मन्यन्ते ॥ २ ॥

फलन्तु प्राणात्मभाव एव न त्वेतत्फलाभिप्रायेण किं तर्हि स्तुत्यभिप्रायेणेति। नन्वेतदेव फलं कस्मान्न भवति। न प्राणात्मदर्शिनः प्राणात्मभाव एव फलम्। तत्र च प्राणात्मभूतस्य सर्वात्मनोऽनदनीयमन्नमेव। तथा प्रतिग्राह्यमपि प्रतिग्राह्यमेवेति। यथा प्राप्तमेवोपादाय विद्या स्तूयते। तेनैव फलविधिस्वरूपतावाक्यस्य। यस्मादापो वासः प्राणस्य तस्माद्विद्वांसो ब्राह्मणाः श्रोत्रिया अधीतवेदा अशिष्यन्तो भोक्ष्यमाणा आचामन्त्यापः अशित्वा चाचामन्ति भुक्त्वाचोत्तरकालमपो भक्षयन्ति। तत्र तेषामाचामतां कोऽभिप्राय इत्याह। एतमेवानं प्राणमनग्नं कुर्व्वन्तो मन्यन्ते अस्ति चैतद्यो यस्मै वासो ददाति स तमनग्नं करोमीति

प्रकृतिशाकटशाखाप्रतिपन्नरूपमनतिक्रम्येति यावत् वाक्यस्य विद्यास्तुतित्वे फलितमाह। अत इति॥ यदुक्तमापो वास इति तस्य शेषभूतं ग्रन्थमुत्थाप्य व्याचष्टे। यस्मादिति॥ तत्रेत्यशनात् प्रागूर्द्धकालोक्तिः॥ उक्तेऽभिप्राये लोकप्रसिद्धिमनुकूलयति। अस्ति चेति॥ तत्रैव वाक्योपक्रमस्यानुकूल्यं दर्शयति। प्राणस्येति॥ किमर्थमिदं सोपक्रमं वाक्यमित्यपेक्षायामत्र चेत्यादावुक्तं स्मारयति। यद्य इति॥ दृष्टिविधानमसहमानः शङ्कते नन्विति॥ अस्तु प्रायार्थमाचमनं प्राणपरिधानार्थं चेत्याशङ्क्याह। तत्रेति॥ कुल्याप्रणयनन्यायेन द्विकरणत्वाविरोधमाशङ्क्याह। न चेति॥ तत्र प्रत्यक्षत्वात्कार्य्यभेदस्याविरोधेऽपि प्रकृते प्रमाणाभावाद्द्विकरणत्वानुपपत्तिरित्यभिप्रेत्योक्तमुपपादयति। यदिति॥ ननु स्मार्त्तं द्विस-

न्तो मन्यन्ते ॥१४॥ अष्टमस्य प्रथमं ब्राह्मणं ॥१॥

---

ञ्चि मन्यते। प्राणस्य चापोवास इति श्रुतम्। यदपः पिबामि तत्प्राणस्य वासो ददामीति विज्ञानं कर्त्तव्यमित्येवमर्थमेतत्। ननु भक्ष्यमाणो भुक्तवांश्च प्रयतो भविष्यामीत्याचामति तत्र प्राणस्यानग्नताकरणार्थत्वे च द्विः कार्य्यताऽऽचमनस्य स्यात्। न च कार्य्यद्वयमाचमनस्यैकस्य युक्तम्। यदि प्रायत्यर्थं नानग्नतार्थमथानग्नतार्थं न प्रायत्यर्थं यस्मादेवं तस्माद्द्वितीयाचमनान्तरं प्राणस्यानग्नताकरणाय भवतु। न क्रियाद्वित्वोपपत्तेर्द्वे ह्येते क्रिये भोक्ष्यमाणस्य भुक्तवतश्च यदाचमनं स्मृतिविहितं तत्प्रायत्यर्थं भवति क्रियामात्रमेव न तु तत्र प्रायत्ये दर्शनाद्यपेक्षते। तत्र चाचमनाङ्गभूतास्वप्सु वासोविज्ञानं प्राणस्येति कर्त्तव्यतया चोद्यते। न तु तस्मिन् क्रियमाण आचमनस्य प्राय-

---

नस्य प्रायत्यार्थं तथैवानग्नतार्थत्वं प्रकृतवाक्यादधिगतं तथाच कथं द्विकरणत्वमप्रामाणिकमित्याशङ्क्य वाक्यस्य विषयान्तरं दर्शयति। यस्मादिति॥ द्विकरणत्वदोषमुक्तं दूषयति। नेत्यादिना॥ तच्चाचमनं दर्शननिरपेक्षमित्याह। क्रियामात्रमेवेति॥ नन्वाचमने फलभूतं प्रायत्यं दर्शनसापेक्षमिति चेन्नेत्याह। नन्विति॥ क्रियाया एव तदाधानसामर्थ्यादित्यर्थः। तत्रेत्याचमने शुद्ध्यर्थे क्रियान्तरे सतीत्यर्थः॥ प्राणविज्ञानप्रकरणे वासोविज्ञानं चोद्यते चेद्वाक्यभेदः स्यादित्याशङ्क्याह। प्राणस्येति॥ दर्शनस्य विज्ञानवदिति चकारार्थः। आचमनीयास्वप्सु वासोविज्ञानं क्रियते चेत्कथमाचमनस्य प्रायत्यार्थत्वमित्याशङ्क्याह। न त्विति॥ द्विकरणत्व-

त्यार्थता वाध्यते क्रियान्तरत्वादाचमनस्य। तस्माद्भोक्ष्यमाणस्य भुक्तवतश्च यदाचमनं तत्रापो वासः प्राणस्येति दर्शनमात्रं विधीयते। अप्राप्तत्वादन्यतः॥ १४ ॥ अष्टमस्य प्रथमं ब्राह्मणम्॥ १ ॥

श्वेतकेतुर्ह वा आरुणेय इत्यस्य सम्बन्धः। खिलधिकारोऽयं तत्र यदनुक्तं तदुच्यते। सप्तमाध्यायान्ते ज्ञानकर्म्मसमुच्चयकारिणाग्नेर्मार्गयाचनं कृतम्। अग्ने नय सुपथेति। तत्रानेकेषां पथां सद्भावो मन्त्रेण सामर्थ्यात्प्रदर्शितः सुपथेति विशेषणात्पन्थानश्च कृतविपाकप्रतिपत्तिमार्गाः। वक्ष्यति च यस्मृत्वेत्यादि। ते च कति कर्म्मविपाकप्रतिपत्तिमार्गा इति सर्व्वसंसारगत्युपसंहारार्थोऽयमारम्भः। एतावती हि संसारगतिरेतावान्कर्म्मविपाकः

दोषाभावे फलितं दर्शनंविधिमुपसंहरति। तस्मादिति॥ अप्राप्तत्वाद्वासोदृष्टेर्विधिव्यतिरेकेण प्राप्त्यभावादृष्टेश्चात्र प्रकृतत्वात्कार्य्याख्यानादपूर्व्वमिति च न्यायादित्यर्थः॥ १४ ॥ अष्टमोऽध्यायस्य प्रथमं ब्राह्मणम्॥१॥

ब्राह्मणान्तरमादाय तस्य पूर्व्वेण सम्बन्धं प्रतिजानीते। श्वेतकेतुरिति॥ कोऽसौ सम्बन्धस्तमाह। खिलेति॥ तत्र कर्म्मकाण्डे ज्ञानकाण्डे वा यद्वस्तु प्राधान्येन नोक्तं तदस्मिन्काण्डे वक्तव्यमस्य खिलाधिकारत्वात्तया च पूर्व्वमनूक्तं वक्तुमिदं ब्राह्मणमित्यर्थः। वक्तव्यशेषं दर्शयितुं वृत्तं कीर्त्तयति। सप्तमेति समुच्चयकारिणो मुमूर्षोरग्निप्रार्थनेऽपि किं स्यादित्याशङ्क्याह। तत्रेति॥ अध्यायावसानं सप्तम्यर्थः॥ सामर्थ्यमेव दर्शयति। सुपथेतीति॥ विशेषणवशाद्बहवो मार्गा भान्तु किं पुनस्तेषां स्वरूपं तदाह। पन्थानश्चेति॥ तत्र वाक्यशेषमनुकूलयति॥ वक्ष्यति चेति॥ सम्बन्धाकाङ्क्षाद्वारा समनन्तरब्राह्मणतात्पर्य्यमाह, तत्रेति

स्वाभाविकस्य शास्त्रीयस्य च विज्ञानस्येति। यद्यपि द्वया ह प्राजापत्या इत्यत्र स्वाभाविकः पाप्मा सूचितः। न च तस्येदं कार्यमिति विपाकः प्रदर्शितः। शास्त्रीयस्यैव तु विपाकः प्रदर्शितस्त्र्यन्नात्मप्रतिपत्त्यन्तेन ब्रह्मविद्याप्रारम्भे तद्वैराग्यस्य विवक्षितत्वात्। तथापि केवलेन कर्मणा पितृलोको विद्यया विद्यासंयुक्तेन च कर्मणा देवलोक इत्युक्तम्। तत्र केन मार्गेण पितृलोकं प्रतिपद्यते केन वा देवलोक इति नोक्तम्। तच्चेह खिलप्रकरणेऽशेषतो वक्तव्यमित्यत आरभ्यते। अन्ते च सर्वोपसंहारः शास्त्रस्य

---

उपसंह्रियमाणां संसारगतिमेव परिच्छिनत्ति। एतावती हीति॥ दक्षिणोदगधोगत्यात्मिकेति यावत्। कर्मविपाकस्तर्हि कुत्रोपसंह्रियते तत्राह। स्वाभाविकस्येति॥ इतिशब्दो यथोक्तसंसारगत्यतिरिक्तकर्मविपाकाभावात्तदुपसंहारार्थः एवायमारम्भ इत्युपसंहारार्थः। तथोद्गीथाधिकारे सर्वोऽपि कर्मविपाकोऽनर्थ एवेत्युक्तत्वात्परिशिष्टसंसारगत्यभावात्कथं खिलकाण्डे तदिह शिष्टिरत आह। यद्यपीति॥ कस्तर्हि विपाकस्तत्रोक्तस्तत्राह। शास्त्रीयस्येति॥ तत्र सुकृतविपाकस्यैवोपन्यासे हेतुमाह। ब्रह्मविद्येति। अनिष्टविपाकात्तु वैराग्यं सुकृतानभिमुख्यादेव सिद्धमिति न तत्र तद्विवक्षा। इह पुनः शास्त्रसमाप्तौ खिलाधिकारे तद्विपाकोऽप्युपसंह्रियत इति भावः। प्रकारान्तरेण सङ्गतिं वक्तुमुक्तं स्मारयति॥ तथापीति॥ शास्त्रीयविपाकविषयेऽपीत्यर्थः। उत्तरग्रन्थस्य विषयपरिशेषार्थं पातनिकामाह। तत्रेति। लोकद्वयं सप्तम्यर्थः॥ प्रागनुक्तमपि देवयानं पन्थानं कथमिति कुतो नियमसिद्धिस्तत्राह। तच्चेति॥ वक्तव्यशेषस्य सत्त्वे फलितमाह॥ इत्यत इति॥ तर्हि प्रागनुक्तं तद्देवयानादि वक्तव्यं प्रागेवोक्तं तु ब्रह्मलोकादि कस्मादुच्यते तत्राह। ते चेति॥ शास्त्रस्यान्ते चेति सम्बन्धः। इतश्चेदं ब्राह्मणमगतार्थत्वादारभ्यमित्याह। अपि चेति॥

श्वेतकेतुर्ह वा आरुणेयः पञ्चालानां परि-

दृष्टः । अपि चैतावदमृतत्वमित्युक्तं न कर्म्मणोऽमृतत्वाऽऽशास्तीति च तत्र हेतुर्नोक्तस्तदर्थश्चायमारम्भः । यस्मादियं कर्म्मणो गतिर्न नित्यं ऽमृतत्वं व्यापारोऽस्ति तस्मादेतावदेवामृतत्वसाधनमिति सामर्थ्याद्धेतुत्वं सम्पद्यते । अपि चोक्तमग्निहोत्रे न त्वेवैतयोस्त्वमुत्क्रान्तिं न गतिं न प्रतिष्ठां न तृप्तिं न पुनरावृत्तिं न लोकं प्रत्युत्थायिनं वेत्थेति । तत्र प्रतिप्रवचने ते वा एते आहुती हुते उत्क्रामत इत्यादिना आहुतेः कार्य्यमुक्तम् ॥

तच्चैतत्कर्त्तुराहुतिलक्षणस्य कर्म्मणः फलं । न हि कर्त्तारमनाश्रित्याहुतिलक्षणस्य कर्म्मणः स्वातन्त्र्येणोत्क्रान्त्यादिकार्य्यारम्भ उपपद्यते । कर्त्रर्थत्वात्कर्म्मणः कार्य्यारम्भस्य साधनाश्रयत्वाच्च कर्म्मणस्तत्राग्निहोत्रस्तुत्यर्थत्वादग्निहोत्र-

---

एतावदित्यात्मज्ञानोक्तिरमृतत्वं तत्साधनमिति यावत् । चकारादुक्तमित्यनुषङ्गः । ज्ञानमेवामृतत्वे हेतुरित्युक्तोऽर्थस्तत्रेति सप्तम्यर्थः । तदर्थो हेत्वपदेशार्थः । कथं पुनर्वक्ष्यमाणा कर्म्मगतिर्ज्ञानमेवामृतत्वसाधनमित्यत्र हेतुत्वं प्रतिपद्यते तत्राह । यस्मादिति ॥ व्यापारोऽस्ति कर्म्मण इति शेषः । सामर्थ्याज्ज्ञानातिरिक्तस्योपायस्य संसारहेतुत्वनियमादित्यर्थः । प्रकारान्तरेण ब्राह्मणतात्पर्य्यं मन्त्रमग्निहोत्रविषये जनकयाज्ञवल्क्य संवादसिद्धमर्थमनुवदन्ति । अपि चेत्यादिना ॥

तयोरग्निहोत्राङ्गयोः सायं प्रातश्चानुष्ठितयोरिति यावत् । लोकं प्रत्युत्थायिनं यजमानं परिवेष्ट्येमं लोकं प्रत्यावृत्तयोस्तयोरनुष्ठानोपचितयोः परलोकं प्रति स्वाश्रयोत्थानहेतुं परिणाममितेयत्तदिति प्र-

पद्माजगाम स आजगाम जैवलिं प्रवाहणं परि-
चारयमाणं तमुदीक्ष्याऽभ्युवाद कुमार३ इति स

स्यैव कार्य्यमित्युक्तं षट्प्रकारमपोह तु तदेव कर्त्तुः फल-
मित्युपदिश्यते। षट्प्रकारमपि कर्मफलविज्ञानस्य विव-
क्षितत्वात्तद्द्वारेण च पञ्चाग्निदर्शनमिहोत्तरमार्गप्रतिपत्ति-
साधनं विधित्सितं। एवमयं दसंसारगत्युपसंहारः। कर्मका-
ण्डस्यैषा निष्ठेत्येतच्च हि दर्शयितुमाख्यायिकां प्रणयति
श्वेतकेतुर्ह वा नामतोऽरुणस्यापत्यमारुणिस्तस्यापत्यमा-
रुणेयः। ह शब्द ऐतिह्यार्थः। पित्रानुशिष्टः सन् आत्मनो
यशःप्रथनाय पञ्चालानां परिषदमाजगाम। पञ्चालाः

अग्निहोत्रविषये जनकेन याज्ञवल्क्यं प्रत्युक्तमिति सम्बन्धः।
तत्रेत्याक्षेपगतप्रश्नषट्कोक्तिः। ननु फलवतोऽश्रवणात्कस्येदमाहुतिफलम्।
न हि तत्स्वतन्त्रं सम्भवति तत्राह। तस्येति। कर्त्रवाचिपदाभावादा-
हुत्यपूर्वस्यैवोत्क्रान्त्यादिकार्यारम्भकत्वात् तत्र कर्त्रगामिकफलमुक्तमित्या-
शङ्क्याह। न हीति॥ किञ्च कारकाश्रयत्वात्कर्मणो युक्तं तत्फलस्य
कर्त्रगामित्वमित्याह। साधनेति॥ स्वातन्त्र्यासम्भवादाहुत्योः स्वकर्त्र-
कयोरेव गत्यादि विवक्षितं चेत्तर्हि कथं तत्र केवलाहुत्योर्गत्यादि गम्यते
तत्राह॥ तत्रेति॥ अग्निहोत्रप्रकरणं सप्तम्यर्थः। अग्निहोत्रस्तुत्यर्थ-
त्वात् प्रश्नप्रतिवचनरूपस्य सन्दर्भस्येति शेषः॥ भवत्वत्र मग्निहोत्र-
प्रकरणस्थितिः प्रकृते तु किमायातं तत्राह॥ इह त्विति॥ किमिति
विद्याप्रकरणे कर्मफलविज्ञानं विवक्ष्यते तत्राह। तद्द्वारेणेति॥ ब्राह्म-
णारम्भमुपपादितमुपसंहरति। एवमिति॥ संसारगत्युपसंहारेण कर्म-
विपाकस्य सर्वस्योपसंहारः सिद्धो भवति। तदतिरिक्ततद्विपाकाभावादि-
त्याह। कर्मकाण्डस्येति। यथोक्तं वस्तु दर्शयितुं ब्राह्मणमारभते श्वेत

भो३ इति प्रतिशुश्रावानुशिष्टोऽन्वसि पितेत्यो-
मिति होवाच ॥ १ ॥

---

प्रसिद्धास्तेषां परिषदमागत्य जित्वा राज्ञोऽपि परिषदं जेष्यामीति गर्वेणाजगाम । जीवलस्यापत्यं जैवलिं पञ्चालराजं प्रवाहणनामानं स्वभृत्यैः परिचारयमाणमात्मनः परिचरणं कारयन्तमित्येतत्स राजा पूर्वमेव तस्य विद्याभिमानगर्वं श्रुत्वा विनेतव्योऽयमिति मत्वा तमुद्दिश्योक्तवानागतमात्रमेवाभ्युत्थाय अभ्युक्तवान् । कुमारा३ इति सम्बोध्य भर्त्सनार्थां च प्लुतिः । स प्रतिशुश्राव भो ३ इति ३ भो ३ इत्येवमुक्तः । प्रतिरूपमपि चत्रियं प्रत्युक्तवान् क्रुद्धः सन्ननुशिष्टोऽनुशासितोऽसि भवसि पित्रा इत्युवाच राजा । प्रत्याहेतर ओमिति बाढमनुशिष्टोऽस्मि पृच्छ यदि संशयस्ते ॥ १ ॥

---

किमित्याख्यायिका प्रणीयते तत्राह । इतीयतद्दुर्जयमिति ॥ सर्वमेव पूर्वोक्तं तु दर्शयितुमिच्छन् वेदः सुखावबोधार्थमाख्यायिकां करोतीत्यर्थः । यदा कदाचिदतिक्रान्ते काले इत्तार्थद्योतित्वं निपातस्य दर्शयति । हशब्द इति ॥ यशः प्रथनं विद्वत्सु स्वकीयविद्यासामर्थ्यख्यापनं प्रतिद्वन्द्विविद्वज्जनविजिष्टत्वेनेति शेषः । कचिज्जयस्य प्रायत्यत्वं गर्वे हेतुः किमिति राजा श्वेतकेतुमागतमात्रं तदीयाभिप्रायमप्रतिपद्य तिरस्कुर्वन्निव सम्बोधितवानित्याशङ्क्याह । स राजेति ॥ सम्बोध्य भर्त्सनं कृतवानिति शेषः । तदर्थद्योतीति पदमिह नास्तीत्याशङ्क्याह । भर्त्सनार्थेति ॥ भो इति प्रतिवचनमाचार्यं प्रत्युचितं न चत्रियं प्रति तस्य हीनत्वादित्याह । भो इतीति ॥ अप्रतिरूपवचने क्रोधं हेतुकरोति ॥ क्रुद्धः सन्निति ॥ पितुः सकाशात्तत्र लब्धानुशासनत्वे लिङ्गं नास्तीत्याशङ्क्याह । पृच्छेति ॥ १ ॥

वेत्थ यथेमाः प्रजाः प्रयत्यो विप्रतिपद्यन्ता३ इति नेति होवाच वेत्थो यथेमं लोकं पुनरापद्यन्ता३ इति नेति हैवोवाच वेत्थो यथेमं लोकं पुनः सम्पद्यन्ता३ इति नेति हैवोवाच वेत्थो यथासौ लोक एवं बहुभिः पुनः पुनः प्रयद्भिर्न

यद्येवं वेत्थ विजानासि किं यथा येन प्रकारेण इमाः प्रजाः प्रसिद्धाः प्रयत्यो म्रियमाणा विप्रतिपद्यन्ता३ इति विप्रतिपद्यन्ते विचारणार्था प्लुतिः। समानेन मार्गेण गच्छन्तीनां मार्गद्वैविध्यं यत्र भवति तत्र काश्चित्प्रजाश्चान्येन मार्गेण गच्छन्ति काश्चिदन्येनेति विप्रतिपत्तिः। यथा ताः प्रजाः विप्रतिपद्यन्ते तत्किं वेत्थेत्यर्थः। नेति होवाचेतरः। तर्हि वेत्थ उ यथा इमं लोकं पुनः पुनरापद्यन्ता ३ इति पुनरापद्यन्ते यथा पुनरागच्छन्तीमं लोकं। नेति होवाच श्वेतकेतुः। वेत्थो यथासौ लोक एवं प्रसिद्धेन न्यायेन पुनः पुनरसकृत् प्रयद्भिर्म्रियमाणैर्यथा येन प्रकारेण न सम्पूर्यता ३ इति न सम्पूर्यतोऽसौ लोकस्तत्किं वेत्थ। नेति होवाच। वेत्थो

पदार्थमुक्त्वा वाक्यार्थमाह। समानेनेति। नाडीरूपेण साधारणेन मार्गेणाभ्युदयं गच्छतां यत्र मार्गविप्रतिपत्तिस्तत्किं जानासीति प्रश्नार्थः॥ विप्रतिपत्तिमेव विशदयति। तत्रेति॥ अधिकृतप्रजानिर्द्धारणार्था सप्तमी प्रथमं प्रश्नं निगमयति॥ यथेति॥ प्रश्नान्तरमादत्ते। तर्हीति। तदेव स्फुटयति। यथेति॥ परलोकगताः प्रजाः पुनरिमं लोकं यथागच्छन्ति तथा किं वेत्थेति योजना। प्रश्नान्तरप्रतीकमुपादत्ते। वेत्थेति॥ तद्व्या-

सम्पूर्य्यता३ इति नेति हैवोवाच वेत्थो यतिथ्यामाहुतय्राण् हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्ती३ इति नेति हैवोवाच वेत्थो देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा यत्कृत्वा देवयानं वा पन्थानं प्रतिपद्यन्ते पितृ

---

यतिथ्यां यत्सङ्ख्याकायामाहुत्यामाहुतौ हुतायामापः पुरुषवाचः पुरुषस्य या वाक् सैव यासां वाक् ताः पुरुषस्य वाचो भूत्वा पुरुषशब्दवाच्या वा भूत्वा पुरुषाकारपरिणतास्तदा पुरुषवाचो भवन्ति। समुत्थाय सम्यगुत्थायोद्भूताः सत्यो वदन्तो इति नेति होवाच। यद्येवं वेत्थ उ देवयानस्य पथो मार्गस्य प्रतिपदं प्रतिपद्यते येन सा प्रतिपत् तां प्रतिपदं पितृयाणस्य वा प्रतिपदं प्रतिपच्छब्दवाच्यमर्थमाह। यत्कर्म्म कृत्वा यथा विशिष्टं कर्म्म कृत्वेत्यर्थः। देवयानं वा पन्थानं मार्गं प्रतिपद्यन्ते पितृयाणं न वा यत्कर्म्म कृत्वा प्रतिपद्यन्ते तत्कर्म्म प्रतिपदुच्यते तां प्रतिपदं किं वेत्थ देवलोकपितृलोकप्रतिपत्तिसाधनं किं वेत्थेत्यर्थः। अत्राऽप्यस्यार्थस्य प्रकाशकस्त्वमेतस्य वचो

---

करोति। एतमिति॥ प्रसिद्धो न्यायो जरादिमरणहेतुः। प्रश्नान्तरमुत्थाप्य व्याचष्टे। वेत्थेत्यादिना॥ पुरुषशब्दवाच्या भूत्वा समुत्थाय वदन्तीति सम्बन्धः। कथमपां पुरुषशब्दवाच्यत्वं तदाह। यदेति॥ प्रश्नान्तरमवतारयति॥ यद्येवं वेत्थेति॥ पितृयाणस्य वा प्रतिपदं वेत्थेति सम्बन्धः। यत्कृत्वा प्रतिपद्यन्ते पन्थानं तत्कर्म प्रति-

याणं वा पि ह्रि न ऋषेर्वचः श्रुतं द्वे सृती अशृ-
णवं पितॄणामहं देवानामुत मर्त्यानां ताभ्या-
मिदं विश्वमेजत्समेति यदन्तरा पितरं मातर-
ञ्चेति नाहमत एकं च न वेदेति होवाच ॥ २ ॥

वाक्यं नः श्रुतमस्ति। मन्त्रोऽप्यस्यार्थस्य प्रकाशको विद्यत इत्यर्थः। कोऽसौ मन्त्र इत्युच्यते। द्वे सृती द्वौ मार्गावशृणवं श्रुतवानस्मि। तयोरेका पितॄणां प्रापिका पितृलोकसम्बद्धा तया सृत्या पितृलोकं प्राप्नोतीत्यर्थः। अहमशृणवमिति व्यवहितेन सम्बन्धः। देवानामुतापि देवानां सम्बन्धिन्यन्या देवान्प्रापयति सा। के पुनरुभाभ्यां सृतिभ्यां पितॄन् देवान् गच्छन्तीत्युच्यते। उतापि मर्त्यानां मनुष्याणां सम्बन्धिनी। मनुष्या एव सृतिभ्यां गच्छन्तीत्यर्थः। ताभ्यां सृतिभ्यामिदं विश्वं समस्तमेजद्गच्छन् समेति सम्यग्गच्छति। ते च द्वे सृती यदन्तरा ययोरन्तरा यदन्तरा पितरं मातरञ्च मातापित्रोरन्तरा मध्य इत्यर्थः। कौ तौ मातापितरौ द्यावापृथिव्यावण्डकपाले। इयं वै माता असौ पितेति हि व्याख्यातं ब्राह्मणेन अण्डकपालयोर्मध्ये संसारविषये एवैते सृती नात्यन्तिका-

पदिति योजना। वाक्यार्थमाह। देवयानमिति। उक्तमर्थं सङ्क्षिप्याह। देवलोकेति। मार्गद्वयमेव नास्ति। त्वया तत्प्रश्नमात्रेण पृच्छ्यते। तत्राह। अपीति॥ कृत्स्नेति कर्म्मविपाकप्रक्रियोक्तिः। अस्यार्थस्य मार्गद्वयस्यैतद्॥ तेषामेव मार्गद्वयेऽधिकृतत्वमिति वक्तुं होतव्यतां तदेव

अथैनं वसतयोपमन्त्रयाञ्चक्रे नादृत्य वसतिं कुमारः प्रदुद्राव स आजगाम पितरं तꣳ होवाचेति वाव किल नो भवान् पुरानुशिष्टानवोचदिति कथꣳ सुमेध इति पञ्च मा प्रश्नान् राजन्यबन्धुरप्राक्षीत्

मृतत्वगमनाय। इतरश्च आह नाहमतोऽस्मात् ग्रसमुदायादेकञ्च न एकमपि प्रश्नं न वेद नाहं वेदेति होवाच श्वेतकेतुः ॥ २॥

अथानन्तरमपनीय विद्याभिमानगर्वमेनं प्रकृतं श्वेतकेतुं वसत्या वसतिप्रयोजनेनोपमन्त्रयाञ्चक्रे। इह वसन्तु भवन्तः पाद्यमर्घ्यमानीयतामित्युपमन्त्रणं कृतवान् राजा अनादृत्य तां वसतिं कुमारः श्वेतकेतुः प्रदुद्राव प्रतिगतवान् पितरं प्रति। स चाजगाम पितरमागत्य चोवाच तं कथमिति वाव किल एवं किल नोऽस्मान् भवान् पुरा समावर्त्तनकालेऽनुशिष्टान् सर्वाभिर्विद्याभिरेवावोचदिति। सोपालम्भं पुत्रस्य वचः श्रुत्वाऽऽह पिता। कथं केन प्रकारेण तव दुःखमुपजातं। हे सुमेधः शोभना मेधा यस्येति सुमेधाः शृणु मम यथा वृत्तं पञ्च पञ्चसङ्ख्याकान्

स्फुटयति। ताभ्यामिति॥ विश्वं साध्यसाधनात्मकं सङ्गच्छते। गन्तव्यत्वेन गन्तृत्वेन चेति शेषः। प्रकृतमन्त्रव्याख्यानग्रन्थो ब्राह्मणशब्दार्थः। यदान्तरेत्यादौ विवक्षितमर्थमाह। नाण्डकपालयोरिति ॥२॥

श्वेतकेतोरभिमाननिवृत्तिद्योतनार्थं बहुवचनम्। राजन्यदत्तवसतिं अनादरे हेतुमाह। कुमार इति। एवं किलेति राजपराभवलिङ्गकं पि-

न्यबन्धुरप्राक्षीत्ततो नैकञ्चन वेदेति कतमे त इतीम इति ह प्रतीकान्युदाजहार ॥ ३ ॥

स होवाच तथा न स्त्वं तात जानीथाः यथा यदहं किञ्चन वेद सर्व्वमहं तत्तुभ्यमवोचं प्रेहि-तु तत्र प्रतीत्य ब्रह्मचर्य्यं वत्स्याव इति भवानेव गच्छत्विति स आजगाम गौतमो यत्र प्रवाहणस्य

प्रश्नान् मां राजन्यबन्धुः। राजन्या बन्धवोऽस्येति परि-भवबचनमेतत्। राजन्यबन्धुरिति अप्राक्षीत् पृष्टवांस्तत-स्तस्मात् एकञ्चन एकमपि न वेद विज्ञातवानस्मि। कतमे ते राज्ञा पृष्टाः प्रश्ना इति। इमे त इति हि प्रतीकानि मुखानि प्रश्नानामुदाजहारोदाहृतवान् ॥ ३ ॥

स होवाच पिता पुत्रं क्रुद्धमुपशमयंस्तथा तेन प्रकारेण नोऽस्मान्त्वाह तात वत्स जानीथा गृह्णीया यथा यदहं किञ्च विज्ञानजातं वेद सर्व्वं तुभ्यमवोचमित्येव जा-नीथाः। कोऽन्यो मम प्रियतरोऽस्ति त्वत्तो यदर्थं रचिष्ये। अहमप्येतन्न जानामि यद्राज्ञा पृष्टं तस्मात्प्रेह्यागच्छ। तत्र गत्वा राज्ञि ब्रह्मचर्य्यं वत्स्यावो विद्यार्थमिति स आह। भवानेव गच्छत्विति। नाहं तस्य मुखं निरीक्षितुमुत्सहे।

त्ववचसो मृषात्वं द्योत्यते अज्ञानाधीनं दुःखं तत्रासम्भावितमिति सूच यति। सुमेध इति ॥ ३ ॥

सत्यं किञ्चित्तदुक्तं किञ्चिद्विज्ञानमन्यस्मै प्रियतमाय दातुं रक्षित-मित्याशङ्क्याह। कोऽन्य इति ॥ राज्ञा यत्पृष्टं तन्मया न विज्ञातं तदा

जैवलेरास तस्मा आसनमाहृत्योदकमाहारयाञ्चकाराथ हास्मा अर्घ्यं चकार तꣳ होवाच वरं भवते गौतमाय दद्म इति ॥ ४ ॥ स होवाच प्रतिज्ञातो म एष वरो यान्तु कुमारस्यान्ते वाचमभाषथास्तां मे ब्रूहीति ॥ ५ ॥ स होवाच दैवेषु वै गौतमो तद्वरेषु मानुषाणां ब्रूहीति ॥ ६ ॥

---

स आजगाम गौतमो गोत्रतो गौतम आरुणिर्यत्र प्रवाहणस्य जैवलेरास आसनमास्थायिकाम्। तस्मै गौतमायागतायासनमनुरूपमाहृत्योदकं भृत्यैराहारयाञ्चकार। अथ ह अस्मा अस्मै अर्घ्यं पुरोधसा कृतवान् मन्त्रवन्मधुपर्कञ्च कृत्वा चैवं पूजां तं होवाच वरं भगवते गौतमाय तुभ्यं दद्म इति गोश्वादिलक्षणं ॥ ४ ॥ स होवाच गौतमः प्रतिज्ञातो मे ममैष वरस्त्वयाऽस्यां प्रतिज्ञायां दृढीकुर्व्वात्मानं। यान्तु वाचं कुमारस्य मम पुत्रस्यान्ते समीपे वाचमभाषथाः प्रश्नरूपां तामेव ब्रूहि स एव नो वर इति ॥ ५ ॥ स होवाच राजा दैवेषु वरेषु तद्वै गौतम यत्त्वं प्रार्थयसे। मानुषाणामन्यतमं प्रार्थय वरम् ॥ ६ ॥

---

च तस्मिन्विषये त्वया वञ्चितोऽस्मीत्याशङ्क्याह। अहमपीति ॥ तर्हि तत्त्वज्ञानं कथं साध्यतामित्याशङ्क्याह। तस्मादिति ॥ विवक्षितविद्याया गौतमं विवक्षित्वाह। अस्यामिति ॥ तदिति सामान्योक्त्या वरो निर्दिश्यते ॥ ४ ॥ ५ ॥ ६ ॥

स होवाच विज्ञायते हास्ति हिरण्यस्यापात्तं गो अश्वानां दासीनां प्रवाराणां परिधानस्य मा नो भवान् बहोरनन्तस्यापर्य्यन्तस्याभ्यवदान्यो ऽभूदिति स वै गौतम तीर्थेनेच्छासा इत्युपैम्यहं

स होवाच गौतमो भवतापि विज्ञायते ममाऽप्यस्ति सः। न तेन प्रार्थितेन कृत्यं मम यत् त्वं दित्ससि मानुषं वरं। यस्मान्ममाप्यस्ति हिरण्यस्य प्रभूतस्यापात्तं प्राप्तं गोश्वानामपात्तमस्तीति सर्व्वत्रानुषङ्गो दासीनां प्रवाराणां परिवाराणां परिधानस्य। न च यन्मम विद्यमानं त्वत्तः प्रार्थनीयं त्वया वा देयं। प्रतिज्ञातश्च वरस्त्वया त्वमेव जानीषे यदत्र युक्तं प्रतिज्ञा रक्षणीया न वेति। मम पुनरयमभिप्रायो माभूत्नोऽस्मानति अस्मानेव केवलान् प्रति भवान् सर्व्वत्र वदान्यो भूत्वा अवदान्यो माभूत्कदर्य्यो माभूदित्यर्थः। बहोः प्रभूतस्यानन्तफलस्येत्येतत्। अपर्य्यन्तस्यापरिसमाप्तिकस्य पुत्रपौत्रादिगामिकस्येत्येतत्। ईदृशस्य वित्तस्य मां प्रत्येव केवलमदाता माभूद्भवान्। न चात्यन्तादेयमस्ति भवत एव-

ममास्ति स इति यदुक्तं तदुपपादयति। यस्मादित्यादिना॥ न च यन्ममेत्यत्र तस्मादिति पठितव्यम्। किन्तर्हि मया कर्त्तव्यमित्याशङ्क्याह। प्रतिज्ञातश्चेति॥ यत्तत्राभिप्रेतं तदहं करोमीत्याशङ्क्याह। ममेति। माभूदित्यन्वयं दर्शयन् प्रतीकमादाय व्याचष्टे। नोऽस्मानिति॥ वदान्यो दानशीलो विभवे सत्यदाता कदर्य इति भेदः॥ परिशिष्टं भागं व्याकुर्वन्वाक्यार्थमाह। बहोरित्यादिना॥ मां प्रत्येवेति नियमस्य कृत्यं दर्शयति। त्वं वै इति॥ कोऽसौ न्यायस्तत्राह। शास्त्रेति॥ उपसद-

भवन्तमिति वाचा ह स्म वै पूर्व्व उपयन्ति स होपायनकीर्त्त्या उवास ॥ ७ ॥

स होवाच तथा नस्त्वं गौतम मापराधास्तव च पितामहा यथेयं विद्ये तः पर्व्वन्न कस्मिंश्च न

---

मुक्त आह। स त्वं वै हे गौतम तीर्थेन न्यायेन शास्त्रविहितेन विद्यां मत्त इच्छासे इच्छस्वाम्मित्युक्तो गौतम आह। तीर्थें उपैमुपगच्छामि शिष्यत्वेनाहं भवन्तमिति। वाचा ह स्म एव किल पूर्व्वे ब्राह्मणाः क्षत्रियान् विद्यार्थिनः सन्तो वैश्यान्वा क्षत्रिया वा वैश्यानापद्युपयन्ति शिष्यवृत्त्या ह्युपगच्छन्ति नोपायनशुश्रूषाभिः। अतः स गौतमः ह उपायनकीर्त्त्या उपगमनकीर्त्तनमात्रेणैवोवासोपितवान्नोपनयनं चकार ॥ ७ ॥

एवं गौतमेनापदन्तर उक्ते स होवाच राजा पीड़ितं मत्वा क्षामयंस्तथा नोऽस्मान् प्रति मापराधा अपराधं माकार्षीरस्मदीयोऽपराधो न ग्रहीतव्य इत्यर्थः। तव च पितामहा अस्मत्पितामहेषु यथाऽपराधं न जगृहुस्तथा पिता

---

नवाक्यं शास्त्रमित्युच्यते। गौतमो राजानं प्रति शिष्यत्ववृत्तिं कुर्वाणः शास्त्रार्थविरोधमाचरतीत्याशङ्क्याह। वाचा हेति ॥ आपदि समादधिकाद्वा विद्याप्राप्तिसम्भवावस्थायामित्यर्थः। उपायनमुपगमनं पादोपसर्पणमिति यावत् ॥ ७ ॥

विद्याराहित्यापेक्षया न हीनशिष्यभावोपगतिरापदन्तरा। तयाशङ्कार्थमेव विशदयति। तव चेति ॥ सन्तु पितामहा यथा तथा किमस्मा-

ब्राह्मण उवास तां त्वहं तुभ्यं वक्ष्यामि को हि त्वैवं ब्रुवन्तमर्हति प्रत्याख्यातुमिति ॥ ८ ॥

असौ वै लोकोऽग्निर्गौतम तस्यादित्य एव

महानां हृत्तं अस्मास्वपि भवता रक्षणीयमित्यर्थः। यथा इयं विद्या त्वया प्रार्थिता इतस्त्वत्प्रदानात्पूर्वं प्राङ्न कस्मिंश्चिदपि ब्राह्मणे उवासोषितवती तथा त्वमपि जानीषे सर्व्वदा क्षत्रियपरम्परयेयं विद्या गता सा स्थितिर्मयापि रक्षणीया यदि शक्यत इत्युक्तं देवेषु गौतम तद्वरेषु मानुषाणां ब्रूहीति न पुनस्तवादेयो वर इतीतः परं न शक्यते रक्षितुम्। तामपि विद्यामहं तुभ्यं वक्ष्यामि। को ह्यन्यो हि यस्मादेवं ब्रुवन्तं त्वामर्हति प्रत्याख्यातुं न वक्ष्यामीति। अहं पुनः कथं न वक्ष्ये तुभ्यमिति ॥ ८ ॥

असौ वै लोकोऽग्निर्गौतमेत्यादिचतुर्थः प्रश्नः प्राथम्येन निर्णीयते। क्रमभङ्गस्तु तन्निर्णयाय कृतादितर-

कमित्याशङ्क्याह। पितामहानामिति ॥ किमिति तर्हीयं विद्या झटिति मह्यं नोपदिश्यते तत्राह। न कस्मिंश्चिदिति ॥ तर्हि भवता सा स्थितीर-क्षतामहन्तु यथागतं गमिष्यामीत्याशङ्क्याह। इतः परमिति ॥ तथाहं शिष्योऽस्मीत्येवं ब्रुवन्तं अन्योऽपि न वक्ष्यामीति यस्माच्च प्रत्याख्यातुमर्हति तस्मादहं पुनस्तुभ्यं कथं न वक्ष्ये किन्तु वक्ष्याम्येव विद्यामित्युपपादयति। को हीत्यादिना ॥ ८ ॥

असावित्यादिना यतिष्यामित्यादिचतुर्थप्रश्नस्य प्राथम्येन निर्णये क्रम भङ्गः स्यात्तत्र च कारणं वाच्यमित्याशङ्क्याह। क्रमभङ्गस्त्विति ॥ मनुष्य-जन्मस्थितिलयानां चतुर्थप्रश्ननिर्णयाधीनतया तस्य प्राधान्यात्। प्राधान्ये

समिद्रश्मयो धूमोऽहरर्चिर्दिशोऽङ्गारा अवान्तर-दिशो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः

प्रश्ननिर्णयस्यामी द्योर्लोकोऽग्निर्हे गौतम द्युलोके ऽग्निदृष्टिरनग्नौ विधीयते। यथा योषित्पुरुषयोस्तस्य द्युलोकाग्नेरादित्य एव समित्समिन्धनात्। आदित्येन हि समिध्यतेऽसौ लोकः। रश्मयो धूमः समिध उत्थानसामान्यात्। आदित्याद्धि रश्मयो निर्गताः। समिधश्च धूमो लोक उत्तिष्ठति। अहरर्चिः प्रकाशस्य सामान्यात्। दिशोऽङ्गारा उपशमसामान्यात्। अवान्तर-दिशो विस्फुलिङ्गा विस्फुलिङ्गवद्विक्षेपात्। तस्मिन्नेवंगुणवि-शिष्टे द्युलोकाग्नौ देवा इन्द्रादयः श्रद्धां जुह्वत्याहुतिद्रव्य-स्थानीयां प्रक्षिपन्ति। तस्या आहुत्यै आहुतेः सोमो राजा पितॄणां ब्राह्मणानाञ्च सम्भवति। तत्र के देवाः कथं जुह्वति किं वा श्रद्धाख्यं हविरित्यत उक्तम-

सत्यर्थक्रममाश्रित्याविवक्षितस्य पाठक्रमस्य भङ्ग इत्यर्थः। इन्द्रादीनां कर्मानधिकारित्वात् द्युलोकस्य चाहवनीयत्वाप्रसिद्धा होमाधारत्वायो-गात्प्रत्ययस्य च श्रद्धाया हौम्यत्वानुपपत्तेस्तस्मिन्नित्यादि वाक्यमयुक्तमिति शङ्कते। तत्रेति॥ होमकर्म सप्तम्यर्थः। अस्य ब्राह्मणस्य सम्बन्धमन्ये समाधानमस्य चोद्यस्यास्माभिरुक्तमित्याह। अत इति। तदेव दर्शयितुमग्निहोत्रप्रकरणे वृत्तं स्मारयति। नन्विति। किन्तदुक्तमिति चेत्तदाह। ते वा इति। आहुत्योः स्वतन्त्रयोरुत्क्रान्त्यादि कथमित्याशङ्क्याह। तत्रेति॥ यजमानस्य स्मृतिकालः सप्तम्यर्थः। समाधानयोरेव तयोरुत्क्रा-न्तिर्न स्वतन्त्रयोरेवेत्येतदुपपादयति। यथेत्यादिना॥ इहेति जीवदवस्थो-

श्रद्धां जुह्वति तस्या आहुत्यै सोमो राजा सम्भवति ॥९॥

स्ताभिः सम्बन्धेन त्वेवैतयोरुत्क्रान्तिमित्यादिपदार्थषट्कनिर्णयार्थमग्निहोत्रे उक्तम्। ते एव एते अग्निहोत्राहुती हुते सती उत्क्रामतः। तेऽन्तरिक्षमाविशतः। तेऽन्तरिक्षमाहवनीयं कुर्व्वाते वायुं समिधां मरीचीरेव शुक्रामाहुतिम्। तेऽन्तरिक्षं तर्पयतः। ते तत उत्क्रामतः। ते दिवमाविशतः। ते दिवमाहवनीयं कुर्व्वाते। आदित्यं समिधमित्येवमाद्युक्तं। तत्राग्निहोत्राहुती समाधने एवोत्क्रामतः। यथेह यैः साधनैर्विशिष्टे एते आहवनीयाग्निसमिद्धूमाङ्गारविस्फुलिङ्गाहुतिद्रव्यैस्ते तथैवोत्क्रामतोऽस्माल्लोकादमुं लोकम्। तत्राग्निरग्नित्वेन समित्समित्वेन धूमो धूमत्वेनाङ्गाराऽङ्गारत्वेन विस्फुलिङ्गा विस्फुलिङ्गत्वेन आहुतिद्रव्यमपि पय आद्याहुतिद्रव्यत्वेनैव सर्गादावव्याकृतावस्थायामपि

च्यते ॥ नन्वेनामग्न्यादीनामव्याकृतभावापन्नत्वे नाविशेषप्रसङ्गाच्च तैः सहाहुत्योरुत्क्रान्त्यादिसिद्धिरित्याशङ्क्याह। तत्राग्निरिति ॥ नाथःदूर्द्धमपि प्रातिस्विकशक्तिरूपेणाग्न्यादिरवतिष्ठते तथा चाविशेषप्रसङ्गाभावादाहुत्योः साधनयोरेवोत्क्रान्त्यादिसिद्धिरित्यर्थः। यथोक्तयोराहुत्योरुत्क्रान्त्यादि समर्थ्यते नाग्निहोत्राद्यपूर्वस्य जगदारम्भकत्वमुक्तं भवतीत्याह। तद्विद्यमानमिति ॥ विद्यमानत्वमेव विशदयति। अपूर्व्वञ्चेति ॥ यथा यथोदितया विधया कथमपि पूर्व्वकल्पीयं कर्म्म प्रलयदशायामव्याकृतात्मना स्थितं पुनर्जगदारम्भकं तथा तथापीदानीन्तनमग्निहोत्रादिकं कर्म कार्यं जगदारम्भकं भविष्यतीत्याशङ्क्याह। तथैवेति ॥ विमतमारम्भकं तच्छ–

परेण सूक्ष्मेणात्मना व्यवतिष्ठते तद्विद्यमानमेव ससाधनमग्निहोत्रलक्षणं कर्म्मापूर्व्वेणात्मना व्यवस्थितं सत्त्युनर्व्याकरणकाले तथैवान्तरिक्षादीनामाहवनीयाद्यग्न्यादिभावं कुर्वद्विपरिणमेत तथैवेदानीमप्यग्निहोत्राख्यं कर्म्म।

एवमग्निहोत्राहुत्यपूर्वविपरिणामात्मकं जगत् सर्वमित्याहुत्योरेव सूत्यर्थेनोत्क्रान्त्यादयो लोकप्रत्युत्थायिताः षट् पदार्थाः कर्म्मप्रकरणेऽधस्तान्निर्णीताः। इह तु कर्त्तुः कर्म्मविपाकविवक्षायां द्युलोकाग्न्याद्यारभ्य पञ्चाग्निदर्शनमुत्तरमार्गप्रतिपत्तिसाधनं विशिष्टकर्म्मफलोपभोगाय विधित्सितमिति। द्युलोकाग्न्यादिदर्शनं प्रस्तूयते। तत्र य आध्यात्मिकाः प्राणाः इहाग्निहोत्रस्य होतारस्त एवाधिदैविकत्वेन परिणताः सन्तः इन्द्रादयो भवन्ति त एव तत्र होतारो द्युलोकाग्नौ। ते एवेहाग्निहोत्रस्य फल-

---

क्तिमत्वात्सम्भृतिपक्षवदिति विधित्सितमिति भावः। अग्निहोत्रप्रकरणस्यार्थं सङ्गृहीतमुपसंहरति। एवमिति॥

उक्तमुपजीव्य प्रकृतब्राह्मणप्रवृत्तिप्रकारं दर्शयति। इहत्विति॥ उत्तरमार्गप्रतिपत्तिसाधनं विधित्सितमिति सम्बन्धः। किमित्युत्तरमार्गप्रतिपत्तिस्तत्राह। विशिष्टेति ब्राह्मणप्रवृत्तिमभिधायासौ वै लोकोऽग्निरित्यादिवाक्यप्रवृत्तिप्रकारमाह। इति द्युलोकेति। इयं ब्राह्मणे स्थिते सतीतरत्। अस्त्वेवं तथापि के देवा इति प्रश्नस्य किमुत्तरं तत्राह। तत्रेति। उक्तनीत्या पञ्चाग्निदर्शने प्रस्तुते सतीतरत्र इहेति व्यवहारभूमिपरः। कथं तेषां तत्र होतृत्वं तदाह। ते चेति॥ तथापि कथं द्युलोकेऽग्नौ तेषां होतृत्वं तदाह। ते एवेति॥ तत्फल-

भोगायाग्निहोत्रं हुतवन्तस्त एव फलपरिणामकालेऽपि तत्फलभोक्तृत्वात्तत्र तत्र होतृत्वं प्रतिपद्यन्ते तथा तथा विपरिणममाना देवशब्दवाच्याः सन्तोऽत्र च यत्पयो-द्रव्यमग्निहोत्रकर्म्माश्रयभूतमिहाहवनीये प्रक्षिप्तमग्निना भक्षितमदृष्टेन सूक्ष्मेण रूपेण विपरिणतं सह कर्त्रा-यजमानेनेमं लोकं धूमादिक्रमेणान्तरिक्षमन्तरिक्षाद्द्यु-लोकमाविशन्ति ताः सूक्ष्मा आप आहुतिकार्य्यभूता अग्निहोत्रसमवायिन्यः कर्तृसहिताः श्रद्धाशब्दवाच्याः सोमलोके कर्त्तुः शरीरान्तरारम्भाय द्युलोकं प्रविशन्त्यो हूयन्त इत्युच्यन्तेऽतस्तत्र द्युलोकं प्रविश्य सोममण्डले कर्त्तुः शरीरमारभन्ते। तदेतदुच्यते। देवाः श्रद्धां जुह्वति। तस्या आहुत्यै सोमो राजा सम्भवतीति श्रद्धा वा आप इति श्रुतेः। वेत्थ यतिथ्यामाहुत्यां हुतायामापः पुरुषवाचो

भोक्तृत्वादित्यत्र तच्छब्दोऽग्निहोत्रादिकर्मविषयस्तद्भोक्तृत्वे च प्राणानां जीवोपाधित्वाद्वधेयम्। तथा तथा द्युपर्जन्यादिसम्बन्धयोग्याकारे-णेति यावत्। के देवा इति प्रश्नो निर्णीतः। सम्प्रत्यवशिष्टं प्रश्नद्वयं निर्णेतुमाह॥ अत्र चेति। जीवदवस्थायामिति यावत्। सह कर्त्रे-त्यत्र तच्छब्द एष्टव्यः। अमुं लोकमाविशतीति सम्बन्धः। आवेशप्रका-रमाह। धूमादीति॥ कथमेतावता किं पुनः श्रद्धाख्यं हविरिति प्रश्नो निर्णीतस्तत्राह। ताः सूक्ष्मा इति॥ तथापि कथं जुह्वतीति प्रश्नस्य कथं निर्णयस्तत्राह। सोमलोक इति॥ तथापि तस्या आहुतेः सोमो राजा सम्भवतीति कथमुच्यते तत्राह। तास्तत्रेति॥ निर्णीते-ऽर्थे श्रुतिमवतारयति। तदेतदिति॥ कथं पुनरापः श्रद्धाशब्दवाच्या न हि लोके श्रद्धाशब्दं तासु प्रयुञ्जते तत्राह। श्रद्धेति॥ उपक्रमवशाद-

भूत्वा समुत्थाय वदन्तीति प्रश्नः। तस्य निर्णयविषयेऽसौ वै लोकोऽग्निरिति प्रस्तुतम्। तस्मादापः कर्म्मसमवायिन्यः कर्त्तुः शरीरारम्भिकाः श्रद्धाशब्दवाच्या इति निश्चीयते। भूयस्त्वादापः पुरुषवाच इति व्यपदेशो न त्वितराणि भूतानि न सन्तीति। कर्म्मप्रयुक्तश्च शरीरारम्भः। कर्म्म चाप्समवायि। ततश्चापां प्राधान्यं शरीरकर्त्तृत्वे। तेन चापः पुरुषवाच इति व्यपदेशः। कर्म्मकृतो हि जन्मारम्भःसर्वत्र। तत्र यद्यप्यग्निहोत्राहुतिस्तुतिद्वारेणोत्क्रान्त्यादयःप्रस्तुताः षट्पदार्था अग्निहोत्रे तथापि वैदिकानि सर्व्वाण्येव कर्म्माण्यग्निहोत्रप्रभृतीनि लक्ष्यन्ते। दाराग्निसम्बन्धं हि पाङ्क्तं कर्म्म प्रस्तुत्योक्तम्। कर्म्मणा पितृलोक इति वक्ष्यति च। अथ ये यज्ञेन दानेन तपसा लोकान् जयन्तीति॥ ८॥

---

ष्यापोऽत्र श्रद्धाशब्दवाच्या इत्याह। वेत्थेति॥ अपामेव पुरुषशब्दवाच्यानां शरीरारम्भकत्वान्न भूतान्तराणामिति कृत्वा तस्य पञ्चभूतारब्धत्वाभ्युपगमभङ्गत्वं स्यादिति चेन्नेत्याह। भूयस्त्वादिति॥ अपां पुरुषशब्दवाच्यत्वे हेत्वन्तरमाह॥ कर्मेति॥ अथ कर्मप्रयुक्तमपि प्रकृष्टं जन्मास्ति तत्कथमपां सर्वत्र पुरुषशब्दवाच्यत्वं तत्राह। कर्म्मकृतो हीति॥ अन्यथा तत्र तत्र सुखदुःखप्रभेदोपभोगसम्भवादिति भावः। यदि कर्मापूर्वशब्दवाच्यं भूतसूक्ष्मं सर्व्वत्र शरीरारम्भकं कथं तर्हि पूर्व्वमग्निहोत्राहुत्योरेव वक्तव्ये जगदारम्भकत्वमुक्तं तत्राह॥ तत्रेति। लक्ष्यन्तेऽग्निहोत्राहुत्येति शेषः। लक्षणायां पूर्व्वोत्तरवाक्ययोर्गमकत्वमाह। दाराग्नीति॥ ८

पर्जन्यो वाऽग्निर्गौतम तस्य संवत्सर एव समिदभ्राणि धूमो विद्युदर्चिरशनिरङ्गारा ह्रादुनयो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳ राजानं जुह्वति तस्या आहुत्यै वृष्टिः सम्भवति ॥ १० ॥

पर्जन्यो वाऽग्निर्गौतम । द्वितीय आहुत्याधारः। आहुत्योरावृत्तिक्रमेण पर्जन्यो नाम वृष्ट्युपकरणाभिमानिनो देवतात्मा। तस्य संवत्सर एव समित् संवत्सरेण हि शरदादिभिर्ग्रीष्मान्तैः स्वावयवैर्विपरिवर्त्तमानेन पर्जन्योऽग्निर्दीप्यते अभ्राणि धूमः । धूमप्रभवत्वाद्धूमवदुपलक्ष्यत्वाद्वा। विद्युदर्चिः। प्रकाशसामान्यात्। अशनिरङ्गाराः। उपशान्तकाठिन्यसामान्याभ्याम्। ह्रादुनयो ह्रादुनयः स्तनयित्नुशब्दा विस्फुलिङ्गाः। विक्षेपवानेकत्वसामान्यात्। तस्मिन्नेतस्मिन्नित्याहुत्यधिकरणनिर्देशः । देवा इति त एव होतारः सोमं राजानं जुह्वति । योऽसौ द्युलोकाग्नौ श्रद्धायां हुतायामभिनिर्वृत्तः सोमः स द्वितीये पर्जन्याग्नौ हूयते। तस्याश्च सोमाहुतेर्वृष्टिः सम्भवति ॥ १० ॥

व्याख्याताहुत्याधारमेव निरूप्याहुत्याधारान्तराणि ब्राह्मणेन निरूपयति ॥ पर्जन्यो वा अग्निरित्यादिना । कुतोऽस्य द्वितीयत्वमिति चेद्द्वित्वोक्तमाहुत्योरितेरुक्ति स्वल्वभ्राणां धूमप्रभवत्वे गाथा । धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघ इति ॥ १० ॥

अयं वै लोकोऽग्निर्गौतम तस्य पृथिव्येव समिद्ग्निर्धूमो रात्रिरर्चिश्चन्द्रमाऽङ्गारा नक्षत्राणि विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टिं जुह्वति तस्या आहुत्या अन्नꣳ सम्भवति ॥ ११ ॥

अयं वै लोकोऽग्निर्गौतम। अयं लोक इति प्राणिजन्मोपभोगाश्रयः क्रियाकारकफलविशिष्टः स तृतीयोऽग्निः। तस्याग्नेः पृथिव्येव समित्। पृथिव्या ह्ययं लोकोऽनेकप्राण्युपभोगसम्पन्नया समिध्यते। अग्निर्धूमः। पृथिव्याश्रयोत्थानसामान्यात्। पार्थिवं धनद्रव्यमाश्रित्याग्निरुत्तिष्ठति। यथा समिदाश्रयेण धूमः। रात्रिरर्चिः। समित्सम्बन्धप्रभवसामान्यात्। अग्नेः समित्सम्बन्धेन ह्यर्चिःसम्भवति। तथा पृथिवी समित्सम्बन्धेन शर्वरी। पृथिवीच्छायां हि शार्वरं तम आचक्षते। चन्द्रमा अङ्गाराः। तत्प्रभवत्वसामान्यात्। अर्चिषो ह्यङ्गाराःप्रभवन्ति। तथा रात्रौ चन्द्रमा अङ्गारा उपशान्तत्वसामान्याद्वा। नक्षत्राणि विस्फुलिङ्गाः। विस्फुलिङ्गवद्विक्षेपसामान्यात्। तस्मिन्नेतस्मिन्नित्यादि पूर्ववत् वृष्टिं जुह्वति।

---

एतल्लोकपृथिव्योर्देहदेहिभावेन भेद इत्याह॥ पृथिवीच्छायां हीति। एतानि हि चन्द्रं रात्रेस्तमसो मृत्योर्बिभ्यतमन्तरायन्निति श्रुतेः। रात्रेस्तमस्त्वावगमात्। तस्य च मृत्युत्वं तमश्छाया मृत्युमेव तत्तमश्छायान्तरतीति भूच्छायात्वम्। तमो राहुस्थानम्। तच्च भूच्छायेति हि प्रसिद्धम्। उक्तं तत्र पृथिवीच्छायां निर्मितं मण्डलाकृति स्वर्भानोस्तु बृहत्स्थानं

पुरुषो वाऽग्निर्गौतम तस्य व्यात्तमेव समित्प्राणो धूमो वागर्च्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुत्यै रेतः सम्भवति ॥ १२ ॥

तस्या आहुतेरन्नं सम्भवति । वृष्टिप्रभवत्वस्य प्रसिद्धत्वाद्व्रीहियवादेरन्नस्य ॥ ११ ॥

पुरुषो वाऽग्निर्गौतम प्रसिद्धः । शिरःपाण्यादिमान् पुरुषश्चतुर्थोऽग्निस्तस्य व्यात्तं विवृतं मुखं समित् । विवृतेन हि मुखेन दीप्यते पुरुषो वचनस्वाध्यायादौ । यथा समिधाग्निः प्राणो धूमस्तदुत्थानसामान्यात् । मुखाद्धि प्राण उत्तिष्ठति । वाक्शब्दोऽर्च्चिर्व्यञ्जकत्वसामान्यात् । अर्च्चिश्च व्यञ्जकं । वाक्शब्दोऽभिधेयव्यञ्जकः । चक्षुरङ्गारा उपशमसामान्यात्प्रकाशाश्रयत्वाद्वा । श्रोत्रं विस्फुलिङ्गा विक्षेपसामान्यात्तस्मिन्नन्नं जुह्वति । ननु नैव देवा अन्नमिह जुह्वतो दृश्यन्ते । नैष दोषः । प्राणानां देवत्वोपपत्तेरधिदैवमिन्द्रादयो देवास्त एवाध्यात्मं प्राणास्ते च अन्नस्य पुरुषे प्रक्षेप्तारः । तस्या आहुते रेतः सम्भवति अन्नपरिणामो हि रेतः ॥ १२ ॥

---

तृतीयं यत्सोममयमिति स्रुतेरित्यर्थः । सोमचन्द्रमसोराश्रयाश्रयिभावेन भेदः ॥ ११ ॥

योग्यानुपलब्धिविरोधमाशङ्कते । नन्विति ॥ इहेति पुरुषाग्निनिर्देशः । यदुक्तं विरोधं निराकरोति ॥ नैष दोष इति ॥ उपपत्तिमेव दर्शयति । अधिदैवमिति ॥ १२ ॥

योषा वा अग्निर्गौतम तस्या उपस्थ एव समि-
ल्लोमानि धूमो योनिरर्चिर्यदन्तःकरोति तेऽङ्गारा
अभिनन्दा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा
रेतो जुह्वति तस्या आहुत्यै पुरुषः सम्भवति स
जीवति यावज्जीवत्यथ यदा म्रियते ॥ १३ ॥

---

योषा वा अग्निर्गौतम । योषेति स्त्रीपञ्चमी होमाधिकरणोग्निस्तस्या उपस्थ एव समित् । तेन हि सा समिध्यते । लोमानि धूमस्तदुत्थानसामान्यात् । योनिरर्चिर्वर्णसामान्यात् । यदन्तः करोति तेऽङ्गारा अन्तःकरणं मैथुनव्यापारास्तेऽङ्गारा वीर्य्योपशमहेतुत्वसामान्यात् । वीर्य्याद्युपशमकारणं मैथुनम् । तथाऽङ्गारभावोऽग्नेरुपशमकारणं । अभिनन्दाः सुखलवाः क्षुद्रत्वसामान्याद्विस्फुलिङ्गास्तस्मिन्रेतो जुह्वति । तस्या आहुतेः पुरुषः सम्भवति । एवं द्युपर्जन्यायंलोकपुरुषयोषाग्निषु क्रमेण हूयमानाः सोमवृष्ट्यन्नरेतोभावेन स्थूलतारतम्यक्रममापद्यमानाः श्रद्धाशब्दवाच्या आपः पुरुषशब्दमारभन्ते । यः प्रश्नश्चतुर्थो वेत्थ यतिथ्यामाहुत्यां हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्तीति स एष निर्णीतः । पञ्चम्यामाहुतौ योषाग्नौ हुतायां रेतो भूत्वा आपः पुरुषवाचो भवन्तीति ॥ स

---

तस्या आहुत्यै पुरुषः सम्भवतीति वाक्यं व्याकरोति ॥ एवमिति ॥ पञ्चाग्निदर्शनस्य चतुर्थप्रश्ननिर्णायकत्वेन प्रकृतोपयोगं दर्शयति । यः प्रश्न इति । निर्णयप्रकारमनुवदति । पञ्चम्यामिति ॥ यथोक्तनीत्या जाते

अथैनमग्नये हरन्तितस्य ाग्निरेवाग्निर्भवति समित्समिद्धूमो धूमोऽर्च्चिरर्च्चिरङ्गारा अङ्गारा विस्फुलिङ्गा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः पुरुषं जुह्वति तस्या आहुतेत्र पुरुषो भास्वरवर्णः सम्भवति ॥ १४ ॥

---

पुरुष एवं क्रमेण जातो जीवति । कियन्तं कालमितुच्यते । यावज्जीवति यावदस्मिञ्छरीरे स्थितिनिमित्तं कर्म्म विद्यते तावदित्यर्थः । अथ तद्दये यदा यस्मिन्काले म्रियते । १३ ॥

अथ तदा एनं मृतमग्नयेऽन्त्यर्थमेवान्त्याहुत्यै हरन्ति ऋत्विजस्तस्याहुतिभूतस्य प्रसिद्धोऽग्निरेव होमाधिकरणं न परिकल्प्योऽग्निः । प्रसिद्धैव समित्समिद्धूमो धूमोऽर्च्चिरर्च्चिरङ्गारा अङ्गारा विस्फुलिङ्गा विस्फुलिङ्गा यथा प्रसिद्धमेव सर्वमित्यर्थः । तस्मिन्पुरुषमन्त्याहुतिं जुह्वति तस्या आहुत्यै आहुतेः पुरुषो भास्वरवर्णोऽतिशयदीप्तिमान्निषेकादिभिरन्त्याहुत्यन्तैः कर्म्मभिः संस्कृतत्वात्सम्भवति निष्पद्यते ॥ १४ ॥

---

देहे कथं पुरुषस्य जीवनकालो नियम्यते तत्राह । स पुरुष इति ॥१३॥

पञ्चाग्निक्रमेण जातोऽग्निलयश्चाह तेनाग्न्यात्मेति ध्यानसिद्धये षष्ठमग्निमन्त्याहुत्यधिकरणं प्रस्तौति । अथेति ॥ जीवननिमित्तकर्मक्षयस्तच्छब्दो वक्ष्यमाणक्रीडा देहव्यावृत्तये भास्वरवर्णविशेषणं दीप्त्यतिशयवत्त्वे हेतुमाह । निषेकादिभिरिति ॥ १४ ॥

## ते य एवमेतद्विदुः

इदानीं प्रथमप्रश्ननिराकरणार्थमाह ते। के। य एवं यथोक्तं पञ्चाग्निदर्शनमेतद्विदुः। एवशब्दादग्निसमिद्धूमार्चिरङ्गारविस्फुलिङ्गश्रद्धादिविशिष्टाः पञ्चाग्नयो निर्दिष्टास्तानेवमेतान् पञ्चाग्नीन् विदुरित्यर्थः। नन्वग्निहोत्राहुतिदर्शनविषयमेवैतद्दर्शनं। तत्र ह्युत्क्रान्त्यादिपदार्थषट्कनिर्णये दिवमेवाहवनीयं कुर्वाते इत्यादि। इहाप्यमुष्य लोकस्याग्नित्वमादित्यस्य च समित्त्वमित्यादि बहु साम्यम्। तस्मात्तद्रूपमेवैतद्दर्शनमिति। न यतिथ्यामिति प्रश्नप्रतिवचनपरिग्रहाद्यतिथ्यामित्यस्य प्रश्नस्य प्रति–

---

पञ्चाग्निविदो गतिं विवक्षुरुत्तरग्रन्थमवतारयति। इदानीमिति॥ ये विदुस्तेऽर्चिरूपमभिसम्भवन्तीति सम्बन्धः॥ एवं शब्दस्य प्रकृते पञ्चाग्निपरामर्शित्वं स्फुटीकर्त्तुं चोदयति। नन्विति॥ एवद्विदुरिति श्रुतमेतद्दर्शनमित्युक्तं तदेवेदमिति प्रत्यभिज्ञायकं दर्शयति॥ तत्र हीति॥ आदिपदमादित्यं समिधमित्यादि सङ्ग्रहीतुं रश्मीनां धूमत्वमह्नोरर्चिष्ट्वमित्यादि सङ्ग्रहीतुं द्वितीयमादिपदम्। प्रत्यभिज्ञाफलमाह। तस्मादिति॥ प्रश्नप्रतिवचनविषयस्यैव प्रकृतस्यैवंशब्देन परामर्शात् न षट्प्रश्नीयं दर्शनमिह परामृष्टमिति परिहरति। नेत्यादिना॥ सङ्गृहीतं परिहारं विवृणोति। यतिथ्यामित्यस्येति॥ व्यधिकरणे षष्ठ्या यावद्वस्तुपरिग्रहो विषय इत्यर्थः। षट्प्रश्नीयमेव व्यवहितं दर्शनमत्र परामृष्टं चेत्तदा यतिथ्यामिति प्रश्नो व्यर्थः स्यात्। षट्प्रश्नीयनिर्णीतदर्शनशेषभूतदर्शनस्य प्रश्नादृते प्रतिवचनसम्भवादित्याह। अन्यथेति॥ किञ्च पूर्वस्मिन् ग्रन्थे पर्यवशिष्टतया पञ्चत्वसङ्ख्यया निश्चितत्वात्तदवच्छिन्नाः साम्प्रदिकाग्नय एवात्रैवंशब्देन परामृष्टुमुचिता इत्याह। निर्ज्ञातत्वाच्चेति॥

दर्शनस्य यावदेव परिग्रहस्तावदेवैवंशब्देन परामृष्टं युक्त-मन्यथा प्रश्नानर्थक्यान्निर्ज्ञातत्वाच्च सङ्ख्याया अग्नय एव वक्तव्याः। अथ निर्ज्ञातमप्यनूद्यते। यथा प्राप्तस्यैवानुवा-दनं युक्तम्। नन्वसौ लोकोऽग्निरित्यर्थोपलक्षणार्थस्तथा द्युाद्येनाग्न्येन चोपलक्षणं युक्तं श्रुत्यन्तराच्च। समाने हि प्रकरणे छान्दोग्यश्रुतौ पञ्चाग्नीन् वेदेति पञ्चसङ्ख्याया एवोपादानादनग्निहोत्रशेषमेतत्पञ्चाग्निदर्शनं। यत्त्वग्निस-मिदादिसामान्यं तदग्निहोत्रस्तुत्यर्थमित्यवोचाम। तस्मा-न्नोत्क्रान्त्यादिपदार्थषट्कपरिज्ञानादर्चिरादिप्रतिपत्तिव-

---

अग्निहोत्रप्रकरणे निर्ज्ञातमेवाग्न्यादि पूर्वग्रन्थेऽप्यनूद्यते तथा चाग्निहो-त्रदर्शनमव्यवहितमेवंशब्देन किं परामृष्टमिति शङ्कते। अथेति॥ अग्नि-होत्रदर्शनं पूर्वग्रन्थेऽनूद्यते चेत्तत्प्रकरणे प्राप्तं रूपमनतिक्रम्य वान्तरि-क्षादेरप्यनुवदनं स्याच्च तु तद्वैपरीत्येनानुवदनं युक्तम्॥ अनुवादस्य प्रतीवादस्यापेक्षत्वात्। न चान्तरिक्षाद्यनूद्यते तस्मादेवंशब्दो नाग्निहो-त्रपरामर्शीति परिहरति। यथा प्राप्तस्येति॥ द्युलोकादिवादस्यान्तरिक्षा-द्युपलक्षणार्थत्वात् पूर्वस्यानुवादत्वसम्भवादेवंशब्दस्याग्निहोत्रविषयत्वसिद्धि-रिति चोदयति। नन्विति॥ प्रापकाभावादुपलक्षणपक्षायोगेऽप्यङ्गीकृत्य पञ्चाग्निनिर्देशवैयर्थ्येन दूषयति। तथापीति॥ इतश्च स्वतन्त्रमेव पञ्चा-ग्निदर्शनमेवंशब्दपरामृष्टमित्याह। श्रुत्यन्तराच्चेति॥ समिदादिसादृश्यद-र्शनादग्निहोत्रदर्शनशेषभूतदर्शनमेवैतद्दर्शनमित्युक्तमनूद्य दूषयति। यत्त्वित्यादिना॥ अवोचामाग्निहोत्रस्तुत्यर्थत्वादग्निहोत्रस्यैव कार्यमित्युप-क्रान्तमित्यत्रेति। शेषः॥ एवंशब्देनाग्निहोत्रपरामर्शासम्भवे फलित-माह। तस्मादिति॥ तच्छब्दार्थमेव स्फुटयति। एवमितीति॥ प्रकृतं पञ्चाग्निदर्शनं तच्च स्वातन्त्र्यमित्युक्तं तद्वतोऽर्चिरादिप्रतिपत्तिर्न केवलं कर्मिणामित्यर्थः। प्रश्नपूर्वकं वेदितृविशेषं निर्दिशति। के पुनरित्या-

दिति प्रकृतोपादानेनार्चिरादिप्रतिपत्तिविधानात् । के पुनस्ते य एवं विदुः । गृहस्था एव । ननु तेषां यज्ञादिसाधनेन धूमादिप्रतिपत्तिर्विधित्सिता नानेवंविदामपि गृहस्थानां यज्ञादिसाधनोपपत्तेः । भिक्षुवानप्रस्थयोश्चारण्यसम्बन्धेन ग्रहणात् । गृहस्थकर्म्मसम्बद्धाच्च पञ्चाग्निदर्शनस्य अतो नापि ब्रह्मचारिण एवं विदुरिति गृह्यन्ते । तेषान्तूत्तरे पथि प्रवेशः । स्मृतिप्रामाण्यात् । अष्टाशीतिसहस्राणामृषीणामूर्द्ध्वरेतसां । उत्तरेणार्य्यम्णः पन्थास्तेऽमृतत्वं हि भेजिरे ॥

---

दिना ॥ गृहस्थानां यज्ञादीनां पितृयाणप्रतिपत्तेर्वक्ष्यमाणत्वाच्च देवयाने पथि प्रवेशोऽस्तीति शङ्कते । नन्विति ॥ पञ्चाग्निविदां गृहस्थानां देवयाने पथ्यधिकारस्तद्रहितानान्तु तेषामेव यज्ञादिना पितृयाणप्राप्तिरिति विभागोपपत्तेर्न वाक्ययोर्विरोधोऽस्तीति समाधत्ते । नेत्यादिना ॥ एवंविदुरिति सामान्यवचनात्परिव्राजकादेरप्यत्र ग्रहणं स्यादिति चेन्नेत्याह । भिक्षुवानप्रस्थयोश्चेति ॥ विधान्तरेण तयोरुत्तरमार्गे प्रवेशाच्च पञ्चाग्निविषयत्वेन ग्रहणं पुनरुक्तेरित्यर्थः । गृहस्थानामेव पञ्चाग्निविदां तत्र ग्रहणमित्यत्र हेत्वन्तरमाह । गृहस्थेति ॥ ब्रह्मचारिणां तर्हि ग्रहणं भविष्यति नेत्याह । अत इति ॥ पञ्चाग्निदर्शनस्य गृहस्थकर्मसम्बन्धादेवेतेत्यतत् । कथं तर्हि नैष्ठिकब्रह्मचारिणां देवयाने पथि प्रवेशस्तत्राह । तेषामिति ॥ अर्य्यम्णः सम्बन्धी यः पन्थास्तमाश्रित्यते योत्तरेण पथा । ते यथोक्तसङ्ख्या ऋषयः सापेक्षममृतत्वं प्राप्ता इति स्मृत्यर्थः ॥

आसुरायणादासुरायण आसुरेरासुरिः ॥ २ ॥
याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोऽरुणा-
दरुण उपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो
वाजश्रवा जिह्वावतो वाध्योगाज्जिह्वावान् वा-
ध्योगोऽसिताद्वार्षगणादसितो वार्षगणो हरितात्
कश्यपाद्धरितः कश्यपः शिल्पात् कश्यपाच्छिल्पः
कश्यपःकश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्वाचो वाग-
म्भिण्या अम्भिण्यादित्यादादित्यानीमानि शुक्ला-
नि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्या-
यन्ते ॥ ३ ॥ समानमा साञ्जीवीपुत्रात्साञ्जीवीपुत्रो
माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यःकौ
त्सात् कौत्सो माहित्थेर्माहित्थिर्वामकक्षायणाद्वा

---

रया आगत्याऽस्मास्वनेकधा विप्रसृतमनाद्यनन्तम् । स्वयम्भू
ब्रह्म नित्यं तस्मै ब्राह्मणे नमः । नमस्तदनुवर्त्तिभ्यो गुरुभ्यः ॥
॥ १ ॥ २ ॥ ३ ॥ ४ ॥ इत्यष्टमस्य पञ्चमं ब्राह्मणम् ॥ ५ ॥

---

तस्याधिकारिभेदात् अवान्तरभेदं दर्शयति । तच्चेति ॥ प्रजापतिमुख
प्रबन्धः प्रपञ्चः सैव परम्परा तयेति यावत् । तस्य परमात्मस्वरूपं
स्वयम्भुत्वमभिदधाति । अनादीति ॥ तस्याऽपौरुषेयत्वेनासम्भावितदोष-
तयाऽप्रामाण्यमनभिप्रेत्य विशिनष्टि । नित्यमिति ॥ आदिमध्यान्तेषु कृत-
मङ्गला ग्रन्थाः प्रचारिणो भवन्तीति मन्वानः सत्वाह । तस्मै ब्रह्मणे नम
इति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ अष्टमस्य पञ्चमं ब्राह्मणम् ॥ ५ ॥

मकच्चायना: शाण्डिल्याच्छाण्डिल्यो वात्स्या-
द्वात्स्य: कुश्रे: कुश्रिर्यज्ञवचसो राजस्तम्बाय-
नाद्यज्ञवचा राजस्तम्बायनस्तुराक्कावषेयात्तुर:
कावषेय: प्रजापते: प्रजापतिर्ब्रह्मणो ब्रह्म
स्वयम्भु ब्रह्मणे नम: ॥ ३ ॥ इत्यष्टमस्य पञ्चमं
ब्राह्मणम् ॥ ५ ॥ ॥ इति वाजसनेयके बृहदा-
रण्यकेऽष्टमोऽध्याय: ॥ उपनिषत्सु षष्ठोऽध्याय:
समाप्त: ॥ ओं तत्सत् ॥

---

ओं तत्सत् ॥ इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य पर-
महंसपरिव्राजकाचार्य्यस्य श्रीशङ्करभगवत: कृतायां बृहदा-
रण्यकटीकायां अष्टमोऽध्याय: समाप्त: ॥ उपनिषद्भाष्ये
षष्ठोऽध्याय: ॥ ओं तत्सत् ॥

---

नमो जन्मादिसम्बन्धिविघ्नविध्वंसहेतवे ।
हरये परमानन्दपरिज्ञानवपुष्मते ॥ १ ॥
नमस्त्वयनसन्दोहसरसीरुहभानवे ।
गुरवे परपचौघध्वान्तध्वंसपटीयसे ॥ २ ॥

इति श्रीपरमहंसपरिव्राजकशुद्धानन्दपूज्यपादशिष्यभगवदानन्द-
ज्ञानकृतायां बृहदारण्यकभाष्यटीकायामष्टमोऽध्याय: । उपनिषद्भा-
ष्यटीकायां षष्ठोऽध्याय: ॥ ओं तत्सत् ॥ समाप्तश्चायं ग्रन्थ: ॥ श्रीपरमे-
श्वर: प्रियताम् ॥

